# महाभारत - कर्ण पर्व

# ॥ महाभारत कर्णपर्व ॥

## धृतराष्ट्रसंजयसंवादः

### अध्याय ००१

वैशंपायन उवाच ॥

ततो द्रोणे हते राजन्दुर्योधनमुखा नृपाः ।
भृशमुद्विग्नमनसो द्रोणपुत्रमुपागमन् ॥ ००१ ॥

ते द्रोणमुपशोचन्तः कश्मलाभिहतौजसः ।
पर्युपासन्त शोकार्तास्ततः शारद्वतीसुतम् ॥ ००२ ॥

मुहूर्तं ते समाश्वास्य हेतुभिः शास्त्रसंमितैः ।
रात्र्यागमे महीपालाः स्वानि वेश्मानि भेजिरे ॥ ००३ ॥

विशेषतः सूतपुत्रो राजा चैव सुयोधनः ।
दुःशासनोऽथ शकुनिर्न निद्रामुपलेभिरे ॥ ००४ ॥

ते वेश्मस्वपि कौरव्य पृथ्वीशा नाप्नुवन्सुखम् ।
चिन्तयन्तः क्षयं तीव्रं निद्रां नैवोपलेभिरे ॥ ००५ ॥

सहितास्ते निशायां तु दुर्योधननिवेशने ।
अतिप्रचण्डाद्विद्वेषात्पाण्डवानां महात्मनाम् ॥ ००६ ॥

यत्तद्द्यूतपरिक्लिष्टां कृष्णामानिन्यिरे सभाम् ।
तत्स्मरन्तोऽन्वतप्यन्त भृशमुद्विग्नचेतसः ॥ ००७ ॥

चिन्तयन्तश्च पार्थानां तान्क्लेशान्द्यूतकारितान् ।
कृच्छ्रेण क्षणदां राजन्निन्युरब्दशतोपमाम् ॥ ००८ ॥

ततः प्रभाते विमले स्थिता दिष्टस्य शासने ।
चक्रुरावश्यकं सर्वे विधिदृष्टेन कर्मणा ॥ ००९ ॥

ते कृत्वावश्यकार्याणि समाश्वस्य च भारत ।
योगमाज्ञापयामासुर्युद्धाय च विनिर्ययुः ॥ ०१० ॥

कर्णं सेनापतिं कृत्वा कृतकौतुकमङ्गलाः ।
वाचयित्वा द्विजश्रेष्ठान्दधिपात्रघृताक्षतैः ॥ ०११ ॥

निष्कैर्गोभिर्हिरण्येन वासोभिश्च महाधनैः ।
वर्ध्यमाना जयाशीर्भिः सूतमागधबन्दिभिः ॥ ०१२ ॥

तथैव पाण्डवा राजन्कृतसर्वाह्णिकक्रियाः ।
शिबिरान्निर्ययू राजन्युद्धाय कृतनिश्चयाः ॥ ०१३ ॥

ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
कुरूणां पाण्डवानां च परस्परवधैषिणाम् ॥ ०१४ ॥

तयोर्द्वे दिवसे युद्धं कुरुपाण्डवसेनयोः ।
कर्णे सेनापतौ राजन्नभूदद्भुतदर्शनम् ॥ ०१५ ॥

ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे वृषः ।

पश्यतां धार्तराष्ट्राणां फल्गुनेन निपातितः ॥ ०१६ ॥

ततस्तत्सञ्जयः सर्वं गत्वा नागाह्वयं पुरम् ।
आचख्यौ धृतराष्ट्राय यद्वृत्तं कुरुजाङ्गले ॥ ०१७ ॥

जनमेजय उवाच ॥

आपगेयं हतं श्रुत्वा द्रोणं च समरे परैः ।
यो जगाम परामार्तिं वृद्धो राजाम्बिकासुतः ॥ ०१८ ॥

स श्रुत्वा निहतं कर्णं दुर्योधनहितैषिणम् ।
कथं द्विजवर प्राणानधारयत दुःखितः ॥ ०१९ ॥

यस्मिञ्जयाशां पुत्राणाममन्यत स पार्थिवः ।
तस्मिन्हते स कौरव्यः कथं प्राणानधारयत् ॥ ०२० ॥

दुर्मरं बत मन्येऽहं नृणां कृच्छ्रेऽपि वर्तताम् ।
यत्र कर्णं हतं श्रुत्वा नात्यजज्जीवितं नृपः ॥ ०२१ ॥

तथा शांतनवं वृद्धं ब्रह्मन्बाह्लिकमेव च ।
द्रोणं च सोमदत्तं च भूरिश्रवसमेव च ॥ ०२२ ॥

तथैव चान्यान्सुहृदः पुत्रपौत्रांश्च पातितान् ।
श्रुत्वा यन्नाजहात्प्राणांस्तन्मन्ये दुष्करं द्विज ॥ ०२३ ॥

एतन्मे सर्वमाचक्ष्व विस्तरेण तपोधन ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ ०२४ ॥

वैशंपायन उवाच ॥

हते कर्णे महाराज निशि गावल्गणिस्तदा ।

दीनो ययौ नागपुरमश्वैर्वातसमैर्जवे ॥ ०२५ ॥

स हास्तिनपुरं गत्वा भृशमुद्विग्नमानसः ।
जगाम धृतराष्ट्रस्य क्षयं प्रक्षीणबान्धवम् ॥ ०२६ ॥

स समुद्वीक्ष्य राजानं कश्मलाभिहतौजसम् ।
ववन्दे प्राञ्जलिर्भूत्वा मूर्ध्ना पादौ नृपस्य ह ॥ ०२७ ॥

संपूज्य च यथान्यायं धृतराष्ट्रं महीपतिम् ।
हा कष्टमिति चोक्त्वा स ततो वचनमाददे ॥ ०२८ ॥

सञ्जयोऽहं क्षितिपते कच्चिदास्ते सुखं भवान् ।
स्वदोषेणापदं प्राप्य कच्चिन्नाद्य विमुह्यसि ॥ ०२९ ॥

हितान्युक्तानि विदुरद्रोणगाङ्गेयकेशवैः ।
अगृहीतान्यनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ०३० ॥

रामनारदकण्वैश्च हितमुक्तं सभातले ।
नगृहीतमनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ०३१ ॥

सुहृदस्त्वद्धिते युक्तान्भीष्मद्रोणमुखान्परैः ।
निहतान्युधि संस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ०३२ ॥

तमेवंवादिनं राजा सूतपुत्रं कृताञ्जलिम् ।
सुदीर्घमभिनिःश्वस्य दुःखार्त इदमब्रवीत् ॥ ०३३ ॥

गाङ्गेये निहते शूरे दिव्यास्त्रवति सञ्जय ।
द्रोणे च परमेष्वासे भृशं मे व्यथितं मनः ॥ ०३४ ॥

यो रथानां सहस्राणि दंशितानां दशैव हि ।
अहन्यहनि तेजस्वी निजघ्ने वसुसंभवः ॥ ०३५ ॥

स हतो यज्ञसेनस्य पुत्रेणेह शिखण्डिना ।
पाण्डवेयाभिगुप्तेन भृशं मे व्यथितं मनः ॥ ०३६ ॥

भार्गवः प्रददौ यस्मै परमास्त्रं महात्मने ।
साक्षाद्रामेण यो बाल्ये धनुर्वेद उपाकृतः ॥ ०३७ ॥

यस्य प्रसादात्कौन्तेया राजपुत्रा महाबलाः ।
महारथत्वं संप्राप्तास्तथान्ये वसुधाधिपाः ॥ ०३८ ॥

तं द्रोणं निहतं श्रुत्वा धृष्टद्युम्नेन संयुगे ।
सत्यसंधं महेष्वासं भृशं मे व्यथितं मनः ॥ ०३९ ॥

त्रैलोक्ये यस्य शास्त्रेषु न पुमान्विद्यते समः ।
तं द्रोणं निहतं श्रुत्वा किमकुर्वत मामकाः ॥ ०४० ॥

संशप्तकानां च बले पाण्डवेन महात्मना ।
धनञ्जयेन विक्रम्य गमिते यमसादनम् ॥ ०४१ ॥

नारायणास्त्रे निहते द्रोणपुत्रस्य धीमतः ।
हतशेषेष्वनीकेषु किमकुर्वत मामकाः ॥ ०४२ ॥

विप्रद्रुतानहं मन्ये निमग्नः शोकसागरे ।
प्लवमानान्हते द्रोणे सन्ननौकानिवार्णवे ॥ ०४३ ॥

दुर्योधनस्य कर्णस्य भोजस्य कृतवर्मणः ।
मद्रराजस्य शल्यस्य द्रौणेश्चैव कृपस्य च ॥ ०४४ ॥

मत्पुत्रशेषस्य तथा तथान्येषां च सञ्जय ।
विप्रकीर्णेष्वनीकेषु मुखवर्णोऽभवत्कथम् ॥ ०४५ ॥

एतत्सर्वं यथा वृत्तं तत्त्वं गावल्गणे रणे ।
आचक्ष्व पाण्डवेयानां मामकानां च सर्वशः ॥ ०४६ ॥

सञ्जय उवाच ॥

पाण्डवेयैर्हि यद्वृत्तं कौरवेयेषु मारिष ।
तच्छ्रुत्वा मा व्यथां कार्षीर्दिष्टे न व्यथते मनः ॥ ०४७ ॥

यस्मादभावी भावी वा भवेदर्थो नरं प्रति ।
अप्राप्तौ तस्य वा प्राप्तौ न कश्चिद्व्यथते बुधः ॥ ०४८ ॥

धृतराष्ट्र उवाच ॥

न व्यथा शृण्वतः काचिद्विद्यते मम सञ्जय ।
दिष्टमेतत्पुरा मन्ये कथयस्व यथेच्छकम् ॥ ०४९ ॥

---

# अध्याय ००२

सञ्जय उवाच ॥

हते द्रोणे महेष्वासे तव पुत्रा महारथाः ।
बभूवुराश्वस्तमुखा विषण्णा गतचेतसः ॥ ००१ ॥

अवाङ्मुखाः शस्त्रभृतः सर्व एव विशां पते ।
अप्रेक्षमाणाः शोकार्ता नाभ्यभाषन्परस्परम् ॥ ००२ ॥

तान्दृष्ट्वा व्यथिताकारान्सैन्यानि तव भारत ।

ऊर्ध्वमेवाभ्यवेक्षन्त दुःखत्रस्तान्यनेकशः ॥ ००३ ॥

शस्त्राण्येषां च राजेन्द्र शोणिताक्तान्यशेषतः ।
प्राभ्रश्यन्त कराग्रेभ्यो दृष्ट्वा द्रोणं निपातितम् ॥ ००४ ॥

तानि बद्धान्यनिष्टानि लम्बमानानि भारत ।
अदृश्यन्त महाराज नक्षत्राणि यथा दिवि ॥ ००५ ॥

तथार्तं स्तिमितं दृष्ट्वा गतसत्त्वमिव स्थितम् ।
स्वं बलं तन्महाराज राजा दुर्योधनोऽब्रवीत् ॥ ००६ ॥

भवतां बाहुवीर्यं हि समाश्रित्य मया युधि ।
पाण्डवेयाः समाहूता युद्धं चेदं प्रवर्तितम् ॥ ००७ ॥

तदिदं निहते द्रोणे विषण्णमिव लक्ष्यते ।
युध्यमानाश्च समरे योधा वध्यन्ति सर्वतः ॥ ००८ ॥

जयो वापि वधो वापि युध्यमानस्य संयुगे ।
भवेत्किमत्र चित्रं वै युध्यध्वं सर्वतोमुखाः ॥ ००९ ॥

पश्यध्वं च महात्मानं कर्णं वैकर्तनं युधि ।
प्रचरन्तं महेष्वासं दिव्यैरस्त्रैर्महाबलम् ॥ ०१० ॥

यस्य वै युधि संत्रासात्कुन्तीपुत्रो धनञ्जयः ।
निवर्तते सदामर्षात्सिंहात्क्षुद्रमृगो यथा ॥ ०११ ॥

येन नागायुतप्राणो भीमसेनो महाबलः ।
मानुषेणैव युद्धेन तामवस्थां प्रवेशितः ॥ ०१२ ॥

येन दिव्यास्त्रविच्छूरो मायावी स घटोत्कचः ।
अमोघया रणे शक्त्या निहतो भैरवं नदन् ॥ ०१३ ॥

तस्य दुष्पारवीर्यस्य सत्यसंधस्य धीमतः ।
बाह्वोर्द्रविणमक्षय्यमद्य द्रक्ष्यथ संयुगे ॥ ०१४ ॥

द्रोणपुत्रस्य विक्रान्तं राधेयस्यैव चोभयोः ।
पाण्डुपाञ्चालसैन्येषु द्रक्ष्यथापि महात्मनोः ॥ ०१५ ॥

सर्व एव भवन्तश्च शूराः प्राज्ञाः कुलोद्गताः ।
शीलवन्तः कृतास्त्राश्च द्रक्ष्यथाद्य परस्परम् ॥ ०१६ ॥

एवमुक्ते महाराज कर्णो वैकर्तनो नृपः ।
सिंहनादं विनद्योच्चैः प्रायुध्यत महाबलः ॥ ०१७ ॥

स सृञ्जयानां सर्वेषां पाञ्चालानां च पश्यताम् ।
केकयानां विदेहानामकरोत्कदनं महत् ॥ ०१८ ॥

तस्येषुधाराः शतशः प्रादुरासञ्शरासनात् ।
अग्रे पुङ्खे च संसक्ता यथा भ्रमरपङ्क्तयः ॥ ०१९ ॥

स पीडयित्वा पाञ्चालान्पाण्डवांश्च तरस्विनः ।
हत्वा सहस्रशो योधानर्जुनेन निपातितः ॥ ०२० ॥

---

# धृतराष्ट्रशोकः

## अध्याय ००३

वैशंपायन उवाच ॥

एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
शोकस्यान्तमपश्यन्वै हतं मत्वा सुयोधनम् ॥ ००१ ॥

विह्वलः पतितो भूमौ नष्टचेता इव द्विपः ॥ ००१ ॥

तस्मिन्निपतिते भूमौ विह्वले राजसत्तमे ।
आर्तनादो महानासीत्स्त्रीणां भरतसत्तम ॥ ००२ ॥

स शब्दः पृथिवीं सर्वां पूरयामास सर्वशः ।
शोकार्णवे महाघोरे निमग्ना भरतस्त्रियः ॥ ००३ ॥

राजानं च समासाद्य गान्धारी भरतर्षभ ।
निःसञ्ज्ञा पतिता भूमौ सर्वाण्यन्तःपुराणि च ॥ ००४ ॥

ततस्ताः सञ्जयो राजन्समाश्वासयदातुराः ।
मुह्यमानाः सुबहुशो मुञ्चन्त्यो वारि नेत्रजम् ॥ ००५ ॥

समाश्वस्ताः स्त्रियस्तास्तु वेपमाना मुहुर्मुहुः ।
कदल्य इव वातेन धूयमानाः समन्ततः ॥ ००६ ॥

राजानं विदुरश्चापि प्रज्ञाचक्षुषमीश्वरम् ।
आश्वासयामास तदा सिञ्चंस्तोयेन कौरवम् ॥ ००७ ॥

स लब्ध्वा शनकैः सञ्ज्ञां ताश्च दृष्ट्वा स्त्रियो नृप ।
उन्मत्त इव राजा स स्थितस्तूष्णीं विशां पते ॥ ००८ ॥

ततो ध्यात्वा चिरं कालं निःश्वसंश्च पुनः पुनः ।
स्वान्पुत्रान्गर्हयामास बहु मेने च पाण्डवान् ॥ ००९ ॥

गर्हयित्वात्मनो बुद्धिं शकुनेः सौबलस्य च ।

ध्यात्वा च सुचिरं कालं वेपमानो मुहुर्मुहुः ॥ ०१० ॥

संस्तभ्य च मनो भूयो राजा धैर्यसमन्वितः ।
पुनर्गावल्गणिं सूतं पर्यपृच्छत सञ्जयम् ॥ ०११ ॥

यत्त्वया कथितं वाक्यं श्रुतं सञ्जय तन्मया ।
कच्चिद्दुर्योधनः सूत न गतो वै यमक्षयम् ॥ ०१२ ॥

ब्रूहि सञ्जय तत्त्वेन पुनरुक्तां कथामिमाम् ॥ ०१२ ॥

एवमुक्तोऽब्रवीत्सूतो राजानं जनमेजय ।
हतो वैकर्तनो राजन्सह पुत्रैर्महारथैः ॥ ०१३ ॥

भ्रातृभिश्च महेष्वासैः सूतपुत्रैस्तनुत्यजैः ॥ ०१३ ॥

दुःशासनश्च निहतः पाण्डवेन यशस्विना ।
पीतं च रुधिरं कोपाद्भीमसेनेन संयुगे ॥ ०१४ ॥

---

# अध्याय ००४

वैशंपायन उवाच ॥

एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत्सञ्जयं सूतं शोकव्याकुलचेतनः ॥ ००१ ॥

दुष्प्रणीतेन मे तात मनसाभिप्लुतात्मनः ।
हतं वैकर्तनं श्रुत्वा शोको मर्माणि कृन्तति ॥ ००२ ॥

कृतास्त्रपरमाः शल्ये दुःखपारं तितीर्षवः ।
कुरूणां सृञ्जयानां च के नु जीवन्ति के मृताः ॥ ००३ ॥

सञ्जय उवाच ॥

हतः शांतनवो राजन्दुराधर्षः प्रतापवान् ।
हत्वा पाण्डवयोधानामर्बुदं दशभिर्दिनैः ॥ ००४ ॥

ततो द्रोणो महेष्वासः पाञ्चालानां रथव्रजान् ।
निहत्य युधि दुर्धर्षः पश्चाद्रुक्मरथो हतः ॥ ००५ ॥

हतशिष्टस्य भीष्मेण द्रोणेन च महात्मना ।
अर्धं निहत्य सैन्यस्य कर्णो वैकर्तनो हतः ॥ ००६ ॥

विविंशतिर्महाराज राजपुत्रो महाबलः ।
आनर्तयोधाञ्शतशो निहत्य निहतो रणे ॥ ००७ ॥

अथ पुत्रो विकर्णस्ते क्षत्रव्रतमनुस्मरन् ।
क्षीणवाहायुधः शूरः स्थितोऽभिमुखतः परान् ॥ ००८ ॥

घोररूपान्परिक्लेशान्दुर्योधनकृतान्बहून् ।
प्रतिज्ञां स्मरता चैव भीमसेनेन पातितः ॥ ००९ ॥

विन्दानुविन्दावावन्त्यौ राजपुत्रौ महाबलौ ।
कृत्वा नसुकरं कर्म गतौ वैवस्वतक्षयम् ॥ ०१० ॥

सिन्धुराष्ट्रमुखानीह दश राष्ट्राणि यस्य वै ।
वशे तिष्ठन्ति वीरस्य यः स्थितस्तव शासने ॥ ०११ ॥

अक्षौहिणीर्दशैकां च निर्जित्य निशितैः शरैः ।

अर्जुनेन हतो राजन्महावीर्यो जयद्रथः ॥ ०१२ ॥

तथा दुर्योधनसुतस्तरस्वी युद्धदुर्मदः ।
वर्तमानः पितुः शास्त्रे सौभद्रेण निपातितः ॥ ०१३ ॥

तथा दौःशासनिर्वीरो बाहुशाली रणोत्कटः ।
द्रौपदेयेन विक्रम्य गमितो यमसादनम् ॥ ०१४ ॥

किरातानामधिपतिः सागरानूपवासिनाम् ।
देवराजस्य धर्मात्मा प्रियो बहुमतः सखा ॥ ०१५ ॥

भगदत्तो महीपालः क्षत्रधर्मरतः सदा ।
धनञ्जयेन विक्रम्य गमितो यमसादनम् ॥ ०१६ ॥

तथा कौरवदायादः सौमदत्तिर्महायशाः ।
हतो भूरिश्रवा राजञ्शूरः सात्यकिना युधि ॥ ०१७ ॥

श्रुतायुरपि चाम्बष्ठः क्षत्रियाणां धनुर्धरः ।
चरन्नभीतवत्संख्ये निहतः सव्यसाचिना ॥ ०१८ ॥

तव पुत्रः सदा संख्ये कृतास्त्रो युद्धदुर्मदः ।
दुःशासनो महाराज भीमसेनेन पातितः ॥ ०१९ ॥

यस्य राजन्गजानीकं बहुसाहस्रमद्भुतम् ।
सुदक्षिणः स सङ्ग्रामे निहतः सव्यसाचिना ॥ ०२० ॥

कोसलानामधिपतिर्हत्वा बहुशतान्परान् ।
सौभद्रेण हि विक्रम्य गमितो यमसादनम् ॥ ०२१ ॥

बहुशो योधयित्वा च भीमसेनं महारथः ।
चित्रसेनस्तव सुतो भीमसेनेन पातितः ॥ ०२२ ॥

मद्रराजात्मजः शूरः परेषां भयवर्धनः ।
असिचर्मधरः श्रीमान्सौभद्रेण निपातितः ॥ ०२३ ॥

समः कर्णस्य समरे यः स कर्णस्य पश्यतः ।
वृषसेनो महातेजाः शीघ्रास्त्रः कृतनिश्चयः ॥ ०२४ ॥

अभिमन्योर्वधं स्मृत्वा प्रतिज्ञामपि चात्मनः ।
धनञ्जयेन विक्रम्य गमितो यमसादनम् ॥ ०२५ ॥

नित्यप्रसक्तवैरो यः पाण्डवैः पृथिवीपतिः ।
विश्राव्य वैरं पार्थेन श्रुतायुः स निपातितः ॥ ०२६ ॥

शल्यपुत्रस्तु विक्रान्तः सहदेवेन मारिष ।
हतो रुक्मरथो राजन्भ्राता मातुलजो युधि ॥ ०२७ ॥

राजा भगीरथो वृद्धो बृहत्क्षत्रश्च केकयः ।
पराक्रमन्तौ विक्रान्तौ निहतौ वीर्यवत्तरौ ॥ ०२८ ॥

भगदत्तसुतो राजन्कृतप्रज्ञो महाबलः ।
श्येनवच्चरता संख्ये नकुलेन निपातितः ॥ ०२९ ॥

पितामहस्तव तथा बाह्लिकः सह बाह्लिकैः ।
भीमसेनेन विक्रम्य गमितो यमसादनम् ॥ ०३० ॥

जयत्सेनस्तथा राजञ्जारासंधिर्महाबलः ।
मागधो निहतः संख्ये सौभद्रेण महात्मना ॥ ०३१ ॥

पुत्रस्ते दुर्मुखो राजन्दुःसहश्च महारथः ।
गदया भीमसेनेन निहतौ शूरमानिनौ ॥ ०३२ ॥

दुर्मर्षणो दुर्विषहो दुर्जयश्च महारथः ।
कृत्वा नसुकरं कर्म गता वैवस्वतक्षयम्  ॥ ०३३  ॥

सचिवो वृषवर्मा ते सूतः परमवीर्यवान् ।
भीमसेनेन विक्रम्य गमितो यमसादनम्  ॥ ०३४  ॥

नागायुतबलो राजा नागायुतबलो महान् ।
सगणः पाण्डुपुत्रेण निहतः सव्यसाचिना  ॥ ०३५  ॥

वसातयो महाराज द्विसाहस्राः प्रहारिणः ।
शूरसेनाश्च विक्रान्ताः सर्वे युधि निपातिताः  ॥ ०३६  ॥

अभीषाहाः कवचिनः प्रहरन्तो मदोत्कटाः ।
शिबयश्च रथोदाराः कलिङ्गसहिता हताः  ॥ ०३७  ॥

गोकुले नित्यसंवृद्धा युद्धे परमकोविदाः ।
श्रेणयो बहुसाहस्राः संशप्तकगणाश्च ये  ॥ ०३८  ॥

ते सर्वे पार्थमासाद्य गता वैवस्वतक्षयम्  ॥ ०३८  ॥

स्यालौ तव महाराज राजानौ वृषकाचलौ ।
त्वदर्थे संपराक्रान्तौ निहतौ सव्यसाचिना  ॥ ०३९  ॥

उग्रकर्मा महेष्वासो नामतः कर्मतस्तथा ।
शाल्वराजो महाराज भीमसेनेन पातितः  ॥ ०४०  ॥

ओघवांश्च महाराज बृहन्तः सहितो रणे ।
पराक्रमन्तौ मित्रार्थे गतौ वैवस्वतक्षयम्  ॥ ०४१  ॥

तथैव रथिनां श्रेष्ठः क्षेमधूर्तिर्विशां पते ।
निहतो गदया राजन्भीमसेनेन संयुगे  ॥ ०४२  ॥

तथा राजा महेष्वासो जलसंधो महाबलः ।
सुमहत्कदनं कृत्वा हतः सात्यकिना रणे ॥ ०४३ ॥

अलायुधो राक्षसेन्द्रः खरबन्धुरयानगः ।
घटोत्कचेन विक्रम्य गमितो यमसादनम् ॥ ०४४ ॥

राधेयाः सूतपुत्राश्च भ्रातरश्च महारथाः ।
केकयाः सर्वशश्चापि निहताः सव्यसाचिना ॥ ०४५ ॥

मालवा मद्रकाश्चैव द्रविडाश्चोग्रविक्रमाः ।
यौधेयाश्च ललित्थाश्च क्षुद्रकाश्चाप्युशीनराः ॥ ०४६ ॥

मावेल्लकास्तुण्डिकेराः सावित्रीपुत्रकाञ्चलाः ।
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च मारिष ॥ ०४७ ॥

पत्तीनां निहताः संघा हयानामयुतानि च ।
रथव्रजाश्च निहता हताश्च वरवारणाः ॥ ०४८ ॥

सध्वजाः सायुधाः शूराः सवर्माम्बरभूषणाः ।
कालेन महता यत्ताः कुले ये च विवर्धिताः ॥ ०४९ ॥

ते हताः समरे राजन्पार्थेनाक्लिष्टकर्मणा ।
अन्ये तथामितबलाः परस्परवधैषिणः ॥ ०५० ॥

एते चान्ये च बहवो राजानः सगणा रणे ।
हताः सहस्रशो राजन्यन्मां त्वं परिपृच्छसि ॥ ०५१ ॥

एवमेष क्षयो वृत्तः कर्णार्जुनसमागमे ॥ ०५१ ॥

महेन्द्रेण यथा वृत्रो यथा रामेण रावणः ।

यथा कृष्णेन निहतो मुरो रणनिपातितः ॥ ०५२ ॥

कार्तवीर्यश्च रामेण भार्गवेण हतो यथा ॥ ०५२ ॥

सज्ञातिबान्धवः शूरः समरे युद्धदुर्मदः ।
रणे कृत्वा महायुद्धं घोरं त्रैलोक्यविश्रुतम् ॥ ०५३ ॥

तथार्जुनेन निहतो द्वैरथे युद्धदुर्मदः ।
सामात्यबान्धवो राजन्कर्णः प्रहरतां वरः ॥ ०५४ ॥

जयाशा धार्तराष्ट्राणां वैरस्य च मुखं यतः ।
तीर्णं तत्पाण्डवै राजन्यत्पुरा नावबुध्यसे ॥ ०५५ ॥

उच्यमानो महाराज बन्धुभिर्हितकाङ्क्षिभिः ।
तदिदं समनुप्राप्तं व्यसनं त्वां महात्ययम् ॥ ०५६ ॥

पुत्राणां राज्यकामानां त्वया राजन्हितैषिणा ।
अहितानीव चीर्णानि तेषां ते फलमागतम् ॥ ०५७ ॥

धृतराष्ट्र उवाच ॥

आख्याता मामकास्तात निहता युधि पाण्डवैः ।
निहतान्पाण्डवेयानां मामकैर्ब्रूहि सञ्जय ॥ ०५८ ॥

सञ्जय उवाच ॥

कुन्तयो युधि विक्रान्ता महासत्त्वा महाबलाः ।
सानुबन्धाः सहामात्या भीष्मेण युधि पातिताः ॥ ०५९ ॥

समः किरीटिना संख्ये वीर्येण च बलेन च ।
सत्यजित्सत्यसंधेन द्रोणेन निहतो रणे ॥ ०६० ॥

तथा विराटद्रुपदौ वृद्धौ सहसुतौ नृपौ ।
पराक्रमन्तौ मित्रार्थे द्रोणेन निहतौ रणे ॥ ०६१ ॥

यो बाल एव समरे संमितः सव्यसाचिना ।
केशवेन च दुर्धर्षो बलदेवेन चाभिभूः ॥ ०६२ ॥

स एष कदनं कृत्वा महद्रणविशारदः ।
परिवार्य महामात्रैः षड्भिः परमकै रथैः ॥ ०६३ ॥

अशक्नुवद्भिर्बीभत्सुमभिमन्युर्निपातितः ॥ ०६३ ॥

तं कृतं विरथं वीरं क्षत्रधर्मे व्यवस्थितम् ।
दौःशासनिर्महाराज सौभद्रं हतवान्रणे ॥ ०६४ ॥

बृहन्तस्तु महेष्वासः कृतास्त्रो युद्धदुर्मदः ।
दुःशासनेन विक्रम्य गमितो यमसादनम् ॥ ०६५ ॥

मणिमान्दण्डधारश्च राजानौ युद्धदुर्मदौ ।
पराक्रमन्तौ मित्रार्थे द्रोणेन विनिपातितौ ॥ ०६६ ॥

अंशुमान्भोजराजस्तु सहसैन्यो महारथः ।
भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ ०६७ ॥

चित्रायुधश्चित्रयोधी कृत्वा तौ कदनं महत् ।
चित्रमार्गेण विक्रम्य कर्णेन निहतौ युधि ॥ ०६८ ॥

वृकोदरसमो युद्धे दृढः केकयजो युधि ।
केकयेनैव विक्रम्य भ्रात्रा भ्राता निपातितः ॥ ०६९ ॥

जनमेजयो गदायोधी पार्वतीयः प्रतापवान् ।

दुर्मुखेन महाराज तव पुत्रेण पातितः ॥ ०७० ॥

रोचमानौ नरव्याघ्रौ रोचमानौ ग्रहाविव ।
द्रोणेन युगपद्राजन्दिवं संप्रेषितौ शरैः ॥ ०७१ ॥

नृपाश्च प्रतियुध्यन्तः पराक्रान्ता विशां पते ।
कृत्वा नसुकरं कर्म गता वैवस्वतक्षयम् ॥ ०७२ ॥

पुरुजित्कुन्तिभोजश्च मातुलः सव्यसाचिनः ।
सङ्ग्रामनिर्जिता.ण्ल्लोकान्गमितो द्रोणसायकैः ॥ ०७३ ॥

अभिभूः काशिराजश्च काशिकैर्बहुभिर्वृतः ।
वसुदानस्य पुत्रेण न्यासितो देहमाहवे ॥ ०७४ ॥

अमितौजा युधामन्युरुत्तमौजाश्च वीर्यवान् ।
निहत्य शतशः शूरान्परैर्विनिहतौ रणे ॥ ०७५ ॥

क्षत्रधर्मा च पाञ्चाल्यः क्षत्रवर्मा च मारिष ।
द्रोणेन परमेष्वासौ गमितौ यमसादनम् ॥ ०७६ ॥

शिखण्डितनयो युद्धे क्षत्रदेवो युधां पतिः ।
लक्ष्मणेन हतो राजंस्तव पौत्रेण भारत ॥ ०७७ ॥

सुचित्रश्चित्रधर्मा च पितापुत्रौ महारथौ ।
प्रचरन्तौ महावीर्यौ द्रोणेन निहतौ रणे ॥ ०७८ ॥

वार्धक्षेमिर्महाराज कृत्वा कदनमाहवे ।
बाह्लिकेन महाराज कौरवेण निपातितः ॥ ०७९ ॥

धृष्टकेतुर्महाराज चेदीनां प्रवरो रथः ।
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ॥ ०८० ॥

तथा सत्यधृतिस्तात कृत्वा कदनमाहवे ।
पाण्डवार्थे पराक्रान्तो गमितो यमसादनम् ॥ ०८१ ॥

पुत्रस्तु शिशुपालस्य सुकेतुः पृथिवीपते ।
निहत्य शात्रवान्संख्ये द्रोणेन निहतो युधि ॥ ०८२ ॥

तथा सत्यधृतिर्वीरो मदिराश्वश्च वीर्यवान् ।
सूर्यदत्तश्च विक्रान्तो निहतो द्रोणसायकैः ॥ ०८३ ॥

श्रेणिमांश्च महाराज युध्यमानः पराक्रमी ।
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ॥ ०८४ ॥

तथैव युधि विक्रान्तो मागधः परवीरहा ।
भीष्मेण निहतो राजन्युध्यमानः पराक्रमी ॥ ०८५ ॥

वसुदानश्च कदनं कुर्वाणोऽतीव संयुगे ।
भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ ०८६ ॥

एते चान्ये च बहवः पाण्डवानां महारथाः ।
हता द्रोणेन विक्रम्य यन्मां त्वं परिपृच्छसि ॥ ०८७ ॥

धृतराष्ट्र उवाच ॥

हतप्रवीरे सैन्येऽस्मिन्मामके वदतां वर ।
अहताञ्शंस मे सूत येऽत्र जीवन्ति केचन ॥ ०८८ ॥

एतेषु निहतेष्वद्य ये त्वया परिकीर्तिताः ।
अहतान्मन्यसे यांस्त्वं तेऽपि स्वर्गजितो मताः ॥ ०८९ ॥

सञ्जय उवाच ॥

यस्मिन्महास्त्राणि समर्पितानि ; चित्राणि शुभ्राणि चतुर्विधानि ।
दिव्यानि राजन्निहितानि चैव ; द्रोणेन वीरद्विजसत्तमेन ॥ ०९० ॥

महारथः कृतिमान्क्षिप्रहस्तो ; दृढायुधो दृढमुष्टिर्दृढेषुः ।
स वीर्यवान्द्रोणपुत्रस्तरस्वी ; व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ०९१ ॥

आनर्तवासी हृदिकात्मजोऽसौ ; महारथः सात्वतानां वरिष्ठः ।
स्वयं भोजः कृतवर्मा कृतास्त्रो ; व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ०९२ ॥

शारद्वतो गौतमश्चापि राज ;न्महाबलो बहुचित्रास्त्रयोधी ।
धनुश्चित्रं सुमहद्भारसाहं ; व्यवस्थितो योत्स्यमानः प्रगृह्य ॥ ०९३ ॥

आर्तायनिः समरे दुष्प्रकम्प्यः ; सेनाग्रणीः प्रथमस्तावकानाम् ।
स्वस्रेयांस्तान्पाण्डवेयान्विसृज्य ; सत्यां वाचं तां चिकीर्षुस्तरस्वी ॥ ०९४ ॥

तेजोवधं सूतपुत्रस्य संख्ये ; प्रतिश्रुत्वाजातशत्रोः पुरस्तात् ।
दुराधर्षः शक्रसमानवीर्यः ; शल्यः स्थितो योद्धुकामस्त्वदर्थे ॥ ०९५ ॥

आजानेयैः सैन्धवैः पार्वतीयै ;र्नदीजकाम्बोजवनायुबाह्लिकैः ।
गान्धारराजः स्वबलेन युक्तो ; व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ०९६ ॥

तथा सुतस्ते ज्वलनार्कवर्णं ; रथं समास्थाय कुरुप्रवीर ।
व्यवस्थितः कुरुमित्रो नरेन्द्र ; व्यभ्रे सूर्यो भ्राजमानो यथा वै ॥ ०९७ ॥

दुर्योधनो नागकुलस्य मध्ये ; महावीर्यः सह सैन्यप्रवीरैः ।
रथेन जाम्बूनदभूषणेन ; व्यवस्थितः समरे योद्धुकामः ॥ ०९८ ॥

स राजमध्ये पुरुषप्रवीरो ; रराज जाम्बूनदचित्रवर्मा ।
पद्मप्रभो वह्निरिवाल्पधूमो ; मेघान्तरे सूर्य इव प्रकाशः ॥ ०९९ ॥

तथा सुषेणोऽप्यसिचर्मपाणि ;स्तवात्मजः सत्यसेनश्च वीरः ।
व्यवस्थितौ चित्रसेनेन सार्धं ; हृष्टात्मानौ समरे योद्धुकामौ ॥ १०० ॥

ह्रीनिषेधा भरता राजपुत्रा ;श्चित्रायुधः श्रुतकर्मा जयश्च ।
शलश्च सत्यव्रतदुःशलौ च ; व्यवस्थिता बलिनो योद्धुकामाः ॥ १०१ ॥

कैतव्यानामधिपः शूरमानी ; रणे रणे शत्रुहा राजपुत्रः ।
पत्री हयी नागरथप्रयायी ; व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ १०२ ॥

वीरः श्रुतायुश्च श्रुतायुधश्च ; चित्राङ्गदश्चित्रवर्मा स वीरः ।
व्यवस्थिता ये तु सैन्ये नराग्र्याः ; प्रहारिणो मानिनः सत्यसंधाः ॥ १०३ ॥

कर्णात्मजः सत्यसेनो महात्मा ; व्यवस्थितः समरे योद्धुकामः ।
अथापरौ कर्णसुतौ वरार्हौ ; व्यवस्थितौ लघुहस्तौ नरेन्द्र ॥ १०४ ॥

बलं महद्दुर्भिदमल्पधैर्यैः ; समाश्रितौ योत्स्यमानौ त्वदर्थे ॥ १०४ ॥

एतैश्च मुख्यैरपरैश्च राज ;न्योधप्रवीरैरमितप्रभावैः ।
व्यवस्थितो नागकुलस्य मध्ये ; यथा महेन्द्रः कुरुराजो जयाय ॥ १०५ ॥

धृतराष्ट्र उवाच ॥

आख्याता जीवमाना ये परेभ्योऽन्ये यथातथम् ।
इतीदमभिगच्छामि व्यक्तमर्थाभिपत्तितः ॥ १०६ ॥

वैशंपायन उवाच ॥

एवं ब्रुवन्नेव तदा धृतराष्ट्रोऽम्बिकासुतः ।
हतप्रवीरं विध्वस्तं किञ्चिच्छेषं स्वकं बलम् ॥ १०७ ॥

श्रुत्वा व्यामोहमगमच्छोकव्याकुलितेन्द्रियः ॥ १०७ ॥

मुह्यमानोऽब्रवीच्चापि मुहूर्तं तिष्ठ सञ्जय ।
व्याकुलं मे मनस्तात श्रुत्वा सुमहदप्रियम्  ॥ १०८  ॥

नष्टचित्तस्ततः सोऽथ बभूव जगतीपतिः  ॥ १०८  ॥

---

# संजयवचनम्

# धृतराष्ट्रजल्पनम्

# अध्याय ००५

जनमेजय उवाच  ॥

श्रुत्वा कर्णं हतं युद्धे पुत्रांश्चैवापलायिनः ।
नरेन्द्रः किञ्चिदाश्वस्तो द्विजश्रेष्ठ किमब्रवीत्  ॥ ००१  ॥

प्राप्तवान्परमं दुःखं पुत्रव्यसनजं महत् ।
तस्मिन्यदुक्तवान्काले तन्ममाचक्ष्व पृच्छतः  ॥ ००२  ॥

वैशंपायन उवाच  ॥

श्रुत्वा कर्णस्य निधनमश्रद्धेयमिवाद्भुतम् ।
भूतसंमोहनं भीमं मेरोः पर्यसनं यथा  ॥ ००३  ॥

चित्तमोहमिवायुक्तं भार्गवस्य महामतेः ।
पराजयमिवेन्द्रस्य द्विषद्भ्यो भीमकर्मणः  ॥ ००४  ॥

दिवः प्रपतनं भानोरुर्व्यामिव महाद्युतेः ।
संशोषणमिवाचिन्त्यं समुद्रस्याक्षयाम्भसः ॥ ००५ ॥

महीवियद्दिगीशानां सर्वनाशमिवाद्भुतम् ।
कर्मणोरिव वैफल्यमुभयोः पुण्यपापयोः ॥ ००६ ॥

सञ्चिन्त्य निपुणं बुद्ध्या धृतराष्ट्रो जनेश्वरः ।
नेदमस्तीति सञ्चिन्त्य कर्णस्य निधनं प्रति ॥ ००७ ॥

प्राणिनामेतदात्मत्वात्स्यादपीति विनाशनम् ।
शोकाग्निना दह्यमानो धम्यमान इवाशयः ॥ ००८ ॥

विध्वस्तात्मा श्वसन्दीनो हा हेत्युक्त्वा सुदुःखितः ।
विललाप महाराज धृतराष्ट्रोऽम्बिकासुतः ॥ ००९ ॥

धृतराष्ट्र उवाच ॥

सञ्जयाधिरथो वीरः सिंहद्विरदविक्रमः ।
वृषभप्रतिमस्कन्धो वृषभाक्षगतिस्वनः ॥ ०१० ॥

वृषभो वृषभस्येव यो युद्धे न निवर्तते ।
शत्रोरपि महेन्द्रस्य वज्रसंहननो युवा ॥ ०११ ॥

यस्य ज्यातलशब्देन शरवृष्टिरवेण च ।
रथाश्वनरमातङ्गा नावतिष्ठन्ति संयुगे ॥ ०१२ ॥

यमाश्रित्य महाबाहुं द्विषत्संघघ्नमच्युतम् ।
दुर्योधनोऽकरोद्वैरं पाण्डुपुत्रैर्महाबलैः ॥ ०१३ ॥

स कथं रथिनां श्रेष्ठः कर्णः पार्थेन संयुगे ।

निहतः पुरुषव्याघ्रः प्रसह्यासह्यविक्रमः ॥ ०१४ ॥

यो नामन्यत वै नित्यमच्युतं न धनञ्जयम् ।
न वृष्णीनपि तानन्यान्स्वबाहुबलमाश्रितः ॥ ०१५ ॥

शार्ङ्गगाण्डीवधन्वानौ सहितावपराजितौ ।
अहं दिव्याद्रथादेकः पातयिष्यामि संयुगे ॥ ०१६ ॥

इति यः सततं मन्दमवोचल्लोभमोहितम् ।
दुर्योधनमपादीनं राज्यकामुकमातुरम् ॥ ०१७ ॥

यश्चाजैषीदतिबलानमित्रानपि दुर्जयान् ।
गान्धारान्मद्रकान्मत्स्यांस्त्रिगर्तांस्तङ्गणाञ्शकान् ॥ ०१८ ॥

पाञ्चालांश्च विदेहांश्च कुणिन्दान्काशिकोसलान् ।
सुह्मानङ्गांश्च पुण्ड्रांश्च निषादान्वङ्गकीचकान् ॥ ०१९ ॥

वत्सान्कलिङ्गांस्तरलानश्मकानृषिकांस्तथा ।
यो जित्वा समरे वीरश्चक्रे बलिभृतः पुरा ॥ ०२० ॥

उच्चैःश्रवा वरोऽश्वानां राज्ञां वैश्रवणो वरः ।
वरो महेन्द्रो देवानां कर्णः प्रहरतां वरः ॥ ०२१ ॥

यं लब्ध्वा मागधो राजा सान्त्वमानार्थगौरवैः ।
अरौत्सीत्पार्थिवं क्षत्रमृते कौरवयादवान् ॥ ०२२ ॥

तं श्रुत्वा निहतं कर्णं द्वैरथे सव्यसाचिना ।
शोकार्णवे निमग्नोऽहमप्लवः सागरे यथा ॥ ०२३ ॥

ईदृशैर्यद्यहं दुःखैर्न विनश्यामि सञ्जय ।
वज्राद्दृढतरं मन्ये हृदयं मम दुर्भिदम् ॥ ०२४ ॥

ज्ञातिसंबन्धिमित्राणामिमं श्रुत्वा पराजयम् ।
को मदन्यः पुमा.ण्ल्लोके न जह्यात्सूत जीवितम्  ॥ ०२५  ॥

विषमग्निं प्रपातं वा पर्वताग्रादहं वृणे ।
न हि शक्ष्यामि दुःखानि सोढुं कष्टानि सञ्जय  ॥ ०२६  ॥

सञ्जय उवाच  ॥

श्रिया कुलेन यशसा तपसा च श्रुतेन च ।
त्वामद्य सन्तो मन्यन्ते ययातिमिव नाहुषम्  ॥ ०२७  ॥

श्रुते महर्षिप्रतिमः कृतकृत्योऽसि पार्थिव ।
पर्यवस्थापयात्मानं मा विषादे मनः कृथाः  ॥ ०२८  ॥

धृतराष्ट्र उवाच  ॥

दैवमेव परं मन्ये धिक्पौरुषमनर्थकम् ।
यत्र रामप्रतीकाशः कर्णोऽहन्यत संयुगे  ॥ ०२९  ॥

हत्वा युधिष्ठिरानीकं पाञ्चालानां रथव्रजान् ।
प्रताप्य शरवर्षेण दिशः सर्वा महारथः  ॥ ०३०  ॥

मोहयित्वा रणे पार्थान्वज्रहस्त इवासुरान् ।
स कथं निहतः शेते वातरुग्ण इव द्रुमः  ॥ ०३१  ॥

शोकस्यान्तं न पश्यामि समुद्रस्येव विप्लुकाः ।
चिन्ता मे वर्धते तीव्रा मुमूर्षा चापि जायते  ॥ ०३२  ॥

कर्णस्य निधनं श्रुत्वा विजयं फल्गुनस्य च ।
अश्रद्धेयमहं मन्ये वधं कर्णस्य सञ्जय  ॥ ०३३  ॥

वज्रसारमयं नूनं हृदयं सुदृढं मम ।
यच्छ्रुत्वा पुरुषव्याघ्रं हतं कर्णं न दीर्यते ॥ ०३४ ॥

आयुर्नूनं सुदीर्घं मे विहितं दैवतैः पुरा ।
यत्र कर्णं हतं श्रुत्वा जीवामीह सुदुःखितः ॥ ०३५ ॥

धिग्जीवितमिदं मेऽद्य सुहृद्धीनस्य सञ्जय ।
अद्य चाहं दशामेतां गतः सञ्जय गर्हिताम् ॥ ०३६ ॥

कृपणं वर्तयिष्यामि शोच्यः सर्वस्य मन्दधीः ॥ ०३६ ॥

अहमेव पुरा भूत्वा सर्वलोकस्य सत्कृतः ।
परिभूतः कथं सूत पुनः शक्ष्यामि जीवितुम् ॥ ०३७ ॥

दुःखात्सुदुःखं व्यसनं प्राप्तवानस्मि सञ्जय ॥ ०३७ ॥

तस्माद्भीष्मवधे चैव द्रोणस्य च महात्मनः ।
नात्र शेषं प्रपश्यामि सूतपुत्रे हते युधि ॥ ०३८ ॥

स हि पारं महानासीत्पुत्राणां मम सञ्जय ।
युद्धे विनिहतः शूरो विसृजन्सायकान्बहून् ॥ ०३९ ॥

को हि मे जीवितेनार्थस्तमृते पुरुषर्षभम् ।
रथादतिरथो नूनमपतत्सायकार्दितः ॥ ०४० ॥

पर्वतस्येव शिखरं वज्रपातविदारितम् ।
शयीत पृथिवीं नूनं शोभयन्रुधिरोक्षितः ॥ ०४१ ॥

मातङ्ग इव मत्तेन मातङ्गेन निपातितः ॥ ०४१ ॥

यद्बलं धार्तराष्ट्राणां पाण्डवानां यतो भयम् ।
सोऽर्जुनेन हतः कर्णः प्रतिमानं धनुष्मताम् ॥ ०४२ ॥

स हि वीरो महेष्वासः पुत्राणामभयङ्करः ।
शेते विनिहतो वीरः शक्रेणेव यथा बलः ॥ ०४३ ॥

पङ्गोरिवाध्वगमनं दरिद्रस्येव कामितम् ।
दुर्योधनस्य चाकूतं तृषितस्येव पिप्लुकाः ॥ ०४४ ॥

अन्यथा चिन्तितं कार्यमन्यथा तत्तु जायते ।
अहो नु बलवद्दैवं कालश्च दुरतिक्रमः ॥ ०४५ ॥

पलायमानः कृपणं दीनात्मा दीनपौरुषः ।
कच्चिन्न निहतः सूत पुत्रो दुःशासनो मम ॥ ०४६ ॥

कच्चिन्न नीचाचरितं कृतवांस्तात संयुगे ।
कच्चिन्न निहतः शूरो यथा न क्षत्रिया हताः ॥ ०४७ ॥

युधिष्ठिरस्य वचनं मा युद्धमिति सर्वदा ।
दुर्योधनो नाभ्यगृह्णान्मूढः पथ्यमिवौषधम् ॥ ०४८ ॥

शरतल्पे शयानेन भीष्मेण सुमहात्मना ।
पानीयं याचितः पार्थः सोऽविध्यन्मेदिनीतलम् ॥ ०४९ ॥

जलस्य धारां विहितां दृष्ट्वा तां पाण्डवेन ह ।
अब्रवीत्स महाबाहुस्तात संशाम्य पाण्डवैः ॥ ०५० ॥

प्रशमाद्धि भवेच्छान्तिर्मदन्तं युद्धमस्तु च ।
भ्रातृभावेन पृथिवीं भुङ्क्ष्व पाण्डुसुतैः सह ॥ ०५१ ॥

अकुर्वन्वचनं तस्य नूनं शोचति मे सुतः ।

तदिदं समनुप्राप्तं वचनं दीर्घदर्शिनः ॥ ०५२ ॥

अहं तु निहतामात्यो हतपुत्रश्च सञ्जय ।
द्यूततः कृच्छ्रमापन्नो लूनपक्ष इव द्विजः ॥ ०५३ ॥

यथा हि शकुनिं गृह्य छित्त्वा पक्षौ च सञ्जय ।
विसर्जयन्ति संहृष्टाः क्रीडमानाः कुमारकाः ॥ ०५४ ॥

छिन्नपक्षतया तस्य गमनं नोपपद्यते ।
तथाहमपि संप्राप्तो लूनपक्ष इव द्विजः ॥ ०५५ ॥

क्षीणः सर्वार्थहीनश्च निर्बन्धुर्ज्ञातिवर्जितः ।
कां दिशं प्रतिपत्स्यामि दीनः शत्रुवशं गतः ॥ ०५६ ॥

दुर्योधनस्य वृद्ध्यर्थं पृथिवीं योऽजयत्प्रभुः ।
स जितः पाण्डवैः शूरैः समर्थैर्वीर्यशालिभिः ॥ ०५७ ॥

तस्मिन्हते महेष्वासे कर्णे युधि किरीटिना ।
के वीराः पर्यवर्तन्त तन्ममाचक्ष्व सञ्जय ॥ ०५८ ॥

कच्चिन्नैकः परित्यक्तः पाण्डवैर्निहतो रणे ।
उक्तं त्वया पुरा वीर यथा वीरा निपातिताः ॥ ०५९ ॥

भीष्ममप्रतियुध्यन्तं शिखण्डी सायकोत्तमैः ।
पातयामास समरे सर्वशस्त्रभृतां वरम् ॥ ०६० ॥

तथा द्रौपदिना द्रोणो न्यस्तसर्वायुधो युधि ।
युक्तयोगो महेष्वासः शरैर्बहुभिराचितः ॥ ०६१ ॥

निहतः खड्गमुद्यम्य धृष्टद्युम्नेन सञ्जय ॥ ०६१ ॥

अन्तरेण हतावेतौ छलेन च विशेषतः ।
अश्रौषमहमेतद्वै भीष्मद्रोणौ निपातितौ ॥ ०६२ ॥

भीष्मद्रोणौ हि समरे न हन्याद्वज्रभृत्स्वयम् ।
न्यायेन युध्यमानौ हि तद्वै सत्यं ब्रवीमि ते ॥ ०६३ ॥

कर्णं त्वस्यन्तमस्त्राणि दिव्यानि च बहूनि च ।
कथमिन्द्रोपमं वीरं मृत्युर्युद्धे समस्पृशत् ॥ ०६४ ॥

यस्य विद्युत्प्रभां शक्तिं दिव्यां कनकभूषणाम् ।
प्रायच्छद्द्विषतां हन्त्रीं कुण्डलाभ्यां पुरंदरः ॥ ०६५ ॥

यस्य सर्पमुखो दिव्यः शरः कनकभूषणः ।
अशेत निहतः पत्री चन्दनेष्वरिसूदनः ॥ ०६६ ॥

भीष्मद्रोणमुखान्वीरान्योऽवमन्य महारथान् ।
जामदग्न्यान्महाघोरं ब्राह्ममस्त्रमशिक्षत ॥ ०६७ ॥

यश्च द्रोणमुखान्दृष्ट्वा विमुखानर्दिताञ्शरैः ।
सौभद्रस्य महाबाहुर्व्यधमत्कार्मुकं शरैः ॥ ०६८ ॥

यश्च नागायुतप्राणं वातरंहसमच्युतम् ।
विरथं भ्रातरं कृत्वा भीमसेनमुपाहसत् ॥ ०६९ ॥

सहदेवं च निर्जित्य शरैः संनतपर्वभिः ।
कृपया विरथं कृत्वा नाहनद्धर्मवित्तया ॥ ०७० ॥

यश्च मायासहस्राणि ध्वंसयित्वा रणोत्कटम् ।
घटोत्कचं राक्षसेन्द्रं शक्रशक्त्याभिजघ्निवान् ॥ ०७१ ॥

एतानि दिवसान्यस्य युद्धे भीतो धनञ्जयः ।

नागमद्वैरथं वीरः स कथं निहतो रणे ॥ ०७२ ॥

रथसङ्गो न चेत्तस्य धनुर्वा न व्यशीर्यत ।
न चेदस्त्राणि निर्णेशुः स कथं निहतः परैः ॥ ०७३ ॥

को हि शक्तो रणे कर्णं विधुन्वानं महद्धनुः ।
विमुञ्चन्तं शरान्घोरान्दिव्यान्यस्त्राणि चाहवे ॥ ०७४ ॥

जेतुं पुरुषशार्दूलं शार्दूलमिव वेगितम् ॥ ०७४ ॥

ध्रुवं तस्य धनुश्छिन्नं रथो वापि गतो महीम् ।
अस्त्राणि वा प्रनष्टानि यथा शंससि मे हतम् ॥ ०७५ ॥

न ह्यन्यदनुपश्यामि कारणं तस्य नाशने ॥ ०७५ ॥

न हन्यामर्जुनं यावत्तावत्पादौ न धावये ।
इति यस्य महाघोरं व्रतमासीन्महात्मनः ॥ ०७६ ॥

यस्य भीतो वने नित्यं धर्मराजो युधिष्ठिरः ।
त्रयोदश समा निद्रां न लेभे पुरुषर्षभः ॥ ०७७ ॥

यस्य वीर्यवतो वीर्यं समाश्रित्य महात्मनः ।
मम पुत्रः सभां भार्यां पाण्डूनां नीतवान्बलात् ॥ ०७८ ॥

तत्र चापि सभामध्ये पाण्डवानां च पश्यताम् ।
दासभार्येति पाञ्चालीमब्रवीत्कुरुसंसदि ॥ ०७९ ॥

यश्च गाण्डीवमुक्तानां स्पर्शमुग्रमचिन्तयन् ।
अपतिर्ह्यसि कृष्णेति ब्रुवन्पार्थानवैक्षत ॥ ०८० ॥

यस्य नासीद्भयं पार्थैः सपुत्रैः सजनार्दनैः ।

स्वबाहुबलमाश्रित्य मुहूर्तमपि सञ्जय ॥ ०८१ ॥

तस्य नाहं वधं मन्ये देवैरपि सवासवैः ।
प्रतीपमुपधावद्भिः किं पुनस्तात पाण्डवैः ॥ ०८२ ॥

न हि ज्यां स्पृशमानस्य तलत्रे चापि गृह्णतः ।
पुमानाधिरथेः कश्चित्प्रमुखे स्थातुमर्हति ॥ ०८३ ॥

अपि स्यान्मेदिनी हीना सोमसूर्यप्रभांशुभिः ।
न वधः पुरुषेन्द्रस्य समरेष्वपलायिनः ॥ ०८४ ॥

यदि मन्दः सहायेन भ्रात्रा दुःशासनेन च ।
वासुदेवस्य दुर्बुद्धिः प्रत्याख्यानमरोचयत् ॥ ०८५ ॥

स नूनमृषभस्कन्धं दृष्ट्वा कर्णं निपातितम् ।
दुःशासनं च निहतं मन्ये शोचति पुत्रकः ॥ ०८६ ॥

हतं वैकर्तनं श्रुत्वा द्वैरथे सव्यसाचिना ।
जयतः पाण्डवान्दृष्ट्वा किं स्विद्दुर्योधनोऽब्रवीत् ॥ ०८७ ॥

दुर्मर्षणं हतं श्रुत्वा वृषसेनं च संयुगे ।
प्रभग्नं च बलं दृष्ट्वा वध्यमानं महारथैः ॥ ०८८ ॥

पराङ्मुखांस्तथा राज्ञः पलायनपरायणान् ।
विद्रुतान्रथिनो दृष्ट्वा मन्ये शोचति पुत्रकः ॥ ०८९ ॥

अनेयश्चाभिमानेन बालबुद्धिरमर्षणः ।
हतोत्साहं बलं दृष्ट्वा किं स्विद्दुर्योधनोऽब्रवीत् ॥ ०९० ॥

भ्रातरं निहतं दृष्ट्वा भीमसेनेन संयुगे ।
रुधिरं पीयमानेन किं स्विद्दुर्योधनोऽब्रवीत् ॥ ०९१ ॥

सह गान्धारराजेन सभायां यद्भाषत ।
कर्णोऽर्जुनं रणे हन्ता हते तस्मिन्किमब्रवीत् ॥ ०९२ ॥

द्यूतं कृत्वा पुरा हृष्टो वञ्चयित्वा च पाण्डवान् ।
शकुनिः सौबलस्तात हते कर्णे किमब्रवीत् ॥ ०९३ ॥

कृतवर्मा महेष्वासः सात्वतानां महारथः ।
कर्णं विनिहतं दृष्ट्वा हार्दिक्यः किमभाषत ॥ ०९४ ॥

ब्राह्मणाः क्षत्रिया वैश्या यस्य शिक्षामुपासते ।
धनुर्वेदं चिकीर्षन्तो द्रोणपुत्रस्य धीमतः ॥ ०९५ ॥

युवा रूपेण संपन्नो दर्शनीयो महायशाः ।
अश्वत्थामा हते कर्णे किमभाषत सञ्जय ॥ ०९६ ॥

आचार्यत्वं धनुर्वेदे गतः परमतत्त्ववित् ।
कृपः शारद्वतस्तात हते कर्णे किमब्रवीत् ॥ ०९७ ॥

मद्रराजो महेष्वासः शल्यः समितिशोभनः ।
दिष्टं तेन हि तत्सर्वं यथा कर्णो निपातितः ॥ ०९८ ॥

ये च केचन राजानः पृथिव्यां योद्धुमागताः ।
वैकर्तनं हतं दृष्ट्वा किमभाषन्त सञ्जय ॥ ०९९ ॥

कर्णे तु निहते वीरे रथव्याघ्रे नरर्षभे ।
किं वो मुखमनीकानामासीत्सञ्जय भागशः ॥ १०० ॥

मद्रराजः कथं शल्यो नियुक्तो रथिनां वरः ।
वैकर्तनस्य सारथ्ये तन्ममाचक्ष्व सञ्जय ॥ १०१ ॥

केऽरक्षन्दक्षिणं चक्रं सूतपुत्रस्य संयुगे ।
वामं चक्रं ररक्षुर्वा के वा वीरस्य पृष्ठतः ॥ १०२ ॥

के कर्णं वाजहुः शूराः के क्षुद्राः प्राद्रवन्भयात् ।
कथं च वः समेतानां हतः कर्णो महारथः ॥ १०३ ॥

पाण्डवाश्च कथं शूराः प्रत्युदीयुर्महारथम् ।
सृजन्तं शरवर्षाणि वारिधारा इवाम्बुदम् ॥ १०४ ॥

स च सर्पमुखो दिव्यो महेषुप्रवरस्तदा ।
व्यर्थः कथं समभवत्तन्ममाचक्ष्व सञ्जय ॥ १०५ ॥

मामकस्यास्य सैन्यस्य हृतोत्सेधस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ १०६ ॥

तौ हि वीरौ महेष्वासौ मदर्थे कुरुसत्तमौ ।
भीष्मद्रोणौ हतौ श्रुत्वा को न्वर्थो जीवितेन मे ॥ १०७ ॥

न मृष्यामि च राधेयं हतमाहवशोभिनम् ।
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् ॥ १०८ ॥

द्रोणे हते च यद्वृत्तं कौरवाणां परैः सह ।
सङ्ग्रामे नरवीराणां तन्ममाचक्ष्व सञ्जय ॥ १०९ ॥

यथा च कर्णः कौन्तेयैः सह युद्धमयोजयत् ।
यथा च द्विषतां हन्ता रणे शान्तस्तदुच्यताम् ॥ ११० ॥

# कर्णाभिषेकः

## अध्याय ००६

सञ्जय उवाच ॥

हते द्रोणे महेष्वासे तस्मिन्नहनि भारत ।
कृते च मोघसङ्कल्पे द्रोणपुत्रे महारथे ॥ ००१ ॥

द्रवमाणे महाराज कौरवाणां बले तथा ।
व्यूह्य पार्थः स्वकं सैन्यमतिष्ठद्भ्रातृभिः सह ॥ ००२ ॥

तमवस्थितमाज्ञाय पुत्रस्ते भरतर्षभ ।
द्रवच्च स्वबलं दृष्ट्वा पौरुषेण न्यवारयत् ॥ ००३ ॥

स्वमनीकमवस्थाप्य बाहुवीर्ये व्यवस्थितः ।
युद्ध्वा च सुचिरं कालं पाण्डवैः सह भारत ॥ ००४ ॥

लब्धलक्षैः परैर्हृष्टैर्व्यायच्छद्भिश्चिरं तदा ।
संध्याकालं समासाद्य प्रत्याहारमकारयत् ॥ ००५ ॥

कृत्वावहारं सैन्यानां प्रविश्य शिबिरं स्वकम् ।
कुरवोऽऽत्महितं मन्त्रं मन्त्रयां चक्रिरे तदा ॥ ००६ ॥

पर्यङ्केषु परार्ध्येषु स्पर्ध्यास्तरणवत्सु च ।
वरासनेषूपविष्टाः सुखशय्यास्विवामराः ॥ ००७ ॥

ततो दुर्योधनो राजा साम्ना परमवल्गुना ।
तानाभाष्य महेष्वासान्प्राप्तकालमभाषत ॥ ००८ ॥

मतिं मतिमतां श्रेष्ठाः सर्वे प्रब्रूत माचिरम् ।

एवं गते तु यत्कार्यं भवेत्कार्यकरं नृपाः ॥ ००९ ॥

एवमुक्ते नरेन्द्रेण नरसिंहा युयुत्सवः ।
चक्रुर्नानाविधाश्चेष्टाः सिंहासनगतास्तदा ॥ ०१० ॥

तेषां निशम्येङ्गितानि युद्धे प्राणाञ्जुहूषताम् ।
समुद्वीक्ष्य मुखं राज्ञो बालार्कसमवर्चसः ॥ ०११ ॥

आचार्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे ॥ ०११ ॥

रागो योगस्तथा दाक्ष्यं नयश्चेत्यर्थसाधकाः ।
उपायाः पण्डितैः प्रोक्ताः सर्वे दैवसमाश्रिताः ॥ ०१२ ॥

लोकप्रवीरा येऽस्माकं देवकल्पा महारथाः ।
नीतिमन्तस्तथा युक्ता दक्षा रक्ताश्च ते हताः ॥ ०१३ ॥

न त्वेव कार्यं नैराश्यमस्माभिर्विजयं प्रति ।
सुनीतैरिह सर्वार्थैर्दैवमप्यनुलोम्यते ॥ ०१४ ॥

ते वयं प्रवरं नृणां सर्वैर्गुणगणैर्युतम् ।
कर्णं सेनापतिं कृत्वा प्रमथिष्यामहे रिपून् ॥ ०१५ ॥

ततो दुर्योधनः प्रीतः प्रियं श्रुत्वा वचस्तदा ।
प्रीतिसंस्कारसंयुक्तं तथ्यमात्महितं शुभम् ॥ ०१६ ॥

स्वं मनः समवस्थाप्य बाहुवीर्यमुपाश्रितः ।
दुर्योधनो महाराज राधेयमिदमब्रवीत् ॥ ०१७ ॥

कर्ण जानामि ते वीर्यं सौहृदं च परं मयि ।
तथापि त्वां महाबाहो प्रवक्ष्यामि हितं वचः ॥ ०१८ ॥

श्रुत्वा यथेष्टं च कुरु वीर यत्तव रोचते ।
भवान्प्राज्ञतमो नित्यं मम चैव परा गतिः ॥ ०१९ ॥

भीष्मद्रोणावतिरथौ हतौ सेनापती मम ।
सेनापतिर्भवानस्तु ताभ्यां द्रविणवत्तरः ॥ ०२० ॥

वृद्धौ च तौ महेष्वासौ सापेक्षौ च धनञ्जये ।
मानितौ च मया वीरौ राधेय वचनात्तव ॥ ०२१ ॥

पितामहत्वं संप्रेक्ष्य पाण्डुपुत्रा महारणे ।
रक्षितास्तात भीष्मेण दिवसानि दशैव ह ॥ ०२२ ॥

न्यस्तशस्त्रे च भवति हतो भीष्मः पितामहः ।
शिखण्डिनं पुरस्कृत्य फल्गुनेन महाहवे ॥ ०२३ ॥

हते तस्मिन्महाभागे शरतल्पगते तदा ।
त्वयोक्ते पुरुषव्याघ्र द्रोणो ह्यासीत्पुरःसरः ॥ ०२४ ॥

तेनापि रक्षिताः पार्थाः शिष्यत्वादिह संयुगे ।
स चापि निहतो वृद्धो धृष्टद्युम्नेन सत्वरम् ॥ ०२५ ॥

निहताभ्यां प्रधानाभ्यां ताभ्याममितविक्रम ।
त्वत्समं समरे योधं नान्यं पश्यामि चिन्तयन् ॥ ०२६ ॥

भवानेव तु नः शक्तो विजयाय न संशयः ।
पूर्वं मध्ये च पश्चाच्च तवैव विदितं हि तत् ॥ ०२७ ॥

स भवान्धुर्यवत्संख्ये धुरमुद्वोढुमर्हसि ।
अभिषेचय सेनान्ये स्वयमात्मानमात्मना ॥ ०२८ ॥

देवतानां यथा स्कन्दः सेनानीः प्रभुरव्ययः ।

तथा भवानिमां सेनां धार्तराष्ट्रीं बिभर्तु मे ॥ ०२९ ॥

जहि शत्रुगणान्सर्वान्महेन्द्र इव दानवान् ॥ ०२९ ॥

अवस्थितं रणे ज्ञात्वा पाण्डवास्त्वां महारथम् ।
द्रविष्यन्ति सपाञ्चाला विष्णुं दृष्ट्वेव दानवाः ॥ ०३० ॥

तस्मात्त्वं पुरुषव्याघ्र प्रकर्षेथा महाचमूम् ॥ ०३० ॥

भवत्यवस्थिते यत्ते पाण्डवा गतचेतसः ।
भविष्यन्ति सहामात्याः पाञ्चालैः सृञ्जयैः सह ॥ ०३१ ॥

यथा ह्यभ्युदितः सूर्यः प्रतपन्स्वेन तेजसा ।
व्यपोहति तमस्तीव्रं तथा शत्रून्व्यपोह नः ॥ ०३२ ॥

कर्ण उवाच ॥

उक्तमेतन्मया पूर्वं गान्धारे तव संनिधौ ।
जेष्यामि पाण्डवान्राजन्सपुत्रान्सजनार्दनान् ॥ ०३३ ॥

सेनापतिर्भविष्यामि तवाहं नात्र संशयः ।
स्थिरो भव महाराज जितान्विद्धि च पाण्डवान् ॥ ०३४ ॥

सञ्जय उवाच ॥

एवमुक्तो महातेजास्ततो दुर्योधनो नृपः ।
उत्तस्थौ राजभिः सार्धं देवैरिव शतक्रतुः ॥ ०३५ ॥

सेनापत्येन सत्कर्तुं कर्णं स्कन्दमिवामराः ॥ ०३५ ॥

ततोऽभिषिषिचुस्तूर्णं विधिदृष्टेन कर्मणा ।

दुर्योधनमुखा राजन्राजानो विजयैषिणः ॥ ०३६ ॥

शातकौम्भमयैः कुम्भैर्माहेयैश्चाभिमन्त्रितैः ॥ ०३६ ॥

तोयपूर्णैर्विषाणैश्च द्वीपिखड्गमहर्षभैः ।
मणिमुक्तामयैश्चान्यैः पुण्यगन्धैस्तथौषधैः ॥ ०३७ ॥

औदुम्बरे समासीनमासने क्षौमसंवृतम् ।
शास्त्रदृष्टेन विधिना संभारैश्च सुसंभृतैः ॥ ०३८ ॥

जय पार्थान्सगोविन्दान्सानुगांस्त्वं महाहवे ।
इति तं बन्दिनः प्राहुर्द्विजाश्च भरतर्षभ ॥ ०३९ ॥

जहि पार्थान्सपाञ्चालान्राधेय विजयाय नः ।
उद्यन्निव सदा भानुस्तमांस्युग्रैर्गभस्तिभिः ॥ ०४० ॥

न ह्यलं त्वद्विसृष्टानां शराणां ते सकेशवाः ।
कृतघ्नाः सूर्यरश्मीनां ज्वलतामिव दर्शने ॥ ०४१ ॥

न हि पार्थाः सपाञ्चालाः स्थातुं शक्तास्तवाग्रतः ।
आत्तशस्त्रस्य समरे महेन्द्रस्येव दानवाः ॥ ०४२ ॥

अभिषिक्तस्तु राधेयः प्रभया सोऽमितप्रभः ।
व्यत्यरिच्यत रूपेण दिवाकर इवापरः ॥ ०४३ ॥

सेनापत्येन राधेयमभिषिच्य सुतस्तव ।
अमन्यत तदात्मानं कृतार्थं कालचोदितः ॥ ०४४ ॥

कर्णोऽपि राजन्संप्राप्य सेनापत्यमरिंदमः ।
योगमाज्ञापयामास सूर्यस्योदयनं प्रति ॥ ०४५ ॥

तव पुत्रैर्वृतः कर्णः शुशुभे तत्र भारत ।
देवैरिव यथा स्कन्दः सङ्ग्रामे तारकामये ॥ ०४६ ॥

---

# षोडशयुद्धदिवसः

## अध्याय ००७

धृतराष्ट्र उवाच ॥

सेनापत्यं तु संप्राप्य कर्णो वैकर्तनस्तदा ।
तथोक्तश्च स्वयं राज्ञा स्निग्धं भ्रातृसमं वचः ॥ ००१ ॥

योगमाज्ञाप्य सेनाया आदित्येऽभ्युदिते तदा ।
अकरोत्किं महाप्राज्ञस्तन्ममाचक्ष्व सञ्जय ॥ ००२ ॥

सञ्जय उवाच ॥

कर्णस्य मतमाज्ञाय पुत्रस्ते भरतर्षभ ।
योगमाज्ञापयामास नान्दीतूर्यपुरःसरम् ॥ ००३ ॥

महत्यपररात्रे तु तव पुत्रस्य मारिष ।
योगो योगेति सहसा प्रादुरासीन्महास्वनः ॥ ००४ ॥

नागानां कल्पमानानां रथानां च वरूथिनाम् ।
संनह्यतां पदातीनां वाजिनां च विशां पते ॥ ००५ ॥

क्रोशतां चापि योधानां त्वरितानां परस्परम् ।

बभूव तुमुलः शब्दो दिवस्पृक्सुमहांस्तदा ॥ ००६ ॥

ततः श्वेतपताकेन बालार्काकारवाजिना ।
हेमपृष्ठेन धनुषा हस्तिकक्ष्येण केतुना ॥ ००७ ॥

तूणेन शरपूर्णेन साङ्गदेन वरूथिना ।
शतघ्नीकिङ्किणीशक्तिशूलतोमरधारिणा ॥ ००८ ॥

कार्मुकेणोपपन्नेन विमलादित्यवर्चसा ।
रथेनातिपताकेन सूतपुत्रो व्यदृश्यत ॥ ००९ ॥

धमन्तं वारिजं तात हेमजालविभूषितम् ।
विधुन्वानं महच्चापं कार्तस्वरविभूषितम् ॥ ०१० ॥

दृष्ट्वा कर्णं महेष्वासं रथस्थं रथिनां वरम् ।
भानुमन्तमिवोद्यन्तं तमो घ्नन्तं सहस्रशः ॥ ०११ ॥

न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष ।
नान्येषां पुरुषव्याघ्र मेनिरे तत्र कौरवाः ॥ ०१२ ॥

ततस्तु त्वरयन्योधाञ्शङ्खशब्देन मारिष ।
कर्णो निष्कासयामास कौरवाणां वरूथिनीम् ॥ ०१३ ॥

व्यूहं व्यूह्य महेष्वासो माकरं शत्रुतापनः ।
प्रत्युद्ययौ तदा कर्णः पाण्डवान्विजिगीषया ॥ ०१४ ॥

मकरस्य तु तुण्डे वै कर्णो राजन्व्यवस्थितः ।
नेत्राभ्यां शकुनिः शूर उलूकश्च महारथः ॥ ०१५ ॥

द्रोणपुत्रस्तु शिरसि ग्रीवायां सर्वसोदराः ।
मध्ये दुर्योधनो राजा बलेन महता वृतः ॥ ०१६ ॥

वामे पादे तु राजेन्द्र कृतवर्मा व्यवस्थितः ।
नारायणबलैर्युक्तो गोपालैर्युद्धदुर्मदः ॥ ०१७ ॥

पादे तु दक्षिणे राजन्गौतमः सत्यविक्रमः ।
त्रिगर्तैश्च महेष्वासैर्दाक्षिणात्यैश्च संवृतः ॥ ०१८ ॥

अनुपादस्तु यो वामस्तत्र शल्यो व्यवस्थितः ।
महत्या सेनया सार्धं मद्रदेशसमुत्थया ॥ ०१९ ॥

दक्षिणे तु महाराज सुषेणः सत्यसङ्गरः ।
वृतो रथसहस्रैश्च दन्तिनां च शतैस्तथा ॥ ०२० ॥

पुच्छे आस्तां महावीरौ भ्रातरौ पार्थिवौ तदा ।
चित्रसेनश्च चित्रश्च महत्या सेनया वृतौ ॥ ०२१ ॥

ततः प्रयाते राजेन्द्र कर्णे नरवरोत्तमे ।
धनञ्जयमभिप्रेक्ष्य धर्मराजोऽब्रवीदिदम् ॥ ०२२ ॥

पश्य पार्थ महासेनां धार्तराष्ट्रस्य संयुगे ।
कर्णेन निर्मितां वीर गुप्तां वीरैर्महारथैः ॥ ०२३ ॥

हतवीरतमा ह्येषा धार्तराष्ट्री महाचमूः ।
फल्गुशेषा महाबाहो तृणैस्तुल्या मता मम ॥ ०२४ ॥

एको ह्यत्र महेष्वासः सूतपुत्रो व्यवस्थितः ।
सदेवासुरगन्धर्वैः सकिंनरमहोरगैः ॥ ०२५ ॥

चराचरैस्त्रिभिर्लोकैर्योऽजय्यो रथिनां वरः ॥ ०२५ ॥

तं हत्वाद्य महाबाहो विजयस्तव फल्गुन ।

उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः ॥ ०२६ ॥

एवं ज्ञात्वा महाबाहो व्यूहं व्यूह यथेच्छसि ॥ ०२६ ॥

भ्रातुस्तद्वचनं श्रुत्वा पाण्डवः श्वेतवाहनः ।
अर्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥ ०२७ ॥

वामपार्श्वेऽभवद्राजन्भीमसेनो व्यवस्थितः ।
दक्षिणे च महेष्वासो धृष्टद्युम्नो महाबलः ॥ ०२८ ॥

मध्ये व्यूहस्य साक्षात्तु पाण्डवः कृष्णसारथिः ।
नकुलः सहदेवश्च धर्मराजश्च पृष्ठतः ॥ ०२९ ॥

चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
नार्जुनं जहतुर्युद्धे पाल्यमानौ किरीटिना ॥ ०३० ॥

शेषा नृपतयो वीराः स्थिता व्यूहस्य दंशिताः ।
यथाभावं यथोत्साहं यथासत्त्वं च भारत ॥ ०३१ ॥

एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः ।
तावकाश्च महेष्वासा युद्धायैव मनो दधुः ॥ ०३२ ॥

दृष्ट्वा व्यूढां तव चमूं सूतपुत्रेण संयुगे ।
निहतान्पाण्डवान्मेने तव पुत्रः सहान्वयः ॥ ०३३ ॥

तथैव पाण्डवीं सेनां व्यूढां दृष्ट्वा युधिष्ठिरः ।
धार्तराष्ट्रान्हतान्मेने सकर्णान्वै जनाधिप ॥ ०३४ ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त सशब्दाश्च समन्ततः ॥ ०३५ ॥

सेनयोरुभयो राजन्प्रावाद्यन्त महास्वनाः ।
सिंहनादश्च सञ्जज्ञे शूराणां जयगृद्धिनाम् ॥ ०३६ ॥

हयहेषितशब्दाश्च वारणानां च बृंहितम् ।
रथनेमिस्वनाश्चोग्राः संबभूवुर्जनाधिप ॥ ०३७ ॥

न द्रोणव्यसनं कश्चिज्जानीते भरतर्षभ ।
दृष्ट्वा कर्णं महेष्वासं मुखे व्यूहस्य दंशितम् ॥ ०३८ ॥

उभे सेने महासत्त्वे प्रहृष्टनरकुञ्जरे ।
योद्धुकामे स्थिते राजन्हन्तुमन्योन्यमञ्जसा ॥ ०३९ ॥

तत्र यत्तौ सुसंरब्धौ दृष्ट्वान्योन्यं व्यवस्थितौ ।
अनीकमध्ये राजेन्द्र रेजतुः कर्णपाण्डवौ ॥ ०४० ॥

नृत्यमाने तु ते सेने समेयातां परस्परम् ।
तयोः पक्षैः प्रपक्षैश्च निर्जग्मुर्वै युयुत्सवः ॥ ०४१ ॥

ततः प्रववृते युद्धं नरवारणवाजिनाम् ।
रथिनां च महाराज अन्योन्यं निघ्नतां दृढम् ॥ ०४२ ॥

---

# अध्याय ००८

सञ्जय उवाच ॥

ते सेनेऽन्योन्यमासाद्य प्रहृष्टाश्वनरद्विपे ।
बृहत्यौ संप्रजह्राते देवासुरचमूपमे ॥ ००१ ॥

ततो गजा रथाश्वाश्वाः पत्तयश्च महाहवे ।
संप्रहारं परं चक्रुर्देहपाप्मप्रणाशनम् ॥ ००२ ॥

पूर्णचन्द्रार्कपद्मानां कान्तित्विड्गन्धतः समैः ।
उत्तमाङ्गैर्नृसिंहानां नृसिंहास्तस्तरुर्महीम् ॥ ००३ ॥

अर्धचन्द्रैस्तथा भल्लैः क्षुरप्रैरसिपट्टिशैः ।
परश्वधैश्चाप्यकृन्तन्नुत्तमाङ्गानि युध्यताम् ॥ ००४ ॥

व्यायतायतबाहूनां व्यायतायतबाहुभिः ।
व्यायता बाहवः पेतुश्छिन्नमुष्ट्यायुधाङ्गदाः ॥ ००५ ॥

तैः स्फुरद्भिर्मही भाति रक्ताङ्गुलितलैस्तदा ।
गरुडप्रहतैरुग्रैः पञ्चास्यैरिव पन्नगैः ॥ ००६ ॥

हयस्यन्दननागेभ्यः पेतुर्वीरा द्विषद्धताः ।
विमानेभ्यो यथा क्षीणे पुण्ये स्वर्गसदस्तथा ॥ ००७ ॥

गदाभिरन्यैर्गुर्वीभिः परिघैर्मुसलैरपि ।
पोथिताः शतशः पेतुर्वीरा वीरतरै रणे ॥ ००८ ॥

रथा रथैर्विनिहता मत्ता मत्तैर्द्विपैर्द्विपाः ।
सादिनः सादिभिश्चैव तस्मिन्परमसङ्कुले ॥ ००९ ॥

रथा वररथैर्नागैरश्वारोहाश्च पत्तिभिः ।
अश्वारोहैः पदाताश्च निहता युधि शेरते ॥ ०१० ॥

रथाश्वपत्तयो नागै रथैर्नागाश्च पत्तयः ।
रथपत्तिद्विपाश्चाश्वैर्नृभिश्चाश्वरथद्विपाः ॥ ०११ ॥

रथाश्वेभनराणां च नराश्वेभरथैः कृतम् ।

पाणिपादैश्च शस्त्रैश्च रथैश्च कदनं महत् ॥ ०१२ ॥

तथा तस्मिन्बले शूरैर्वध्यमाने हतेऽपि च ।
अस्मानभ्यागमन्पार्था वृकोदरपुरोगमाः ॥ ०१३ ॥

धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ।
सात्यकिश्चेकितानश्च द्रविडैः सैनिकैः सह ॥ ०१४ ॥

भृता वित्तेन महता पाण्ड्याश्चौड्राः सकेरलाः ।
व्यूढोरस्का दीर्घभुजाः प्रांशवः प्रियदर्शनाः ॥ ०१५ ॥

आपीडिनो रक्तदन्ता मत्तमातङ्गविक्रमाः ।
नानाविरागवसना गन्धचूर्णावचूर्णिताः ॥ ०१६ ॥

बद्धासयः पाशहस्ता वारणप्रतिवारणाः ।
समानमृत्यवो राजन्ननीकस्थाः परस्परम् ॥ ०१७ ॥

कलापिनश्चापहस्ता दीर्घकेशाः प्रियाहवाः ।
पत्तयः सात्यकेरन्ध्रा घोररूपपराक्रमाः ॥ ०१८ ॥

अथापरे पुनः शूराश्चेदिपाञ्चालकेकयाः ।
करूषाः कोसलाः काश्या मागधाश्चापि दुद्रुवुः ॥ ०१९ ॥

तेषां रथाश्च नागाश्च प्रवराश्चापि पत्तयः ।
नानाविधरवैर्हृष्टा नृत्यन्ति च हसन्ति च ॥ ०२० ॥

तस्य सैन्यस्य महतो महामात्रवरैर्वृतः ।
मध्यं वृकोदरोऽभ्यागात्त्वदीयं नागधूर्गतः ॥ ०२१ ॥

स नागप्रवरोऽत्युग्रो विधिवत्कल्पितो बभौ ।
उदयाद्र्यग्र्यभवनं यथाभ्युदितभास्करम् ॥ ०२२ ॥

तस्यायसं वर्मवरं वररत्नविभूषितम् ।
तारोद्भासस्य नभसः शारदस्य समत्विषम्  ॥ ०२३  ॥

स तोमरप्रासकरश्चारुमौलिः स्वलङ्कृतः ।
चरन्मध्यंदिनार्काभस्तेजसा व्यदहद्रिपून्  ॥ ०२४  ॥

तं दृष्ट्वा द्विरदं दूरात्क्षेमधूर्तिर्द्विपस्थितः ।
आह्वयानोऽभिदुद्राव प्रमनाः प्रमनस्तरम्  ॥ ०२५  ॥

तयोः समभवद्युद्धं द्विपयोरुग्ररूपयोः ।
यदृच्छया द्रुमवतोर्महापर्वतयोरिव  ॥ ०२६  ॥

संसक्तनागौ तौ वीरौ तोमरैरितरेतरम् ।
बलवत्सूर्यरश्म्याभैर्भित्त्वा भित्त्वा विनेदतुः  ॥ ०२७  ॥

व्यपसृत्य तु नागाभ्यां मण्डलानि विचेरतुः ।
प्रगृह्य चैव धनुषी जघ्नतुर्वै परस्परम्  ॥ ०२८  ॥

क्ष्वेडितास्फोटितरवैर्बाणशब्दैश्च सर्वशः ।
तौ जनान्हर्षयित्वा च सिंहनादान्प्रचक्रतुः  ॥ ०२९  ॥

समुद्यतकराभ्यां तौ द्विपाभ्यां कृतिनावुभौ ।
वातोद्धूतपताकाभ्यां युयुधाते महाबलौ  ॥ ०३०  ॥

तावन्योन्यस्य धनुषी छित्त्वान्योन्यं विनेदतुः ।
शक्तितोमरवर्षेण प्रावृण्मेघाविवाम्बुभिः  ॥ ०३१  ॥

क्षेमधूर्तिस्तदा भीमं तोमरेण स्तनान्तरे ।
निर्बिभेद तु वेगेन षड्भिश्चाप्यपरैर्नदन्  ॥ ०३२  ॥

स भीमसेनः शुशुभे तोमरैरङ्गमाश्रितैः ।
क्रोधदीप्तवपुर्मेघैः सप्तसप्तिरिवांशुमान् ॥ ०३३ ॥

ततो भास्करवर्णाभमञ्जोगतिमयस्मयम् ।
ससर्ज तोमरं भीमः प्रत्यमित्राय यत्नवान् ॥ ०३४ ॥

ततः कुलूताधिपतिश्चापमायम्य सायकैः ।
दशभिस्तोमरं छित्त्वा शक्त्या विव्याध पाण्डवम् ॥ ०३५ ॥

अथ कार्मुकमादाय महाजलदनिस्वनम् ।
रिपोरभ्यर्दयन्नागमुन्मदः पाण्डवः शरैः ॥ ०३६ ॥

स शरौघार्दितो नागो भीमसेनेन संयुगे ।
निगृह्यमाणो नातिष्ठद्वातध्वस्त इवाम्बुदः ॥ ०३७ ॥

तामभ्यधावद्द्विरदं भीमसेनस्य नागराट् ।
महावातेरितं मेघं वातोद्धूत इवाम्बुदः ॥ ०३८ ॥

संनिवर्त्यात्मनो नागं क्षेमधूर्तिः प्रयत्नतः ।
विव्याधाभिद्रुतं बाणैर्भीमसेनं सकुञ्जरम् ॥ ०३९ ॥

ततः साधुविसृष्टेन क्षुरेण पुरुषर्षभः ।
छित्त्वा शरासनं शत्रोर्नागमामित्रमार्दयत् ॥ ०४० ॥

ततः खजाकया भीमं क्षेमधूर्तिः पराभिनत् ।
जघान चास्य द्विरदं नाराचैः सर्वमर्मसु ॥ ०४१ ॥

पुरा नागस्य पतनादवप्लुत्य स्थितो महीम् ।
भीमसेनो रिपोर्नागं गदया समपोथयत् ॥ ०४२ ॥

तस्मात्प्रमथितान्नागात्क्षेमधूर्तिमवद्रुतम् ।

उद्यतासिमुपायान्तं गदयाहन्वृकोदरः ॥ ०४३ ॥

स पपात हतः सासिर्व्यसुः स्वमभितो द्विपम् ।
वज्रप्ररुग्णमचलं सिंहो वज्रहतो यथा ॥ ०४४ ॥

निहतं नृपतिं दृष्ट्वा कुलूतानां यशस्करम् ।
प्राद्रवद्व्यथिता सेना त्वदीया भरतर्षभ ॥ ०४५ ॥

---

# अध्याय ००९

सञ्जय उवाच ॥

ततः कर्णो महेष्वासः पाण्डवानामनीकिनीम् ।
जघान समरे शूरः शरैः संनतपर्वभिः ॥ ००१ ॥

तथैव पाण्डवा राजंस्तव पुत्रस्य वाहिनीम् ।
कर्णस्य प्रमुखे क्रुद्धा विनिजघ्नुर्महारथाः ॥ ००२ ॥

कर्णो राजन्महाबाहुर्न्यवधीत्पाण्डवीं चमूम् ।
नाराचैरर्करश्म्याभैः कर्मारपरिमार्जितैः ॥ ००३ ॥

तत्र भारत कर्णेन नाराचैस्ताडिता गजाः ।
नेदुः सेदुश्च मम्लुश्च बभ्रमुश्च दिशो दश ॥ ००४ ॥

वध्यमाने बले तस्मिन्सूतपुत्रेण मारिष ।
नकुलोऽभ्यद्रवत्तूर्णं सूतपुत्रं महारणे ॥ ००५ ॥

भीमसेनस्तथा द्रौणिं कुर्वाणं कर्म दुष्करम् ।
विन्दानुविन्दौ कैकेयौ सात्यकिः समवारयत् ॥ ००६ ॥

श्रुतकर्माणमायान्तं चित्रसेनो महीपतिः ।
प्रतिविन्ध्यं तथा चित्रश्चित्रकेतनकार्मुकः ॥ ००७ ॥

दुर्योधनस्तु राजानं धर्मपुत्रं युधिष्ठिरम् ।
संशप्तकगणान्क्रुद्धो अभ्यधावद्धनञ्जयः ॥ ००८ ॥

धृष्टद्युम्नः कृपं चाथ तस्मिन्वीरवरक्षये ।
शिखण्डी कृतवर्माणं समासादयदच्युतम् ॥ ००९ ॥

श्रुतकीर्तिस्तथा शल्यं माद्रीपुत्रः सुतं तव ।
दुःशासनं महाराज सहदेवः प्रतापवान् ॥ ०१० ॥

केकयौ सात्यकिं युद्धे शरवर्षेण भास्वता ।
सात्यकिः केकयौ चैव छादयामास भारत ॥ ०११ ॥

तावेनं भ्रातरौ वीरं जघ्नतुर्हृदये भृशम् ।
विषाणाभ्यां यथा नागौ प्रतिनागं महाहवे ॥ ०१२ ॥

शरसंभिन्नवर्माणौ तावुभौ भ्रातरौ रणे ।
सात्यकिं सत्यकर्माणं राजन्विव्यधतुः शरैः ॥ ०१३ ॥

तौ सात्यकिर्महाराज प्रहसन्सर्वतोदिशम् ।
छादयञ्शरवर्षेण वारयामास भारत ॥ ०१४ ॥

वार्यमाणौ ततस्तौ तु शैनेयशरवृष्टिभिः ।
शैनेयस्य रथं तूर्णं छादयामासतुः शरैः ॥ ०१५ ॥

तयोस्तु धनुषी चित्रे छित्त्वा शौरिर्महाहवे ।

अथ तौ सायकैस्तीक्ष्णैश्छादयामास दुःसहैः ॥ ०१६ ॥

अथान्ये धनुषी मृष्टे प्रगृह्य च महाशरान् ।
सात्यकिं पूरयन्तौ तौ चेरतुर्लघु सुष्ठु च ॥ ०१७ ॥

ताभ्यां मुक्ता महाबाणाः कङ्कबर्हिणवाससः ।
द्योतयन्तो दिशः सर्वाः संपेतुः स्वर्णभूषणाः ॥ ०१८ ॥

बाणान्धकारमभवत्तयो राजन्महाहवे ।
अन्योन्यस्य धनुश्चैव चिच्छिदुस्ते महारथाः ॥ ०१९ ॥

ततः क्रुद्धो महाराज सात्वतो युद्धदुर्मदः ।
धनुरन्यत्समादाय सज्यं कृत्वा च संयुगे ॥ ०२० ॥

क्षुरप्रेण सुतीक्ष्णेन अनुविन्दशिरोऽहरत् ॥ ०२० ॥

तच्छिरो न्यपतद्भूमौ कुण्डलोत्पीडितं महत् ।
शम्बरस्य शिरो यद्वन्निहतस्य महारणे ॥ ०२१ ॥

शोषयन्केकयान्सर्वाञ्जगामाशु वसुंधराम् ॥ ०२१ ॥

तं दृष्ट्वा निहतं शूरं भ्राता तस्य महारथः ।
सज्यमन्यद्धनुः कृत्वा शैनेयं प्रत्यवारयत् ॥ ०२२ ॥

स शक्त्या सात्यकिं विद्ध्वा स्वर्णपुङ्खैः शिलाशितैः ।
ननाद बलवन्नादं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ०२३ ॥

स सात्यकिं पुनः क्रुद्धः केकयानां महारथः ।
शरैरग्निशिखाकारैर्बाह्वोरुरसि चार्दयत् ॥ ०२४ ॥

स शरैः क्षतसर्वाङ्गः सात्वतः सत्त्वकोविदः ।

रराज समरे राजन्सपत्र इव किंशुकः ॥ ०२५ ॥

सात्यकिः समरे विद्धः केकयेन महात्मना ।
केकयं पञ्चविंशत्या विव्याध प्रहसन्निव ॥ ०२६ ॥

शतचन्द्रचिते गृह्य चर्मणी सुभुजौ तु तौ ।
व्यरोचेतां महारङ्गे निस्त्रिंशवरधारिणौ ॥ ०२७ ॥

यथा देवासुरे युद्धे जम्भशक्रौ महाबलौ ॥ ०२७ ॥

मण्डलानि ततस्तौ च विचरन्तौ महारणे ।
अन्योन्यमसिभिस्तूर्णं समाजघ्नतुराहवे ॥ ०२८ ॥

केकयस्य ततश्चर्म द्विधा चिच्छेद सात्वतः ।
सात्यकेश्च तथैवासौ चर्म चिच्छेद पार्थिवः ॥ ०२९ ॥

चर्म च्छित्त्वा तु कैकेयस्तारागणशतैर्वृतम् ।
चचार मण्डलान्येव गतप्रत्यागतानि च ॥ ०३० ॥

तं चरन्तं महारङ्गे निस्त्रिंशवरधारिणम् ।
अपहस्तेन चिच्छेद शैनेयस्त्वरयान्वितः ॥ ०३१ ॥

सवर्मा केकयो राजन्द्विधा छिन्नो महाहवे ।
निपपात महेष्वासो वज्रनुन्न इवाचलः ॥ ०३२ ॥

तं निहत्य रणे शूरः शैनेयो रथसत्तमः ।
युधामन्यो रथं तूर्णमारुरोह परंतपः ॥ ०३३ ॥

ततोऽन्यं रथमास्थाय विधिवत्कल्पितं पुनः ।
केकयानां महत्सैन्यं व्यधमत्सात्यकिः शरैः ॥ ०३४ ॥

सा वध्यमाना समरे केकयस्य महाचमूः ।
तमुत्सृज्य रथं शत्रुं प्रदुद्राव दिशो दश ॥ ०३५ ॥

---

# अध्याय ०१०

सञ्जय उवाच ॥

श्रुतकर्मा महाराज चित्रसेनं महीपतिम् ।
आजघ्ने समरे क्रुद्धः पञ्चाशद्भिः शिलीमुखैः ॥ ००१ ॥

अभिसारस्तु तं राजा नवभिर्निशितैः शरैः ।
श्रुतकर्माणमाहत्य सूतं विव्याध पञ्चभिः ॥ ००२ ॥

श्रुतकर्मा ततः क्रुद्धश्चित्रसेनं चमूमुखे ।
नाराचेन सुतीक्ष्णेन मर्मदेशे समर्दयत् ॥ ००३ ॥

एतस्मिन्नन्तरे चैनं श्रुतकीर्तिर्महायशाः ।
नवत्या जगतीपालं छादयामास पत्रिभिः ॥ ००४ ॥

प्रतिलभ्य ततः सञ्ज्ञां चित्रसेनो महारथः ।
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः ॥ ००५ ॥

सोऽन्यत्कार्मुकमादाय वेगघ्नं रुक्मभूषणम् ।
चित्ररूपतरं चक्रे चित्रसेनं शरोर्मिभिः ॥ ००६ ॥

स शरैश्चित्रितो राजंश्चित्रमाल्यधरो युवा ।
युवेव समशोभत्स गोष्ठीमध्ये स्वलङ्कृतः ॥ ००७ ॥

श्रुतकर्माणमथ वै नाराचेन स्तनान्तरे ।
बिभेद समरे क्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ ००८ ॥

श्रुतकर्मापि समरे नाराचेन समर्दितः ।
सुस्राव रुधिरं भूरि गैरिकाम्भ इवाचलः ॥ ००९ ॥

ततः स रुधिराक्ताङ्गो रुधिरेण कृतच्छविः ।
रराज समरे राजन्सपुष्प इव किंशुकः ॥ ०१० ॥

श्रुतकर्मा ततो राजञ्शत्रूणां समभिद्रुतः ।
शत्रुसंवरणं कृत्वा द्विधा चिच्छेद कार्मुकम् ॥ ०११ ॥

अथैनं छिन्नधन्वानं नाराचानां त्रिभिः शतैः ।
विव्याध भरतश्रेष्ठ श्रुतकर्मा महायशाः ॥ ०१२ ॥

ततोऽपरेण भल्लेन भृशं तीक्ष्णेन सत्वरः ।
जहार सशिरस्त्राणं शिरस्तस्य महात्मनः ॥ ०१३ ॥

तच्छिरो न्यपतद्भूमौ सुमहच्चित्रवर्मणः ।
यदृच्छया यथा चन्द्रश्च्युतः स्वर्गान्महीतले ॥ ०१४ ॥

राजानं निहतं दृष्ट्वा अभिसारं च मारिष ।
अभ्यद्रवन्त वेगेन चित्रसेनस्य सैनिकाः ॥ ०१५ ॥

ततः क्रुद्धो महेष्वासस्तत्सैन्यं प्राद्रवच्छरैः ।
अन्तकाले यथा क्रुद्धः सर्वभूतानि प्रेतराट् ॥ ०१६ ॥

द्रावयन्निषुभिस्तूर्णं श्रुतकर्मा व्यरोचत ॥ ०१६ ॥

प्रतिविन्ध्यस्ततश्चित्रं भित्त्वा पञ्चभिराशुगैः ।

सारथिं त्रिभिरानर्च्छद्ध्वजमेकेषुणा ततः ॥ ०१७ ॥

तं चित्रो नवभिर्भल्लैर्बाह्वोरुरसि चार्दयत् ।
स्वर्णपुङ्खैः शिलाधौतैः कङ्कबर्हिणवाजितैः ॥ ०१८ ॥

प्रतिविन्ध्यो धनुस्तस्य छित्त्वा भारत सायकैः ।
पञ्चभिर्निशितैर्बाणैरथैनं संप्रजघ्निवान् ॥ ०१९ ॥

ततः शक्तिं महाराज हेमदण्डां दुरासदाम् ।
प्राहिणोत्तव पुत्राय घोरामग्निशिखामिव ॥ ०२० ॥

तामापतन्तीं सहसा शक्तिमुल्कामिवाम्बरात् ।
द्विधा चिच्छेद समरे प्रतिविन्ध्यो हसन्निव ॥ ०२१ ॥

सा पपात तदा छिन्ना प्रतिविन्ध्यशरैः शितैः ।
युगान्ते सर्वभूतानि त्रासयन्ती यथाशनिः ॥ ०२२ ॥

शक्तिं तां प्रहतां दृष्ट्वा चित्रो गृह्य महागदाम् ।
प्रतिविन्ध्याय चिक्षेप रुक्मजालविभूषिताम् ॥ ०२३ ॥

सा जघान हयांस्तस्य सारथिं च महारणे ।
रथं प्रमृद्य वेगेन धरणीमन्वपद्यत ॥ ०२४ ॥

एतस्मिन्नेव काले तु रथादाप्लुत्य भारत ।
शक्तिं चिक्षेप चित्राय स्वर्णघण्टामलङ्कृताम् ॥ ०२५ ॥

तामापतन्तीं जग्राह चित्रो राजन्महामनाः ।
ततस्तामेव चिक्षेप प्रतिविन्ध्याय भारत ॥ ०२६ ॥

समासाद्य रणे शूरं प्रतिविन्ध्यं महाप्रभा ।
निर्भिद्य दक्षिणं बाहुं निपपात महीतले ॥ ०२७ ॥

पतिताभासयच्चैव तं देशमशनिर्यथा ॥ ०२७ ॥

प्रतिविन्ध्यस्ततो राजंस्तोमरं हेमभूषितम् ।
प्रेषयामास सङ्क्रुद्धश्चित्रस्य वधकाम्यया ॥ ०२८ ॥

स तस्य देवावरणं भित्त्वा हृदयमेव च ।
जगाम धरणीं तूर्णं महोरग इवाशयम् ॥ ०२९ ॥

स पपात तदा राजंस्तोमरेण समाहतः ।
प्रसार्य विपुलौ बाहू पीनौ परिघसंनिभौ ॥ ०३० ॥

चित्रं संप्रेक्ष्य निहतं तावका रणशोभिनः ।
अभ्यद्रवन्त वेगेन प्रतिविन्ध्यं समन्ततः ॥ ०३१ ॥

सृजन्तो विविधान्बाणाञ्शतघ्नीश्च सकिङ्किणीः ।
त एनं छादयामासुः सूर्यमभ्रगणा इव ॥ ०३२ ॥

तानपास्य महाबाहुः शरजालेन संयुगे ।
व्यद्रावयत्तव चमूं वज्रहस्त इवासुरीम् ॥ ०३३ ॥

ते वध्यमानाः समरे तावकाः पाण्डवैर्नृप ।
विप्रकीर्यन्त सहसा वातनुन्ना घना इव ॥ ०३४ ॥

विप्रद्रुते बले तस्मिन्वध्यमाने समन्ततः ।
द्रौणिरेकोऽभ्ययात्तूर्णं भीमसेनं महाबलम् ॥ ०३५ ॥

ततः समागमो घोरो बभूव सहसा तयोः ।
यथा देवासुरे युद्धे वृत्रवासवयोरभूत् ॥ ०३६ ॥

# अध्याय ०११

सञ्जय उवाच ॥

भीमसेनं ततो द्रौणी राजन्विव्याध पत्रिणा ।
त्वरया परया युक्तो दर्शयन्नस्त्रलाघवम् ॥ ००१ ॥

अथैनं पुनराजघ्ने नवत्या निशितैः शरैः ।
सर्वमर्माणि संप्रेक्ष्य मर्मज्ञो लघुहस्तवत् ॥ ००२ ॥

भीमसेनः समाकीर्णो द्रौणिना निशितैः शरैः ।
रराज समरे राजन्रश्मिवानिव भास्करः ॥ ००३ ॥

ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः ।
द्रोणपुत्रमवच्छाद्य सिंहनादममुञ्चत ॥ ००४ ॥

शरैः शरांस्ततो द्रौणिः संवार्य युधि पाण्डवम् ।
ललाटेऽभ्यहनद्राजन्नाराचेन स्मयन्निव ॥ ००५ ॥

ललाटस्थं ततो बाणं धारयामास पाण्डवः ।
यथा श‍ृङ्गं वने दृप्तः खड्गो धारयते नृप ॥ ००६ ॥

ततो द्रौणिं रणे भीमो यतमानं पराक्रमी ।
त्रिभिर्विव्याध नाराचैर्ललाटे विस्मयन्निव ॥ ००७ ॥

ललाटस्थैस्ततो बाणैर्ब्राह्मणः स व्यरोचत ।
प्रावृषीव यथा सिक्तस्त्रिश‍ृङ्गः पर्वतोत्तमः ॥ ००८ ॥

ततः शरशतैर्द्रौणिमर्दयामास पाण्डवः ।

न चैनं कम्पयामास मातरिश्वेव पर्वतम्  ॥ ००९  ॥

तथैव पाण्डवं युद्धे द्रौणिः शरशतैः शितैः ।
नाकम्पयत संहृष्टो वार्योघ इव पर्वतम्  ॥ ०१०  ॥

तावन्योन्यं शरैर्घोरैश्छादयानौ महारथौ ।
रथचर्यागतौ शूरौ शुशुभाते रणोत्कटौ  ॥ ०११  ॥

आदित्याविव संदीप्तौ लोकक्षयकरावुभौ ।
स्वरश्मिभिरिवान्योन्यं तापयन्तौ शरोत्तमैः  ॥ ०१२  ॥

कृतप्रतिकृते यत्नं कुर्वाणौ च महारणे ।
कृतप्रतिकृते यत्नं चक्राते तावभीतवत्  ॥ ०१३  ॥

व्याघ्राविव च सङ्ग्रामे चेरतुस्तौ महारथौ ।
शरदंष्ट्रौ दुराधर्षौ चापव्यात्तौ भयानकौ  ॥ ०१४  ॥

अभूतां तावदृश्यौ च शरजालैः समन्ततः ।
मेघजालैरिव च्छन्नौ गगने चन्द्रभास्करौ  ॥ ०१५  ॥

प्रकाशौ च मुहूर्तेन तत्रैवास्तामरिंदमौ ।
विमुक्तौ मेघजालेन शशिसूर्यौ यथा दिवि  ॥ ०१६  ॥

अपसव्यं ततश्चक्रे द्रौणिस्तत्र वृकोदरम् ।
किरञ्शरशतैरुग्रैर्धाराभिरिव पर्वतम्  ॥ ०१७  ॥

न तु तन्ममृषे भीमः शत्रोर्विजयलक्षणम् ।
प्रतिचक्रे च तं राजन्पाण्डवोऽप्यपसव्यतः  ॥ ०१८  ॥

मण्डलानां विभागेषु गतप्रत्यागतेषु च ।
बभूव तुमुलं युद्धं तयोस्तत्र महामृधे  ॥ ०१९  ॥

चरित्वा विविधान्मार्गान्मण्डलं स्थानमेव च ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ०२० ॥

अन्योन्यस्य वधे यत्नं चक्रतुस्तौ महारथौ ।
ईषतुर्विरथं चैव कर्तुमन्योन्यमाहवे ॥ ०२१ ॥

ततो द्रौणिर्महास्त्राणि प्रादुश्चक्रे महारथः ।
तान्यस्त्रैरेव समरे प्रतिजघ्नेऽस्य पाण्डवः ॥ ०२२ ॥

ततो घोरं महाराज अस्त्रयुद्धमवर्तत ।
ग्रहयुद्धं यथा घोरं प्रजासंहरणे अभूत् ॥ ०२३ ॥

ते बाणाः समसज्जन्त क्षिप्तास्ताभ्यां तु भारत ।
द्योतयन्तो दिशः सर्वास्तच्च सैन्यं समन्ततः ॥ ०२४ ॥

बाणसंघावृतं घोरमाकाशं समपद्यत ।
उल्कापातकृतं यद्वत्प्रजानां सङ्क्षये नृप ॥ ०२५ ॥

बाणाभिघातात्सञ्जज्ञे तत्र भारत पावकः ।
सविस्फुलिङ्गो दीप्तार्चिः सोऽदहद्वाहिनीद्वयम् ॥ ०२६ ॥

तत्र सिद्धा महाराज संपतन्तोऽब्रुवन्वचः ।
अति युद्धानि सर्वाणि युद्धमेतत्ततोऽधिकम् ॥ ०२७ ॥

सर्वयुद्धानि चैतस्य कलां नार्हन्ति षोडशीम् ।
नैतादृशं पुनर्युद्धं न भूतं न भविष्यति ॥ ०२८ ॥

अहो ज्ञानेन संयुक्तावुभौ चोग्रपराक्रमौ ।
अहो भीमे बलं भीममेतयोश्च कृतास्त्रता ॥ ०२९ ॥

अहो वीर्यस्य सारत्वमहो सौष्ठवमेतयोः ।
स्थितावेतौ हि समरे कालान्तकयमोपमौ ॥ ०३० ॥

रुद्रौ द्वाविव संभूतौ यथा द्वाविव भास्करौ ।
यमौ वा पुरुषव्याघ्रौ घोररूपाविमौ रणे ॥ ०३१ ॥

श्रूयन्ते स्म तदा वाचः सिद्धानां वै मुहुर्मुहुः ।
सिंहनादश्च सञ्जज्ञे समेतानां दिवौकसाम् ॥ ०३२ ॥

अद्भुतं चाप्यचिन्त्यं च दृष्ट्वा कर्म तयोर्मृधे ॥ ०३२ ॥

तौ शूरौ समरे राजन्परस्परकृतागसौ ।
परस्परमुदैक्षेतां क्रोधादुद्वृत्य चक्षुषी ॥ ०३३ ॥

क्रोधरक्तेक्षणौ तौ तु क्रोधात्प्रस्फुरिताधरौ ।
क्रोधात्संदष्टदशनौ संदष्टदशनच्छदौ ॥ ०३४ ॥

अन्योन्यं छादयन्तौ स्म शरवृष्ट्या महारथौ ।
शराम्बुधारौ समरे शस्त्रविद्युत्प्रकाशिनौ ॥ ०३५ ॥

तावन्योन्यं ध्वजौ विद्ध्वा सारथी च महारथौ ।
अन्योन्यस्य हयान्विद्ध्वा बिभिदाते परस्परम् ॥ ०३६ ॥

ततः क्रुद्धौ महाराज बाणौ गृह्य महाहवे ।
उभौ चिक्षिपतुस्तूर्णमन्योन्यस्य वधैषिणौ ॥ ०३७ ॥

तौ सायकौ महाराज द्योतमानौ चमूमुखे ।
आजघ्नाते समासाद्य वज्रवेगौ दुरासदौ ॥ ०३८ ॥

तौ परस्परवेगाच्च शराभ्यां च भृशाहतौ ।
निपेततुर्महावीरौ स्वरथोपस्थयोस्तदा ॥ ०३९ ॥

ततस्तु सारथिर्ज्ञात्वा द्रोणपुत्रमचेतनम् ।
अपोवाह रणाद्राजन्सर्वक्षत्रस्य पश्यतः ॥ ०४० ॥

तथैव पाण्डवं राजन्विह्वलन्तं मुहुर्मुहुः ।
अपोवाह रथेनाजौ सारथिः शत्रुतापनम् ॥ ०४१ ॥

---

# अध्याय ०१२

धृतराष्ट्र उवाच ॥

यथा संशप्तकैः सार्धमर्जुनस्याभवद्रणः ।
अन्येषां च मदीयानां पाण्डवैस्तद्ब्रवीहि मे ॥ ००१ ॥

सञ्जय उवाच ॥

शृणु राजन्यथावृत्तं सङ्ग्रामं ब्रुवतो मम ।
वीराणां शत्रुभिः सार्धं देहपाप्मप्रणाशनम् ॥ ००२ ॥

पार्थः संशप्तकगणं प्रविश्यार्णवसंनिभम् ।
व्यक्षोभयदमित्रघ्नो महावात इवार्णवम् ॥ ००३ ॥

शिरांस्युन्मथ्य वीराणां शितैर्भल्लैर्धनञ्जयः ।
पूर्णचन्द्राभवक्त्राणि स्वक्षिभ्रूदशनानि च ॥ ००४ ॥

संतस्तार क्षितिं क्षिप्रं विनालैर्नलिनैरिव ॥ ००४ ॥

सुवृत्तानायतान्पुष्टांश्चन्दनागुरुभूषितान् ।
सायुधान्सतनुत्राणान्पञ्चास्योरगसंनिभान्  ॥ ००५  ॥

बाहून्क्षुरैरमित्राणां विचकर्तार्जुनो रणे  ॥ ००५  ॥

धुर्यान्धुर्यतरान्सूतान्ध्वजांश्चापानि सायकान् ।
पाणीनरत्नीनसकृद्भल्लैश्चिच्छेद पाण्डवः  ॥ ००६  ॥

द्विपान्हयान्रथांश्चैव सारोहानर्जुनो रणे ।
शरैरनेकसाहस्रै राजन्निन्ये यमक्षयम्  ॥ ००७  ॥

तं प्रवीरं प्रतीयाता नर्दमाना इवर्षभाः ।
वाशितार्थमभिक्रुद्धा हुङ्कृत्वा चाभिदुद्रुवुः  ॥ ००८  ॥

निघ्नन्तमभिजघ्नुस्ते शरैः शृङ्गैरिवर्षभाः  ॥ ००८  ॥

तस्य तेषां च तद्युद्धमभवल्लोमहर्षणम् ।
त्रैलोक्यविजये यादृग्दैत्यानां सह वज्रिणा  ॥ ००९  ॥

अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतोऽर्जुनः ।
इषुभिर्बहुभिस्तूर्णं विद्ध्वा प्राणान्नरास सः  ॥ ०१०  ॥

छिन्नत्रिवेणुचक्राक्षान्हतयोधाश्वसारथीन् ।
विध्वस्तायुधतूणीरान्समुन्मथितकेतनान्  ॥ ०११  ॥

संछिन्नयोक्त्ररश्मीकान्वित्रिवेणून्विकूबरान् ।
विध्वस्तबन्धुरयुगान्विशस्तायुधमण्डलान्  ॥ ०१२  ॥

रथान्विशकलीकुर्वन्महाभ्राणीव मारुतः  ॥ ०१२  ॥

विस्मापयन्प्रेक्षणीयं द्विषातां भयवर्धनम् ।

महारथसहस्रस्य समं कर्मार्जुनोऽकरोत्  ॥ ०१३  ॥

सिद्धदेवर्षिसंघाश्च चारणाश्चैव तुष्टुवुः ।
देवदुन्दुभयो नेदुः पुष्पवर्षाणि चापतन्  ॥ ०१४  ॥

केशवार्जुनयोर्मूर्ध्नि प्राह वाक्काशरीरिणी  ॥ ०१४  ॥

चन्द्रार्कानिलवह्नीनां कान्तिदीप्तिबलद्युतीः ।
यौ सदा बिभ्रतुर्वीरौ ताविमौ केशवार्जुनौ  ॥ ०१५  ॥

ब्रह्मेशानाविवाजय्यौ वीरावेकरथे स्थितौ ।
सर्वभूतवरौ वीरौ नरनारायणावुभौ  ॥ ०१६  ॥

इत्येतन्महदाश्चर्यं दृष्ट्वा श्रुत्वा च भारत ।
अश्वत्थामा सुसंयत्तः कृष्णावभ्यद्रवद्रणे  ॥ ०१७  ॥

अथ पाण्डवमस्यन्तं यमकालान्तकाञ्शरान् ।
सेषुणा पाणिनाहूय हसन्द्रौणिरथाब्रवीत्  ॥ ०१८  ॥

यदि मां मन्यसे वीर प्राप्तमर्हमिवातिथिम् ।
ततः सर्वात्मनाद्य त्वं युद्धातिथ्यं प्रयच्छ मे  ॥ ०१९  ॥

एवमाचार्यपुत्रेण समाहूतो युयुत्सया ।
बहु मेनेऽर्जुनोऽऽत्मानमिदं चाह जनार्दनम्  ॥ ०२०  ॥

संशप्तकाश्च मे वध्या द्रौणिराह्वयते च माम् ।
यदत्रानन्तरं प्राप्तं प्रशाधि त्वं महाभुज  ॥ ०२१  ॥

एवमुक्तोऽवहत्पार्थं कृष्णो द्रोणात्मजान्तिकम् ।
जैत्रेण विधिनाहूतं वायुरिन्द्रमिवाध्वरे  ॥ ०२२  ॥

तमामन्त्र्यैकमनसा केशवो द्रौणिमब्रवीत् ।
अश्वत्थामन्स्थिरो भूत्वा प्रहराशु सहस्व च ॥ ०२३ ॥

निर्वेष्टुं भर्तृपिण्डं हि कालोऽयमुपजीविनाम् ।
सूक्ष्मो विवादो विप्राणां स्थूलौ क्षात्रौ जयाजयौ ॥ ०२४ ॥

यां न सङ्क्रमसे मोहाद्दिव्यां पार्थस्य सत्क्रियाम् ।
तामाप्तुमिच्छन्युध्यस्व स्थिरो भूत्वाद्य पाण्डवम् ॥ ०२५ ॥

इत्युक्तो वासुदेवेन तथेत्युक्त्वा द्विजोत्तमः ।
विव्याध केशवं षष्ट्या नाराचैरर्जुनं त्रिभिः ॥ ०२६ ॥

तस्यार्जुनः सुसङ्क्रुद्धस्त्रिभिर्भल्लैः शरासनम् ।
चिच्छेदाथान्यदादत्त द्रौणिर्घोरतरं धनुः ॥ ०२७ ॥

सज्यं कृत्वा निमेषात्तद्विव्याधार्जुनकेशवौ ।
त्रिभिः शरैर्वासुदेवं सहस्रेण च पाण्डवम् ॥ ०२८ ॥

ततः शरसहस्राणि प्रयुतान्यर्बुदानि च ।
ससृजे द्रौणिरायस्तः संस्तभ्य च रणेऽर्जुनम् ॥ ०२९ ॥

इषुधेर्धनुषो ज्याया अङ्गुलीभ्यश्च मारिष ।
बाह्वोः कराभ्यामुरसो वदनघ्राणनेत्रतः ॥ ०३० ॥

कर्णाभ्यां शिरसोऽङ्गेभ्यो लोमवर्त्मभ्य एव च ।
रथध्वजेभ्यश्च शरा निष्पेतुर्ब्रह्मवादिनः ॥ ०३१ ॥

शरजालेन महता विद्ध्वा केशवपाण्डवौ ।
ननाद मुदितो द्रौणिर्महामेघौघनिस्वनः ॥ ०३२ ॥

तस्य नानदतः श्रुत्वा पाण्डवोऽच्युतमब्रवीत् ।

पश्य माधव दौरात्म्यं द्रोणपुत्रस्य मां प्रति ॥ ०३३ ॥

वधप्राप्तौ मन्यते नौ प्रवेश्य शरवेश्मनि ।
एषोऽस्य हन्मि सङ्कल्पं शिक्षया च बलेन च ॥ ०३४ ॥

अश्वत्थाम्नः शरानस्तांश्छित्त्वैकैकं त्रिधा त्रिधा ।
व्यधमद्वरतश्रेष्ठो नीहारमिव मारुतः ॥ ०३५ ॥

ततः संशप्तकान्भूयः साश्वसूतरथद्विपान् ।
ध्वजपत्तिगणानुग्रैर्बाणैर्विव्याध पाण्डवः ॥ ०३६ ॥

ये ये ददृशिरे तत्र यद्यद्रूपं यथा यथा ।
ते ते तत्तच्छरैर्व्याप्तं मेनिरेऽऽत्मानमेव च ॥ ०३७ ॥

ते गाण्डीवप्रणुदिता नानारूपाः पतत्रिणः ।
क्रोशे साग्रे स्थितान्घ्नन्ति द्विपांश्च पुरुषान्रणे ॥ ०३८ ॥

भल्लैश्छिन्नाः कराः पेतुः करिणां मदकर्षिणाम् ।
छिन्ना यथा परशुभिः प्रवृद्धाः शरदि द्रुमाः ॥ ०३९ ॥

पश्चात्तु शैलवत्पेतुस्ते गजाः सह सादिभिः ।
वज्रिवज्रप्रमथिता यथैवाद्रिचयास्तथा ॥ ०४० ॥

गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान् ।
विनीतजवनान्युक्तानास्थितान्युद्धदुर्मदान् ॥ ०४१ ॥

शरैर्विशकलीकुर्वन्नमित्रानभ्यवीवृषत् ।
अलङ्कृतानश्वसादीन्पत्तींश्चाहन्धनञ्जयः ॥ ०४२ ॥

धनञ्जययुगान्तार्कः संशप्तकमहार्णवम् ।
व्यशोषयत दुःशोषं तीव्रैः शरगभस्तिभिः ॥ ०४३ ॥

पुनर्द्रौणिमहाशैलं नाराचैः सूर्यसंनिभैः ।
निर्बिभेद महावेगैस्त्वरन्वज्रीव पर्वतम्  ॥ ०४४  ॥

तमाचार्यसुतः क्रुद्धः साश्वयन्तारमाशुगैः ।
युयुत्सुर्नाशकद्योद्धुं पार्थस्तानन्तराच्छिनत्  ॥ ०४५  ॥

ततः परमसङ्क्रुद्धः काण्डकोशानवासृजत् ।
अश्वत्थामाभिरूपाय गृहानतिथये यथा  ॥ ०४६  ॥

अथ संशप्तकांस्त्यक्त्वा पाण्डवो द्रौणिमभ्ययात् ।
अपाङ्क्तेयमिव त्यक्त्वा दाता पाङ्क्तेयमर्थिनम्  ॥ ०४७  ॥

ततः समभवद्युद्धं शुक्राङ्गिरसवर्चसोः ।
नक्षत्रमभितो व्योम्नि शुक्राङ्गिरसयोरिव  ॥ ०४८  ॥

संतापयन्तावन्योन्यं दीप्तैः शरगभस्तिभिः ।
लोकत्रासकरावास्तां विमार्गस्थौ ग्रहाविव  ॥ ०४९  ॥

ततोऽविध्यद्भ्रुवोर्मध्ये नाराचेनार्जुनो भृशम् ।
स तेन विबभौ द्रौणिरूर्ध्वरश्मिर्यथा रविः  ॥ ०५०  ॥

अथ कृष्णौ शरशतैरश्वत्थाम्नार्दितौ भृशम् ।
सरश्मिजालनिकरौ युगान्तार्काविवासतुः  ॥ ०५१  ॥

ततोऽर्जुनः सर्वतोधारमस्त्र ;मवासृजद्वासुदेवाभिगुप्तः ।
द्रौणायनिं चाभ्यहनत्पृषत्कै ;र्वज्राग्निवैवस्वतदण्डकल्पैः  ॥ ०५२  ॥

स केशवं चार्जुनं चातितेजा ; विव्याध मर्मस्वतिरौद्रकर्मा ।
बाणैः सुमुक्तैरतितीव्रवेगै ;र्यैराहतो मृत्युरपि व्यथेत  ॥ ०५३  ॥

द्रौणेरिषूनर्जुनः संनिवार्य ; व्यायच्छतस्तद्द्विगुणैः सुपुङ्खैः ।
तं साश्वसूतध्वजमेकवीर ;मावृत्य संशप्तकसैन्यमार्छत् ॥ ०५४ ॥

धनूंषि बाणानिषुधीर्धनुर्ज्याः ; पाणीन्भुजान्पाणिगतं च शस्त्रम् ।
छत्राणि केतूंस्तुरगानथैषां ; वस्त्राणि माल्यान्यथ भूषणानि ॥ ०५५ ॥

चर्माणि वर्माणि मनोरथांश्च ; प्रियाणि सर्वाणि शिरांसि चैव ।
चिच्छेद पार्थो द्विषतां प्रमुक्तै ;र्बाणैः स्थितानामपराङ्मुखानाम् ॥ ०५६ ॥

सुकल्पिताः स्यन्दनवाजिनागाः ; समास्थिताः कृतयत्नैर्नृवीरैः ।
पार्थेरितैर्बाणगणैर्निरस्ता ;स्तैरेव सार्धं नृवरैर्निपेतुः ॥ ०५७ ॥

पद्मार्कपूर्णेन्दुसमाननानि ; किरीटमालामुकुटोत्कटानि ।
भल्लार्धचन्द्रक्षुरहिंसितानि ; प्रपेतुरुर्व्यां नृशिरांस्यजस्रम् ॥ ०५८ ॥

अथ द्विपैर्देवपतिद्विपाभै ;र्देवारिदर्पोल्बणमन्युदर्पैः ।
कलिङ्गवङ्गाङ्गनिषादवीरा ; जिघांसवः पाण्डवमभ्यधावन् ॥ ०५९ ॥

तेषां द्विपानां विचकर्त पार्थो ; वर्माणि मर्माणि करान्नियन्तॄन् ।
ध्वजाः पताकाश्च ततः प्रपेतु ;र्वज्राहतानीव गिरेः शिरांसि ॥ ०६० ॥

तेषु प्ररुग्णेषु गुरोस्तनूजं ; बाणैः किरीटी नवसूर्यवर्णैः ।
प्रच्छादयामास महाभ्रजालै ;र्वायुः समुद्युक्तमिवांशुमन्तम् ॥ ०६१ ॥

ततोऽर्जुनेषूनिषुभिर्निरस्य ; द्रौणिः शरैरर्जुनवासुदेवौ ।
प्रच्छादयित्व दिवि चन्द्रसूर्यौ ; ननाद सोऽम्भोद इवातपान्ते ॥ ०६२ ॥

तमर्जुनस्तांश्च पुनस्त्वदीया ;नभ्यर्दितस्तैरविकृत्तशस्त्रैः ।
बाणान्धकारं सहसैव कृत्वा ; विव्याध सर्वानिषुभिः सुपुङ्खैः ॥ ०६३ ॥

नाप्याददत्संदधन्नैव मुञ्च ;न्बाणान्रणेऽदृश्यत सव्यसाची ।

हतांश्च नागांस्तुरगान्पदाती ;न्संस्यूतदेहान्ददृशू रथांश्च ॥ ०६४ ॥

संधाय नाराचवरान्दशाशु ; द्रौणिस्त्वरन्नेकमिवोत्ससर्ज ।
तेषां च पञ्चार्जुनमभ्यविध्य ;न्पञ्चाच्युतं निर्बिभिदुः सुमुक्ताः ॥ ०६५ ॥

तैराहतौ सर्वमनुष्यमुख्या ;वसृक्क्षरन्तौ धनदेन्द्रकल्पौ ।
समाप्तविद्येन यथाभिभूतौ ; हतौ स्विदेतौ किमु मेनिरेऽन्ये ॥ ०६६ ॥

अथार्जुनं प्राह दशार्हनाथः ; प्रमाद्यसे किं जहि योधमेतम् ।
कुर्याद्धि दोषं समुपेक्षितोऽसौ ; कष्टो भवेद्व्याधिरिवाक्रियावान् ॥ ०६७ ॥

तथेति चोक्त्वाच्युतमप्रमादी ; द्रौणिं प्रयत्नादिषुभिस्ततक्ष ।
छित्त्वाश्वरश्मींस्तुरगानविध्य ;त्ते तं रणादूहुरतीव दूरम् ॥ ०६८ ॥

आवृत्य नेयेष पुनस्तु युद्धं ; पार्थेन सार्धं मतिमान्विमृश्य ।
जानञ्जयं नियतं वृष्णिवीरे ; धनञ्जये चाङ्गिरसां वरिष्ठः ॥ ०६९ ॥

प्रतीपकाये तु रणादश्वत्थाम्नि हृते हयैः ।
मन्त्रौषधिक्रियादानैर्व्याधौ देहादिवाहृते ॥ ०७० ॥

संशप्तकानभिमुखौ प्रयातौ केशवार्जुनौ ।
वातोद्धूतपताकेन स्यन्दनेनौघनादिना ॥ ०७१ ॥

---

# अध्याय ०१३

सञ्जय उवाच ॥

अथोत्तरेण पाण्डूनां सेनायां ध्वनिरुत्थितः ।
रथनागाश्वपत्तीनां दण्डधारेण वध्यताम्  ॥ ००१  ॥

निवर्तयित्वा तु रथं केशवोऽर्जुनमब्रवीत् ।
वाहयन्नेव तुरगान्गारुडानिलरंहसः  ॥ ००२  ॥

मागधोऽथाप्यतिक्रान्तो द्विरदेन प्रमाथिना ।
भगदत्तादनवरः शिक्षया च बलेन च  ॥ ००३  ॥

एनं हत्वा निहन्तासि पुनः संशप्तकानिति ।
वाक्यान्ते प्रापयत्पार्थं दण्डधारान्तिकं प्रति  ॥ ००४  ॥

स मागधानां प्रवरोऽङ्कुशग्रहो ; ग्रहेष्वसह्यो विकचो यथा ग्रहः ।
सपत्नसेनां प्रममाथ दारुणो ; महीं समग्रां विकचो यथा ग्रहः  ॥ ००५  ॥

सुकल्पितं दानवनागसंनिभं ; महाभ्रसंह्रादममित्रमर्दनम् ।
रथाश्वमातङ्गगणान्सहस्रशः ; समास्थितो हन्ति शरैर्द्विपानपि  ॥ ००६  ॥

रथानधिष्ठाय सवाजिसारथी ;न्रथांश्च पद्भिस्त्वरितो व्यपोथयत् ।
द्विपांश्च पद्भ्यां चरणैः करेण च ; द्विपास्थितो हन्ति स कालचक्रवत्  ॥ ००७  ॥

नरांश्च कार्ष्णायसवर्मभूषणा ;न्निपात्य साश्वानपि पत्तिभिः सह ।
व्यपोथयद्दन्तिवरेण शुष्मिणा ; सशब्दवत्स्थूलनडान्यथा तथा  ॥ ००८  ॥

अथार्जुनो ज्यातलनेमिनिस्वने ; मृदङ्गभेरीबहुशङ्खनादिते ।
नराश्वमातङ्गसहस्रनादितै ; रथोत्तमेनाभ्यपतद्द्विपोत्तमम्  ॥ ००९  ॥

ततोऽर्जुनं द्वादशभिः शरोत्तमै ;र्जनार्दनं षोडशभिः समार्दयत् ।
स दण्डधारस्तुरगांस्त्रिभिस्त्रिभि ;स्ततो ननाद प्रजहास चासकृत्  ॥ ०१०  ॥

ततोऽस्य पार्थः सगुणेषुकार्मुकं ; चकर्त भल्लैर्ध्वजमप्यलङ्कृतम् ।

पुनर्नियन्तॄन्सह पादगोप्तृभि ;स्ततस्तु चुक्रोध गिरिव्रजेश्वरः ॥ ०११ ॥

ततोऽर्जुनं भिन्नकटेन दन्तिना ; घनाघनेनानिलतुल्यरंहसा ।
अतीव चुक्षोभयिषुर्जनार्दनं ; धनञ्जयं चाभिजघान तोमरैः ॥ ०१२ ॥

अथास्य बाहू द्विपहस्तसंनिभौ ; शिरश्च पूर्णेन्दुनिभाननं त्रिभिः ।
क्षुरैः प्रचिच्छेद सहैव पाण्डव ;स्ततो द्विपं बाणशतैः समार्दयत् ॥ ०१३ ॥

स पार्थबाणैस्तपनीयभूषणैः ; समारुचत्काञ्चनवर्मभृद्द्विपः ।
तथा चकाशे निशि पर्वतो यथा ; दवाग्निना प्रज्वलितौषधिद्रुमः ॥ ०१४ ॥

स वेदनार्तोऽम्बुदनिस्वनो नदं ;श्चलन्भ्रमन्प्रस्खलितोऽऽतुरो द्रवन् ।
पपात रुग्णः सनियन्तृकस्तथा ; यथा गिरिर्वज्रनिपातचूर्णितः ॥ ०१५ ॥

हिमावदातेन सुवर्णमालिना ; हिमाद्रिकूटप्रतिमेन दन्तिना ।
हते रणे भ्रातरि दण्ड आव्रज ;ज्जिघांसुरिन्द्रावरजं धनञ्जयम् ॥ ०१६ ॥

स तोमरैरर्ककरप्रभैस्त्रिभि ;र्जनार्दनं पञ्चभिरेव चार्जुनम् ।
समर्पयित्वा विननाद चार्दयं ;स्ततोऽस्य बाहू विचकर्त पाण्डवः ॥ ०१७ ॥

क्षुरप्रकृत्तौ सुभृशं सतोमरौ ; च्युताङ्गदौ चन्दनरूषितौ भुजौ ।
गजात्पतन्तौ युगपद्विरेजतु ;र्यथाद्रिशृङ्गात्पतितौ महोरगौ ॥ ०१८ ॥

अथार्धचन्द्रेण हृतं किरीटिना ; पपात दण्डस्य शिरः क्षितिं द्विपात् ।
तच्छोणिताभं निपतद्विरेजे ; दिवाकरोऽस्तादिव पश्चिमां दिशम् ॥ ०१९ ॥

अथ द्विपं श्वेतनगाग्रसंनिभं ; दिवाकरांशुप्रतिमैः शरोत्तमैः ।
बिभेद पार्थः स पपात नानद ;न्हिमाद्रिकूटः कुलिशाहतो यथा ॥ ०२० ॥

ततोऽपरे तत्प्रतिमा गजोत्तमा ; जिगीषवः संयति सव्यसाचिनम् ।
तथा कृतास्तेन यथैव तौ द्विपौ ; ततः प्रभग्नं सुमहद्रिपोर्बलम् ॥ ०२१ ॥

गजा रथाश्वाः पुरुषाश्च संघशः ; परस्परघ्नाः परिपेतुराहवे ।
परस्परप्रस्खलिताः समाहता ; भृशं च तत्तत्कुलभाषिणो हताः ॥ ०२२ ॥

अथार्जुनं स्वे परिवार्य सैनिकाः ; पुरंदरं देवगणा इवाब्रुवन् ।
अभैष्म यस्मान्मरणादिव प्रजाः ; स वीर दिष्ट्या निहतस्त्वया रिपुः ॥ ०२३ ॥

न चेत्परित्रास्य इमाञ्जनान्भया ;द्विषद्भिरेवं बलिभिः प्रपीडितान् ।
तथाभविष्यद्द्विषतां प्रमोदनं ; यथा हतेष्वेष्विह नोऽरिषु त्वया ॥ ०२४ ॥

इतीव भूयश्च सुहृद्भिरीरिता ; निशम्य वाचः सुमनास्ततोऽर्जुनः ।
यथानुरूपं प्रतिपूज्य तं जनं ; जगाम संशप्तकसंघहा पुनः ॥ ०२५ ॥

---

# अध्याय ०१४

सञ्जय उवाच ॥

प्रत्यागत्य पुनर्जिष्णुरहन्संशप्तकान्बहून् ।
वक्रानुवक्रगमनादङ्गारक इव ग्रहः ॥ ००१ ॥

पार्थबाणहता राजन्नराश्वरथकुञ्जराः ।
विचेलुर्बभ्रमुर्नेदुः पेतुर्मम्लुश्च मारिष ॥ ००२ ॥

धुर्यं धुर्यतरान्सूतान्रथांश्च परिसङ्क्षिपन् ।
पाणीन्पाणिगतं शस्त्रं बाहूनपि शिरांसि च ॥ ००३ ॥

भल्लैः क्षुरैरर्धचन्द्रैर्वत्सदन्तैश्च पाण्डवः ।
चिच्छेदामित्रवीराणां समरे प्रतियुध्यताम् ॥ ००४ ॥

वाशितार्थे युयुत्सन्तो वृषभा वृषभं यथा ।
आपतन्त्यर्जुनं शूराः शतशोऽथ सहस्रशः ॥ ००५ ॥

तेषां तस्य च तद्युद्धमभवल्लोमहर्षणम् ।
त्रैलोक्यविजये यादृग्दैत्यानां सह वज्रिणा ॥ ००६ ॥

तमविध्यत्त्रिभिर्बाणैर्दन्दशूकैरिवाहिभिः ।
उग्रायुधस्ततस्तस्य शिरः कायादपाहरत् ॥ ००७ ॥

तेऽर्जुनं सर्वतः क्रुद्धा नानाशस्त्रैरवीवृषन् ।
मरुद्भिः प्रेषिता मेघा हिमवन्तमिवोष्णगे ॥ ००८ ॥

अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतोऽर्जुनः ।
सम्यगस्तैः शरैः सर्वान्सहितानहनद्बहून् ॥ ००९ ॥

छिन्नत्रिवेणुजङ्घेषान्निहतपार्ष्णिसारथीन् ।
संछिन्नरश्मियोक्त्राक्षान्व्यनुकर्षयुगान्रथान् ॥ ०१० ॥

विध्वस्तसर्वसंनाहान्बाणैश्चक्रेऽर्जुनस्त्वरन् ॥ ०१० ॥

ते रथास्तत्र विध्वस्ताः परार्ध्या भान्त्यनेकशः ।
धनिनामिव वेश्मानि हतान्यग्न्यनिलाम्बुभिः ॥ ०११ ॥

द्विपाः संभिन्नमर्माणो वज्राशनिसमैः शरैः ।
पेतुर्गिर्यग्रवेश्मानि वज्रवाताग्निभिर्यथा ॥ ०१२ ॥

सारोहास्तुरगाः पेतुर्बहवोऽर्जुनताडिताः ।
निर्जिह्वान्त्राः क्षितौ क्षीणा रुधिरार्द्राः सुदुर्दृशः ॥ ०१३ ॥

नराश्वनागा नाराचैः संस्यूताः सव्यसाचिना ।

बभ्रमुश्चस्खलुः पेतुर्नेदुर्मम्लुश्च मारिष ॥ ०१४ ॥

अणकैश्च शिलाधौतैर्वज्राशनिविषोपमैः ।
शरैर्निजघ्निवान्पार्थो महेन्द्र इव दानवान् ॥ ०१५ ॥

महार्हवर्माभरणा नानारूपाम्बरायुधाः ।
सरथाः सध्वजा वीरा हताः पार्थेन शेरते ॥ ०१६ ॥

विजिताः पुण्यकर्माणो विशिष्टाभिजनश्रुताः ।
गताः शरीरैर्वसुधामूर्जितैः कर्मभिर्दिवम् ॥ ०१७ ॥

अथार्जुनरथं वीरास्त्वदीयाः समुपाद्रवन् ।
नानाजनपदाध्यक्षाः सगणा जातमन्यवः ॥ ०१८ ॥

उह्यमाना रथाश्वैस्ते पत्तयश्च जिघांसवः ।
समभ्यधावन्नस्यन्तो विविधं क्षिप्रमायुधम् ॥ ०१९ ॥

तदायुधमहावर्षं क्षिप्तं योधमहाम्बुदैः ।
व्यधमन्निशितैर्बाणैः क्षिप्रमर्जुनमारुतः ॥ ०२० ॥

साश्वपत्तिद्विपरथं महाशस्त्रौघमप्लवम् ।
सहसा संतितीर्षन्तं पार्थं शस्त्रास्त्रसेतुना ॥ ०२१ ॥

अथाब्रवीद्वासुदेवः पार्थं किं क्रीडसेऽनघ ।
संशप्तकान्प्रमथ्यैतांस्ततः कर्णवधे त्वर ॥ ०२२ ॥

तथेत्युक्त्वार्जुनः क्षिप्रं शिष्टान्संशप्तकांस्तदा ।
आक्षिप्य शस्त्रेण बलाद्दैत्यानिन्द्र इवावधीत् ॥ ०२३ ॥

आदधत्संदधन्नेषून्दृष्टः कैश्चिद्रणेऽर्जुनः ।
विमुञ्चन्वा शराञ्शीघ्रं दृश्यते स्म हि कैरपि ॥ ०२४ ॥

आश्चर्यमिति गोविन्दो ब्रुवन्नश्वानचोदयत् ।
हंसांसगौरास्ते सेनां हंसाः सर इवाविशन्  ॥ ०२५  ॥

ततः सङ्ग्रामभूमिं तां वर्तमाने जनक्षये ।
अवेक्षमाणो गोविन्दः सव्यसाचिनमब्रवीत्  ॥ ०२६  ॥

एष पार्थ महारौद्रो वर्तते भरतक्षयः ।
पृथिव्यां पार्थिवानां वै दुर्योधनकृते महान्  ॥ ०२७  ॥

पश्य भारत चापानि रुक्मपृष्ठानि धन्विनाम् ।
महतामपविद्धानि कलापानिषुधीस्तथा  ॥ ०२८  ॥

जातरूपमयैः पुङ्खैः शरांश्च नतपर्वणः ।
तैलधौतांश्च नाराचान्निर्मुक्तानिव पन्नगान्  ॥ ०२९  ॥

हस्तिदन्तत्सरून्खड्गाञ्जातरूपपरिष्कृतान् ।
आकीर्णांस्तोमरांश्चापांश्चित्रान्हेमविभूषितान्  ॥ ०३०  ॥

वर्माणि चापविद्धानि रुक्मपृष्ठानि भारत ।
सुवर्णविकृतान्प्रासाञ्शक्तीः कनकभूषिताः  ॥ ०३१  ॥

जाम्बूनदमयैः पट्टैर्बद्धाश्च विपुला गदाः ।
जातरूपमयीश्चर्ष्टीः पट्टिशान्हेमभूषितान्  ॥ ०३२  ॥

दण्डैः कनकचित्रैश्च विप्रविद्धान्परश्वधान् ।
अयस्कुशान्तान्पतितान्मुसलानि गुरूणि च  ॥ ०३३  ॥

शतघ्नीः पश्य चित्राश्च विपुलान्परिघांस्तथा ।
चक्राणि चापविद्धानि मुद्गरांश्च बहून्रणे  ॥ ०३४  ॥

नानाविधानि शस्त्राणि प्रगृह्य जयगृद्धिनः ।
जीवन्त इव लक्ष्यन्ते गतसत्त्वास्तरस्विनः ॥ ०३५ ॥

गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकान् ।
गजवाजिरथक्षुण्णान्पश्य योधान्सहस्रशः ॥ ०३६ ॥

मनुष्यगजवाजीनां शरशक्त्यृष्टितोमरैः ।
निस्त्रिंशैः पट्टिशैः प्रासैर्नखरैर्लगुडैरपि ॥ ०३७ ॥

शरीरैर्बहुधा भिन्नैः शोणितौघपरिप्लुतैः ।
गतासुभिरमित्रघ्न संवृता रणभूमयः ॥ ०३८ ॥

बाहुभिश्चन्दनादिग्धैः साङ्गदैः शुभभूषणैः ।
सतलत्रैः सकेयूरैर्भाति भारत मेदिनी ॥ ०३९ ॥

साङ्गुलित्रैर्भुजाग्रैश्च विप्रविद्धैरलङ्कृतैः ।
हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ॥ ०४० ॥

बद्धचूडामणिवरैः शिरोभिश्च सकुण्डलैः ।
निकृत्तैर्वृषभाक्षाणां विराजति वसुंधरा ॥ ०४१ ॥

कबन्धैः शोणितादिग्धैश्छिन्नगात्रशिरोधरैः ।
भूर्भाति भरतश्रेष्ठ शान्तार्चिर्भिरिवाग्निभिः ॥ ०४२ ॥

रथान्बहुविधान्भग्नान्हेमकिङ्किणिनः शुभान् ।
अश्वांश्च बहुधा पश्य शोणितेन परिप्लुतान् ॥ ०४३ ॥

योधानां च महाशङ्खान्पाण्डुरांश्च प्रकीर्णकान् ।
निरस्तजिह्वान्मातङ्गाञ्शयानान्पर्वतोपमान् ॥ ०४४ ॥

वैजयन्तीविचित्रांश्च हतांश्च गजयोधिनः ।

वारणानां परिस्तोमान्सुयुक्ताम्बरकम्बलान् ॥ ०४५ ॥

विपाटिता विचित्राश्च रूपचित्राः कुथास्तथा ।
भिन्नाश्च बहुधा घण्टाः पतद्भिश्चूर्णिता गजैः ॥ ०४६ ॥

वैडूर्यमणिदण्डांश्च पतितानङ्कुशान्भुवि ।
बद्धाः सादिध्वजाग्रेषु सुवर्णविकृताः कशाः ॥ ०४७ ॥

विचित्रान्मणिचित्रांश्च जातरूपपरिष्कृतान् ।
अश्वास्तरपरिस्तोमान्राङ्कवान्पतितान्भुवि ॥ ०४८ ॥

चूडामणीन्नरेन्द्राणां विचित्राः काञ्चनस्रजः ।
छत्राणि चापविद्धानि चामरव्यजनानि च ॥ ०४९ ॥

चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः ।
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलङ्कृतैः ॥ ०५० ॥

वदनैः पश्य संछन्नां महीं शोणितकर्दमाम् ॥ ०५० ॥

सजीवांश्च नरान्पश्य कूजमानान्समन्ततः ।
उपास्यमानान्बहुभिर्न्यस्तशस्त्रैर्विशां पते ॥ ०५१ ॥

ज्ञातिभिः सहितैस्तत्र रोदमानैर्मुहुर्मुहुः ।
व्युत्क्रान्तानपरान्योधांश्छादयित्वा तरस्विनः ॥ ०५२ ॥

पुनर्युद्धाय गच्छन्ति जयगृद्धाः प्रमन्यवः ॥ ०५२ ॥

अपरे तत्र तत्रैव परिधावन्ति मानिनः ।
ज्ञातिभिः पतितैः शूरैर्याच्यमानास्तथोदकम् ॥ ०५३ ॥

जलार्थं च गताः केचिन्निष्प्राणा बहवोऽर्जुन ।

संनिवृत्ताश्च ते शूरास्तान्दृष्ट्वैव विचेतसः ॥ ०५४ ॥

जलं दृष्ट्वा प्रधावन्ति क्रोशमानाः परस्परम् ।
जलं पीत्वा मृतान्पश्य पिबतोऽन्यांश्च भारत ॥ ०५५ ॥

परित्यज्य प्रियानन्ये बान्धवान्बान्धवप्रिय ।
व्युत्क्रान्ताः समदृश्यन्त तत्र तत्र महारणे ॥ ०५६ ॥

पश्यापरान्नरश्रेष्ठ संदष्टौष्ठपुटान्पुनः ।
भ्रुकुटीकुटिलैर्वक्त्रैः प्रेक्षमाणान्समन्ततः ॥ ०५७ ॥

एतत्तवैवानुरूपं कर्मार्जुन महाहवे ।
दिवि वा देवराजस्य त्वया यत्कृतमाहवे ॥ ०५८ ॥

एवं तां दर्शयन्कृष्णो युद्धभूमिं किरीटिने ।
गच्छन्नेवाशृणोच्छब्दं दुर्योधनबले महत् ॥ ०५९ ॥

शङ्खदुन्दुभिनिर्घोषान्भेरीपणवमिश्रितान् ।
रथाश्वगजनादांश्च शस्त्रशब्दांश्च दारुणान् ॥ ०६० ॥

प्रविश्य तद्बलं कृष्णस्तुरगैर्वातवेगिभिः ।
पाण्ड्येनाभ्यर्दितां सेनां त्वदीयां वीक्ष्य धिष्ठितः ॥ ०६१ ॥

स हि नानाविधैर्बाणैरिष्वासप्रवरो युधि ।
न्यहनद्द्विषतां व्रातान्गतासूनन्तको यथा ॥ ०६२ ॥

गजवाजिमनुष्याणां शरीराणि शितैः शरैः ।
भित्त्वा प्रहरतां श्रेष्ठो विदेहासूंश्चकार सः ॥ ०६३ ॥

शत्रुप्रवीरैरस्तानि नानाशस्त्राणि सायकैः ।
भित्त्वा तानहनत्पाण्ड्यः शत्रूञ्शक्र इवासुरान् ॥ ०६४ ॥

# अध्याय ०१५

धृतराष्ट्र उवाच ॥

प्रोक्तस्त्वया पूर्वमेव प्रवीरो लोकविश्रुतः ।
न त्वस्य कर्म सङ्ग्रामे त्वया सञ्जय कीर्तितम् ॥ ००१ ॥

तस्य विस्तरतो ब्रूहि प्रवीरस्याद्य विक्रमम् ।
शिक्षां प्रभावं वीर्यं च प्रमाणं दर्पमेव च ॥ ००२ ॥

सञ्जय उवाच ॥

द्रोणभीष्मकृपद्रौणिकर्णार्जुनजनार्दनान् ।
समाप्तविद्यान्धनुषि श्रेष्ठान्यान्मन्यसे युधि ॥ ००३ ॥

तुल्यता कर्णभीष्माभ्यामात्मनो येन दृश्यते ।
वासुदेवार्जुनाभ्यां च न्यूनतां नात्मनीच्छति ॥ ००४ ॥

स पाण्ड्यो नृपतिश्रेष्ठः सर्वशस्त्रभृतां वरः ।
कर्णस्यानीकमवधीत्परिभूत इवान्तकः ॥ ००५ ॥

तदुदीर्णरथाश्वं च पत्तिप्रवरकुञ्जरम् ।
कुलालचक्रवद्भ्रान्तं पाण्ड्येनाधिष्ठितं बलम् ॥ ००६ ॥

व्यश्वसूतध्वजरथान्विप्रविद्धायुधान्रिपून् ।
सम्यगस्तैः शरैः पाण्ड्यो वायुर्मेघानिवाक्षिपत् ॥ ००७ ॥

द्विरदान्प्रहतप्रोथान्विपताकध्वजायुधान् ।
सपादरक्षानवधीद्वज्रेणारीनिवारिहा ॥ ००८ ॥

सशक्तिप्रासतूणीरानश्वारोहान्हयानपि ।
पुलिन्दखशबाह्लीकान्निषादान्ध्रकतङ्गणान् ॥ ००९ ॥

दाक्षिणात्यांश्च भोजांश्च क्रूरान्सङ्ग्रामकर्कशान् ।
विशस्त्रकवचान्बाणैः कृत्वा पाण्ड्योऽकरोद्व्यसून् ॥ ०१० ॥

चतुरङ्गं बलं बाणैर्निघ्नन्तं पाण्ड्यमाहवे ।
दृष्ट्वा द्रौणिरसंभ्रान्तमसंभ्रान्ततरोऽभ्ययात् ॥ ०११ ॥

आभाष्य चैनं मधुरमभि नृत्यन्नभीतवत् ।
प्राह प्रहरतां श्रेष्ठः स्मितपूर्वं समाह्वयन् ॥ ०१२ ॥

राजन्कमलपत्राक्ष प्रधानायुधवाहन ।
वज्रसंहननप्रख्य प्रधानबलपौरुष ॥ ०१३ ॥

मुष्टिश्लिष्टायुधाभ्यां च व्यायताभ्यां महद्धनुः ।
दोर्भ्यां विस्फारयन्भासि महाजलदवद्भृशम् ॥ ०१४ ॥

शरवर्षैर्महावेगैरमित्रानभिवर्षतः ।
मदन्यं नानुपश्यामि प्रतिवीरं तवाहवे ॥ ०१५ ॥

रथद्विरदपत्त्यश्वानेकः प्रमथसे बहून् ।
मृगसंघानिवारण्ये विभीर्भीमबलो हरिः ॥ ०१६ ॥

महता रथघोषेण दिवं भूमिं च नादयन् ।
वर्षान्ते सस्यहा पीथो भाभिरापूरयन्निव ॥ ०१७ ॥

संस्पृशानः शरांस्तीक्ष्णांस्तूणादाशीविषोपमान् ।
मयैवैकेन युध्यस्व त्र्यम्बकेणान्धको यथा ॥ ०१८ ॥

एवमुक्तस्तथेत्युक्त्वा प्रहरेति च ताडितः ।
कर्णिना द्रोणतनयं विव्याध मलयध्वजः ॥ ०१९ ॥

मर्मभेदिभिरत्युग्रैर्बाणैरग्निशिखोपमैः ।
स्मयन्नभ्यहनद्द्रौणिः पाण्ड्यमाचार्यसत्तमः ॥ ०२० ॥

ततो नवापरांस्तीक्ष्णान्नाराचान्कङ्कवाससः ।
गत्या दशम्या संयुक्तानश्वत्थामा व्यवासृजत् ॥ ०२१ ॥

तेषां पञ्चाच्छिनत्पाण्ड्यः पञ्चभिर्निशितैः शरैः ।
चत्वारोऽभ्याहनन्वाहानाशु ते व्यसवोऽभवन् ॥ ०२२ ॥

अथ द्रोणसुतस्येषूंस्तांश्छित्त्वा निशितैः शरैः ।
धनुर्ज्यां विततां पाण्ड्यश्चिच्छेदादित्यवर्चसः ॥ ०२३ ॥

विज्यं धनुरथाधिज्यं कृत्वा द्रौणिरमित्रहा ।
ततः शरसहस्राणि प्रेषयामास पाण्ड्यतः ॥ ०२४ ॥

इषुसंबाधमाकाशमकरोद्दिश एव च ॥ ०२४ ॥

ततस्तानस्यतः सर्वान्द्रौणेर्बाणान्महात्मनः ।
जानानोऽप्यक्षयान्पाण्ड्योऽशातयत्पुरुषर्षभः ॥ ०२५ ॥

प्रहितांस्तान्प्रयत्नेन छित्त्वा द्रौणेरिषूनरिः ।
चक्ररक्षौ ततस्तस्य प्राणुदन्निशितैः शरैः ॥ ०२६ ॥

अथारेर्लाघवं दृष्ट्वा मण्डलीकृतकार्मुकः ।
प्रास्यद्द्रोणसुतो बाणान्वृष्टिं पूषानुजो यथा ॥ ०२७ ॥

अष्टावष्टगवान्यूहुः शकटानि यदायुधम् ।
अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप मारिष ॥ ०२८ ॥

तमन्तकमिव क्रुद्धमन्तकालान्तकोपमम् ।
ये ये ददृशिरे तत्र विसञ्ज्ञाः प्रायशोऽभवन् ॥ ०२९ ॥

पर्जन्य इव घर्मान्ते वृष्ट्या साद्रिद्रुमां महीम् ।
आचार्यपुत्रस्तां सेनां बाणवृष्ट्याभ्यवीवृषत् ॥ ०३० ॥

द्रौणिपर्जन्यमुक्तां तां बाणवृष्टिं सुदुःसहाम् ।
वायव्यास्त्रेण स क्षिप्रं रुद्ध्वा पाण्ड्यानिलोऽनदत् ॥ ०३१ ॥

तस्य नानदतः केतुं चन्दनागुरुभूषितम् ।
मलयप्रतिमं द्रौणिश्छित्त्वाश्वांश्चतुरोऽहनत् ॥ ०३२ ॥

सूतमेकेषुणा हत्वा महाजलदनिस्वनम् ।
धनुश्छित्त्वार्धचन्द्रेण व्यधमत्तिलशो रथम् ॥ ०३३ ॥

अस्त्रैरस्त्राणि संवार्य छित्त्वा सर्वायुधानि च ।
प्राप्तमप्यहितं द्रौणिर्न जघान रणेप्सया ॥ ०३४ ॥

हतेश्वरो दन्तिवरः सुकल्पित ;स्त्वराभिसृष्टः प्रतिशर्मगो बली ।
तमध्यतिष्ठन्मलयेश्वरो महा ;न्यथाद्रिशृङ्गं हरिरुन्नदंस्तथा ॥ ०३५ ॥

स तोमरं भास्कररश्मिसंनिभं ; बलास्त्रसर्गोत्तमयत्नमन्युभिः ।
ससर्ज शीघ्रं प्रतिपीडयन्गजं ; गुरोः सुतायाद्रिपतीश्वरो नदन् ॥ ०३६ ॥

मणिप्रतानोत्तमवज्रहाटकै ;रलङ्कृतं चांशुकमाल्यमौक्तिकैः ।
हतोऽस्यसावित्यसकृन्मुदा नद ;न्पराभिनद्द्रौणिवराङ्गभूषणम् ॥ ०३७ ॥

तदर्कचन्द्रग्रहपावकत्विषं ; भृशाभिघातात्पतितं विचूर्णितम् ।
महेन्द्रवज्राभिहतं महावनं ; यथाद्रिशृङ्गं धरणीतले तथा ॥ ०३८ ॥

ततः प्रजज्वाल परेण मन्युना ; पदाहतो नागपतिर्यथा तथा ।
समादधे चान्तकदण्डसंनिभा ;निषूनमित्रान्तकरांश्चतुर्दश ॥ ०३९ ॥

द्विपस्य पादाग्रकरान्स पञ्चभि ;र्नृपस्य बाहू च शिरोऽथ च त्रिभिः ।
जघान षड्भिः षडृतूत्तमत्विषः ; स पाण्ड्यराजानुचरान्महारथान् ॥ ०४० ॥

सुदीर्घवृत्तौ वरचन्दनोक्षितौ ; सुवर्णमुक्तामणिवज्रभूषितौ ।
भुजौ धरायां पतितौ नृपस्य तौ ; विवेष्टतुस्तार्क्ष्यहताविवोरगौ ॥ ०४१ ॥

शिरश्च तत्पूर्णशशिप्रभाननं ; सरोषताम्रायतनेत्रमुन्नसम् ।
क्षितौ विबभ्राज पतत्सकुण्डलं ; विशाखयोर्मध्यगतः शशी यथा ॥ ०४२ ॥

समाप्तविद्यं तु गुरोः सुतं नृपः ; समाप्तकर्माणमुपेत्य ते सुतः ।
सुहृद्वृतोऽत्यर्थमपूजयन्मुदा ; जिते बलौ विष्णुमिवामरेश्वरः ॥ ०४३ ॥

---

# अध्याय ०१६

धृतराष्ट्र उवाच ॥

पाण्ड्ये हते किमकरोदर्जुनो युधि सञ्जय ।
एकवीरेण कर्णेन द्रावितेषु परेषु च ॥ ००१ ॥

समाप्तविद्यो बलवान्युक्तो वीरश्च पाण्डवः ।
सर्वभूतेष्वनुज्ञातः शङ्करेण महात्मना ॥ ००२ ॥

तस्मान्महद्भयं तीव्रममित्रघ्नाद्धनञ्जयात् ।
स यत्तत्राकरोत्पार्थस्तन्ममाचक्ष्व सञ्जय ॥ ००३ ॥

सञ्जय उवाच ॥

हते पाण्ड्येऽर्जुनं कृष्णस्त्वरन्नाह वचो हितम् ।
पश्यातिमान्यं राजानमपयातांश्च पाण्डवान् ॥ ००४ ॥

अश्वत्थाम्नश्च सङ्कल्पाद्धताः कर्णेन सृञ्जयाः ।
तथाश्वनरनागानां कृतं च कदनं महत् ॥ ००५ ॥

इत्याचष्ट सुदुर्धर्षो वासुदेवः किरीटिने ॥ ००५ ॥

एतच्छ्रुत्वा च दृष्ट्वा च भ्रातुर्घोरं महद्भयम् ।
वाहयाश्वान्हृषीकेश क्षिप्रमित्याह पाण्डवः ॥ ००६ ॥

ततः प्रायाद्धृषीकेशो रथेनाप्रतियोधिना ।
दारुणश्च पुनस्तत्र प्रादुरासीत्समागमः ॥ ००७ ॥

ततः प्रववृते भूयः सङ्ग्रामो राजसत्तम ।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः ॥ ००८ ॥

धनूंषि बाणान्परिघानसितोमरपट्टिशान् ।
मुसलानि भुशुण्डीश्च शक्तिऋष्टिपरश्वधान् ॥ ००९ ॥

गदाः प्रासानसीन्कुन्तान्भिण्डिपालान्महाङ्कुशान् ।
प्रगृह्य क्षिप्रमापेतुः परस्परजिगीषया ॥ ०१० ॥

बाणज्यातलशब्देन द्यां दिशः प्रदिशो वियत् ।
पृथिवीं नेमिघोषेण नादयन्तोऽभ्ययुः परान् ॥ ०११ ॥

तेन शब्देन महता संहृष्टाश्चक्रुराहवम् ।
वीरा वीरैर्महाघोरं कलहान्तं तितीर्षवः ॥ ०१२ ॥

ज्यातलत्रधनुःशब्दाः कुञ्जराणां च बृंहितम् ।
ताडितानां च पततां निनादः सुमहानभूत् ॥ ०१३ ॥

बाणशब्दांश्च विविधाञ्शूराणामभिगर्जताम् ।
श्रुत्वा शब्दं भृशं त्रेसुर्जघ्नुर्मम्लुश्च भारत ॥ ०१४ ॥

तेषां नानद्यतां चैव शस्त्रवृष्टिं च मुञ्चताम् ।
बहूनाधिरथिः कर्णः प्रममाथ रणेषुभिः ॥ ०१५ ॥

पञ्च पाञ्चालवीराणां रथान्दश च पञ्च च ।
साश्वसूतध्वजान्कर्णः शरैर्निन्ये यमक्षयम् ॥ ०१६ ॥

योधमुख्या महावीर्याः पाण्डूनां कर्णमाहवे ।
शीघ्रास्त्रा दिवमावृत्य परिवव्रुः समन्ततः ॥ ०१७ ॥

ततः कर्णो द्विषत्सेनां शरवर्षैर्विलोडयन् ।
विजगाहेऽण्डजापूर्णां पद्मिनीमिव यूथपः ॥ ०१८ ॥

द्विषन्मध्यमवस्कन्द्य राधेयो धनुरुत्तमम् ।
विधुन्वानः शितैर्बाणैः शिरांस्युन्मथ्य पातयत् ॥ ०१९ ॥

चर्मवर्माणि संछिन्द्य निर्वापमिव देहिनाम् ।
विषेहुर्नास्य संपर्कं द्वितीयस्य पतत्रिणः ॥ ०२० ॥

वर्मदेहासुमथनैर्धनुषः प्रच्युतैः शरैः ।
मौर्व्या तलत्रैर्न्यवधीत्कशया वाजिनो यथा ॥ ०२१ ॥

पाण्डुसृञ्जयपाञ्चालाञ्शरगोचरमानयत् ।
ममर्द कर्णस्तरसा सिंहो मृगगणानिव ॥ ०२२ ॥

ततः पाञ्चालपुत्राश्च द्रौपदेयाश्च मारिष ।
यमौ च युयुधानश्च सहिताः कर्णमभ्ययुः ॥ ०२३ ॥

व्यायच्छमानाः सुभृशं कुरुपाण्डवसृञ्जयाः ।
प्रियानसूत्रणे त्यक्त्वा योधा जग्मुः परस्परम् ॥ ०२४ ॥

सुसंनद्धाः कवचिनः सशिरस्त्राणभूषणाः ।
गदाभिर्मुसलैश्चान्ये परिघैश्च महारथाः ॥ ०२५ ॥

समभ्यधावन्त भृशं देवा दण्डैरिवोद्यतैः ।
नदन्तश्चाह्वयन्तश्च प्रवल्गन्तश्च मारिष ॥ ०२६ ॥

ततो निजघ्नुरन्योन्यं पेतुश्चाहवताडिताः ।
वमन्तो रुधिरं गात्रैर्विमस्तिष्केक्षणा युधि ॥ ०२७ ॥

दन्तपूर्णैः सरुधिरैर्वक्त्रैर्दाडिमसंनिभैः ।
जीवन्त इव चाप्येते तस्थुः शस्त्रोपबृंहिताः ॥ ०२८ ॥

परस्परं चाप्यपरे पट्टिशैरसिभिस्तथा ।
शक्तिभिर्भिण्डिपालैश्च नखरप्रासतोमरैः ॥ ०२९ ॥

ततक्षुश्चिच्छिदुश्चान्ये बिभिदुश्चिक्षिपुस्तथा ।
सञ्चकर्तुश्च जघ्नुश्च क्रुद्धा निर्बिभिदुश्च ह ॥ ०३० ॥

पेतुरन्योन्यनिहता व्यसवो रुधिरोक्षिताः ।
क्षरन्तः स्वरसं रक्तं प्रकृताश्चन्दना इव ॥ ०३१ ॥

रथै रथा विनिहता हस्तिनश्चापि हस्तिभिः ।

नरा नरवरैः पेतुरश्वाश्वाश्वैः सहस्रशः ॥ ०३२ ॥

ध्वजाः शिरांसि च्छत्राणि द्विपहस्ता नृणां भुजाः ।
क्षुरैर्भल्लार्धचन्द्रैश्च छिन्नाः शस्त्राणि तत्यजुः ॥ ०३३ ॥

नरांश्च नागांश्च रथान्हयान्ममृदुराहवे ।
अश्वारोहैर्हताः शूराश्छिन्नहस्ताश्च दन्तिनः ॥ ०३४ ॥

सपताका ध्वजाः पेतुर्विशीर्णा इव पर्वताः ।
पत्तिभिश्च समाप्लुत्य द्विरदाः स्यन्दनास्तथा ॥ ०३५ ॥

प्रहता हन्यमानाश्च पतिताश्चैव सर्वशः ।
अश्वारोहाः समासाद्य त्वरिताः पत्तिभिर्हताः ॥ ०३६ ॥

सादिभिः पत्तिसंघाश्च निहता युधि शेरते ॥ ०३६ ॥

मृदितानीव पद्मानि प्रम्लाना इव च स्रजः ।
हतानां वदनान्यासन्गात्राणि च महामते ॥ ०३७ ॥

रूपाण्यत्यर्थकाम्यानि द्विरदाश्वनृणां नृप ।
समुन्नानीव वस्त्राणि प्रापुर्दुर्दर्शतां परम् ॥ ०३८ ॥

---

# अध्याय ०१७

सञ्जय उवाच ॥

हस्तिभिस्तु महामात्रास्तव पुत्रेण चोदिताः ।
धृष्टद्युम्नं जिघांसन्तः क्रुद्धाः पार्षतमभ्ययुः ॥ ००१ ॥

प्राच्याश्च दाक्षिणात्याश्च प्रवीरा गजयोधिनः ।
अङ्गा वङ्गाश्च पुण्ड्राश्च मागधास्ताम्रलिप्तकाः ॥ ००२ ॥

मेकलाः कोशला मद्रा दशार्णा निषधास्तथा ।
गजयुद्धेषु कुशलाः कलिङ्गैः सह भारत ॥ ००३ ॥

शरतोमरनाराचैर्वृष्टिमन्त इवाम्बुदाः ।
सिषिचुस्ते ततः सर्वे पाञ्चालाचलमाहवे ॥ ००४ ॥

तान्संमिमर्दिषुर्नागान्पार्ष्ण्यङ्गुष्ठाङ्कुशैर्भृशम् ।
पोथितान्पार्षतो बाणैर्नाराचैश्चाभ्यवीवृषत् ॥ ००५ ॥

एकैकं दशभिः षड्भिरष्टाभिरपि भारत ।
द्विरदानभिविव्याध क्षिप्तैर्गिरिनिभाञ्शरैः ॥ ००६ ॥

प्रच्छाद्यमानो द्विरदैर्मेघैरिव दिवाकरः ॥ ००६ ॥

पर्यासुः पाण्डुपाञ्चाला नदन्तो निशितायुधाः ।
तान्नागानभिवर्षन्तो ज्यातन्त्रीशरनादितैः ॥ ००७ ॥

नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ।
सात्यकिश्च शिखण्डी च चेकितानश्च वीर्यवान् ॥ ००८ ॥

ते म्लेच्छैः प्रेषिता नागा नरानश्वान्रथानपि ।
हस्तैराक्षिप्य ममृदुः पद्भिश्चाप्यतिमन्यवः ॥ ००९ ॥

बिभिदुश्च विषाणाग्रैः समाक्षिप्य च चिक्षिपुः ।
विषाणलग्नैश्चाप्यन्ये परिपेतुर्विभीषणाः ॥ ०१० ॥

प्रमुखे वर्तमानं तु द्विपं वङ्गस्य सात्यकिः ।

नाराचेनोग्रवेगेन भित्त्वा मर्मण्यपातयत् ॥ ०११ ॥

तस्यावर्जितनागस्य द्विरदादुत्पतिष्यतः ।
नाराचेनाभिनद्वक्षः सोऽपतद्भुवि सात्यकेः ॥ ०१२ ॥

पुण्ड्रस्यापततो नागं चलन्तमिव पर्वतम् ।
सहदेवः प्रयत्नात्तैर्नाराचैर्व्यहनत्त्रिभिः ॥ ०१३ ॥

विपताकं वियन्तारं विवर्मध्वजजीवितम् ।
तं कृत्वा द्विरदं भूयः सहदेवोऽङ्गमभ्यगात् ॥ ०१४ ॥

सहदेवं तु नकुलो वारयित्वाङ्गमार्दयत् ।
नाराचैर्यमदण्डाभैस्त्रिभिर्नागं शतेन च ॥ ०१५ ॥

दिवाकरकरप्रख्यानङ्गश्चिक्षेप तोमरान् ।
नकुलाय शतान्यष्टौ त्रिधैकैकं तु सोऽच्छिनत् ॥ ०१६ ॥

तथार्धचन्द्रेण शिरस्तस्य चिच्छेद पाण्डवः ।
स पपात हतो म्लेच्छस्तेनैव सह दन्तिना ॥ ०१७ ॥

आचार्यपुत्रे निहते हस्तिशिक्षाविशारदे ।
अङ्गाः क्रुद्धा महामात्रा नागैर्नकुलमभ्ययुः ॥ ०१८ ॥

चलत्पताकैः प्रमुखैर्हेमकक्ष्यातनुच्छदैः ।
मिमर्दिशन्तस्त्वरिताः प्रदीप्तैरिव पर्वतैः ॥ ०१९ ॥

मेकलोत्कलकालिङ्गा निषादास्ताम्रलिप्तकाः ।
शरतोमरवर्षाणि विमुञ्चन्तो जिघांसवः ॥ ०२० ॥

तैश्छाद्यमानं नकुलं दिवाकरमिवाम्बुदैः ।
परि पेतुः सुसंरब्धाः पाण्डुपाञ्चालसोमकाः ॥ ०२१ ॥

ततस्तदभवद्युद्धं रथिनां हस्तिभिः सह ।
सृजतां शरवर्षाणि तोमरांश्च सहस्रशः ॥ ०२२ ॥

नागानां प्रस्फुटुः कुम्भा मर्माणि विविधानि च ।
दन्ताश्चैवातिविद्धानां नाराचैर्भूषणानि च ॥ ०२३ ॥

तेषामष्टौ महानागांश्चतुःषष्ट्या सुतेजनैः ।
सहदेवो जघानाशु ते पेतुः सह सादिभिः ॥ ०२४ ॥

अञ्जोगतिभिरायम्य प्रयत्नाद्धनुरुत्तमम् ।
नाराचैरहनन्नागान्नकुलः कुरनन्दन ॥ ०२५ ॥

ततः शैनेयपाञ्चाल्यौ द्रौपदेयाः प्रभद्रकाः ।
शिखण्डी च महानागान्सिषिचुः शरवृष्टिभिः ॥ ०२६ ॥

ते पाण्डुयोधाम्बुधरैः शत्रुद्विरदपर्वताः ।
बाणवर्षैर्हताः पेतुर्वज्रवर्षैरिवाचलाः ॥ ०२७ ॥

एवं हत्वा तव गजांस्ते पाण्डुनरकुञ्जराः ।
द्रुतं सेनामवैक्षन्त भिन्नकूलामिवापगाम् ॥ ०२८ ॥

ते तां सेनामवालोक्य पाण्डुपुत्रस्य सैनिकाः ।
विक्षोभयित्वा च पुनः कर्णमेवाभिदुद्रुवुः ॥ ०२९ ॥

सहदेवं ततः क्रुद्धं दहन्तं तव वाहिनीम् ।
दुःशासनो महाराज भ्राता भ्रातरमभ्ययात् ॥ ०३० ॥

तौ समेतौ महायुद्धे दृष्ट्वा तत्र नराधिपाः ।
सिंहनादरवांश्चक्रुर्वासांस्यादुधुवुश्च ह ॥ ०३१ ॥

ततो भारत क्रुद्धेन तव पुत्रेण धन्विना ।
पाण्डुपुत्रस्त्रिभिर्बाणैर्वक्षस्यभिहतो बली ॥ ०३२ ॥

सहदेवस्ततो राजन्नाराचेन तवात्मजम् ।
विद्ध्वा विव्याध सप्तत्या सारथिं च त्रिभिस्त्रिभिः ॥ ०३३ ॥

दुःशासनस्तदा राजंश्छित्त्वा चापं महाहवे ।
सहदेवं त्रिसप्तत्या बाह्वोरुरसि चार्दयत् ॥ ०३४ ॥

सहदेवस्ततः क्रुद्धः खड्गं गृह्य महाहवे ।
व्याविध्यत युधां श्रेष्ठः श्रीमांस्तव सुतं प्रति ॥ ०३५ ॥

समार्गणगणं चापं छित्त्वा तस्य महानसिः ।
निपपात ततो भूमौ च्युतः सर्प इवाम्बरात् ॥ ०३६ ॥

अथान्यद्धनुरादाय सहदेवः प्रतापवान् ।
दुःशासनाय चिक्षेप बाणमन्तकरं ततः ॥ ०३७ ॥

तमापतन्तं विशिखं यमदण्डोपमत्विषम् ।
खड्गेन शितधारेण द्विधा चिच्छेद कौरवः ॥ ०३८ ॥

तमापतन्तं सहसा निस्त्रिंशं निशितैः शरैः ।
पातयामास समरे सहदेवो हसन्निव ॥ ०३९ ॥

ततो बाणांश्चतुःषष्टिं तव पुत्रो महारणे ।
सहदेवरथे तूर्णं पातयामास भारत ॥ ०४० ॥

ताञ्शरान्समरे राजन्वेगेनापततो बहून् ।
एकैकं पञ्चभिर्बाणैः सहदेवो न्यकृन्तत ॥ ०४१ ॥

स निवार्य महाबाणांस्तव पुत्रेण प्रेषितान् ।
अथास्मै सुबहून्बाणान्माद्रीपुत्रः समाचिनोत् ॥ ०४२ ॥

ततः क्रुद्धो महाराज सहदेवः प्रतापवान् ।
समाधत्त शरं घोरं मृत्युकालान्तकोपमम् ॥ ०४३ ॥

विकृष्य बलवच्चापं तव पुत्राय सोऽसृजत् ॥ ०४३ ॥

स तं निर्भिद्य वेगेन भित्त्वा च कवचं महत् ।
प्राविशद्धरणीं राजन्वल्मीकमिव पन्नगः ॥ ०४४ ॥

ततः स मुमुहे राजंस्तव पुत्रो महारथः ॥ ०४४ ॥

मूढं चैनं समालक्ष्य सारथिस्त्वरितो रथम् ।
अपोवाह भृशं त्रस्तो वध्यमानं शितैः शरैः ॥ ०४५ ॥

पराजित्य रणे तं तु पाण्डवः पाण्डुपूर्वज ।
दुर्योधनबलं हृष्टः प्रामथद्वै समन्ततः ॥ ०४६ ॥

पिपीलिकापुटं राजन्यथामृद्गान्नरो रुषा ।
तथा सा कौरवी सेना मृदिता तेन भारत ॥ ०४७ ॥

नकुलं रभसं युद्धे दारयन्तं वरूथिनीम् ।
कर्णो वैकर्तनो राजन्वारयामास वै तदा ॥ ०४८ ॥

नकुलश्च तदा कर्णं प्रहसन्निदमब्रवीत् ।
चिरस्य बत दृष्टोऽहं दैवतैः सौम्यचक्षुषा ॥ ०४९ ॥

यस्य मे त्वं रणे पाप चक्षुर्विषयमागतः ।
त्वं हि मूलमनर्थानां वैरस्य कलहस्य च ॥ ०५० ॥

त्वद्दोषात्कुरवः क्षीणाः समासाद्य परस्परम् ।
त्वामद्य समरे हत्वा कृतकृत्योऽस्मि विज्वरः ॥ ०५१ ॥

एवमुक्तः प्रत्युवाच नकुलं सूतनन्दनः ।
सदृशं राजपुत्रस्य धन्विनश्च विशेषतः ॥ ०५२ ॥

प्रहरस्व रणे बाल पश्यामस्तव पौरुषम् ।
कर्म कृत्वा रणे शूर ततः कत्थितुमर्हसि ॥ ०५३ ॥

अनुक्त्वा समरे तात शूरा युध्यन्ति शक्तितः ।
स युध्यस्व मया शक्त्या विनेष्ये दर्पमद्य ते ॥ ०५४ ॥

इत्युक्त्वा प्राहरत्तूर्णं पाण्डुपुत्राय सूतजः ।
विव्याध चैनं समरे त्रिसप्तत्या शिलीमुखैः ॥ ०५५ ॥

नकुलस्तु ततो विद्धः सूतपुत्रेण भारत ।
अशीत्याशीविषप्रख्यैः सूतपुत्रमविध्यत ॥ ०५६ ॥

तस्य कर्णो धनुश्छित्त्वा स्वर्णपुङ्खैः शिलाशितैः ।
त्रिंशता परमेष्वासः शरैः पाण्डवमार्दयत् ॥ ०५७ ॥

ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ।
आशीविषा यथा नागा भित्त्वा गां सलिलं पपुः ॥ ०५८ ॥

अथान्यद्धनुरादाय हेमपृष्ठं दुरासदम् ।
कर्णं विव्याध विंशत्या सारथिं च त्रिभिः शरैः ॥ ०५९ ॥

ततः क्रुद्धो महाराज नकुलः परवीरहा ।
क्षुरप्रेण सुतीक्ष्णेन कर्णस्य धनुरच्छिनत् ॥ ०६० ॥

अथैनं छिन्नधन्वानं सायकानां शतैस्त्रिभिः ।

आजघ्ने प्रहसन्वीरः सर्वलोकमहारथम्  ॥ ०६१  ॥

कर्णमभ्यर्दितं दृष्ट्वा पाण्डुपुत्रेण मारिष ।
विस्मयं परमं जग्मू रथिनः सह दैवतैः  ॥ ०६२  ॥

अथान्यद्धनुरादाय कर्णो वैकर्तनस्तदा ।
नकुलं पञ्चभिर्बाणैर्जत्रुदेशे समार्दयत्  ॥ ०६३  ॥

उरःस्थैरथ तैर्बाणैर्माद्रीपुत्रो व्यरोचत ।
स्वरश्मिभिरिवादित्यो भुवने विसृजन्प्रभाम्  ॥ ०६४  ॥

नकुलस्तु ततः कर्णं विद्ध्वा सप्तभिरायसैः ।
अथास्य धनुषः कोटिं पुनश्चिच्छेद मारिष  ॥ ०६५  ॥

सोऽन्यत्कार्मुकमादाय समरे वेगवत्तरम् ।
नकुलस्य ततो बाणैः सर्वतोऽवारयद्दिशः  ॥ ०६६  ॥

संछाद्यमानः सहसा कर्णचापच्युतैः शरैः ।
चिच्छेद स शरांस्तूर्णं शरैरेव महारथः  ॥ ०६७  ॥

ततो बाणमयं जालं विततं व्योम्न्यदृश्यत ।
खद्योतानां गणैरेव संपतद्भिर्यथा नभः  ॥ ०६८  ॥

तैर्विमुक्तैः शरशतैश्छादितं गगनं तदा ।
शलभानां यथा व्रातैस्तद्वदासीत्समाकुलम्  ॥ ०६९  ॥

ते शरा हेमविकृताः संपतन्तो मुहुर्मुहुः ।
श्रेणीकृता अभासन्त हंसाः श्रेणीगता इव  ॥ ०७०  ॥

बाणजालावृते व्योम्नि छादिते च दिवाकरे ।
समसर्पत्ततो भूतं किञ्चिदेव विशां पते  ॥ ०७१  ॥

निरुद्धे तत्र मार्गे तु शरसंघैः समन्ततः ।
व्यरोचतां महाभागौ बालसूर्याविवोदितौ ॥ ०७२ ॥

कर्णचापच्युतैर्बाणैर्वध्यमानास्तु सोमकाः ।
अवालीयन्त राजेन्द्र वेदनार्ताः शरार्दिताः ॥ ०७३ ॥

नकुलस्य तथा बाणैर्वध्यमाना चमूस्तव ।
व्यशीर्यत दिशो राजन्वातनुन्ना इवाम्बुदाः ॥ ०७४ ॥

ते सेने वध्यमाने तु ताभ्यां दिव्यैर्महाशरैः ।
शरपातमपक्रम्य ततः प्रेक्षकवत्स्थिते ॥ ०७५ ॥

प्रोत्सारिते जने तस्मिन्कर्णपाण्डवयोः शरैः ।
विव्याधाते महात्मानावन्योन्यं शरवृष्टिभिः ॥ ०७६ ॥

निदर्शयन्तौ त्वस्त्राणि दिव्यानि रणमूर्धनि ।
छादयन्तौ च सहसा परस्परवधैषिणौ ॥ ०७७ ॥

नकुलेन शरा मुक्ताः कङ्कबर्हिणवाससः ।
ते तु कर्णमवच्छाद्य व्यतिष्ठन्त यथा परे ॥ ०७८ ॥

शरवेश्मप्रविष्टौ तौ ददृशाते न कैश्चन ।
चन्द्रसूर्यौ यथा राजंश्छाद्यमानौ जलागमे ॥ ०७९ ॥

ततः क्रुद्धो रणे कर्णः कृत्वा घोरतरं वपुः ।
पाण्डवं छादयामास समन्ताच्छरवृष्टिभिः ॥ ०८० ॥

स च्छाद्यमानः समरे सूतपुत्रेण पाण्डवः ।
न चकार व्यथां राजन्भास्करो जलदैर्यथा ॥ ०८१ ॥

ततः प्रहस्याधिरथिः शरजालानि मारिष ।
प्रेषयामास समरे शतशोऽथ सहस्रशः ॥ ०८२ ॥

एकच्छायमभूत्सर्वं तस्य बाणैर्महात्मनः ।
अभ्रच्छायेव सञ्जज्ञे संपतद्भिः शरोत्तमैः ॥ ०८३ ॥

ततः कर्णो महाराज धनुश्छित्त्वा महात्मनः ।
सारथिं पातयामास रथनीडाद्धसन्निव ॥ ०८४ ॥

तथाश्वांश्चतुरश्चास्य चतुर्भिर्निशितैः शरैः ।
यमस्य सदनं तूर्णं प्रेषयामास भारत ॥ ०८५ ॥

अथास्य तं रथं तूर्णं तिलशो व्यधमच्छरैः ।
पताकां चक्ररक्षौ च ध्वजं खड्गं च मारिष ॥ ०८६ ॥

शतचन्द्रं ततश्चर्म सर्वोपकरणानि च ॥ ०८६ ॥

हताश्वो विरथश्चैव विवर्मा च विशां पते ।
अवतीर्य रथात्तूर्णं परिघं गृह्य विष्ठितः ॥ ०८७ ॥

तमुद्यतं महाघोरं परिघं तस्य सूतजः ।
व्यहनत्सायकै राजञ्शतशोऽथ सहस्रशः ॥ ०८८ ॥

व्यायुधं चैनमालक्ष्य शरैः संनतपर्वभिः ।
आर्दयद्बहुशः कर्णो न चैनं समपीडयत् ॥ ०८९ ॥

स वध्यमानः समरे कृतास्त्रेण बलीयसा ।
प्राद्रवत्सहसा राजन्नकुलो व्याकुलेन्द्रियः ॥ ०९० ॥

तमभिद्रुत्य राधेयः प्रहसन्वै पुनः पुनः ।
सज्यमस्य धनुः कण्ठे सोऽवासृजत भारत ॥ ०९१ ॥

ततः स शुशुभे राजन्कण्ठासक्तमहाधनुः ।
परिवेषमनुप्राप्तो यथा स्याद्व्योम्नि चन्द्रमाः ॥ ०९२ ॥

यथैव च सितो मेघः शक्रचापेन शोभितः ॥ ०९२ ॥

तमब्रवीत्तदा कर्णो व्यर्थं व्याहृतवानसि ।
वदेदानीं पुनर्हृष्टो वध्यं मां त्वं पुनः पुनः ॥ ०९३ ॥

मा योत्सीर्गुरुभिः सार्धं बलवद्भिश्च पाण्डव ।
सदृशैस्तात युध्यस्व व्रीडां मा कुरु पाण्डव ॥ ०९४ ॥

गृहं वा गच्छ माद्रेय यत्र वा कृष्णफल्गुनौ ॥ ०९४ ॥

एवमुक्त्वा महाराज व्यसर्जयत तं ततः ।
वधप्राप्तं तु तं राजन्नावधीत्सूतनन्दनः ॥ ०९५ ॥

स्मृत्वा कुन्त्या वचो राजंस्तत एनं व्यसर्जयत् ॥ ०९५ ॥

विसृष्टः पाण्डवो राजन्सूतपुत्रेण धन्विना ।
व्रीडन्निव जगामाथ युधिष्ठिररथं प्रति ॥ ०९६ ॥

आरुरोह रथं चापि सूतपुत्रप्रतापितः ।
निःश्वसन्दुःखसंतप्तः कुम्भे क्षिप्त इवोरगः ॥ ०९७ ॥

तं विसृज्य रणे कर्णः पाञ्चालांस्त्वरितो ययौ ।
रथेनातिपताकेन चन्द्रवर्णहयेन च ॥ ०९८ ॥

तत्राक्रन्दो महानासीत्पाण्डवानां विशां पते ।
दृष्ट्वा सेनापतिं यान्तं पाञ्चालानां रथव्रजान् ॥ ०९९ ॥

तत्राकरोन्महाराज कदनं सूतनन्दनः ।
मध्यं गते दिनकरे चक्रवत्प्रचरन्प्रभुः ॥ १०० ॥

भग्नचक्रै रथैः केचिच्छिन्नध्वजपताकिभिः ।
ससूतैर्हतसूतैश्च भग्नाक्षैश्चैव मारिष ॥ १०१ ॥

ह्रियमाणानपश्याम पाञ्चालानां रथव्रजान् ॥ १०१ ॥

तत्र तत्र च संभ्रान्ता विचेरुर्मत्तकुञ्जराः ।
दवाग्निना परीताङ्गा यथैव स्युर्महावने ॥ १०२ ॥

भिन्नकुम्भा विरुधिराश्छिन्नहस्ताश्च वारणाः ।
भिन्नगात्रवराश्चैव च्छिन्नवालाश्च मारिष ॥ १०३ ॥

छिन्नाभ्राणीव संपेतुर्वध्यमाना महात्मना ॥ १०३ ॥

अपरे त्रासिता नागा नाराचशततोमरैः ।
तमेवाभिमुखा यान्ति शलभा इव पावकम् ॥ १०४ ॥

अपरे निष्टनन्तः स्म व्यदृश्यन्त महाद्विपाः ।
क्षरन्तः शोणितं गात्रैर्नगा इव जलप्लवम् ॥ १०५ ॥

उरश्छदैर्विमुक्ताश्च वालबन्धैश्च वाजिनः ।
राजतैश्च तथा कांस्यैः सौवर्णैश्चैव भूषणैः ॥ १०६ ॥

हीना आस्तरणैश्चैव खलीनैश्च विवर्जिताः ।
चामरैश्च कुथाभिश्च तूणीरैः पतितैरपि ॥ १०७ ॥

निहतैः सादिभिश्चैव शूरैराहवशोभिभिः ।
अपश्याम रणे तत्र भ्राम्यमाणान्हयोत्तमान् ॥ १०८ ॥

प्रासैः खड्गैश्च संस्यूतानृष्टिभिश्च नराधिप ।
हययोधानपश्याम कञ्चुकोष्णीषधारिणः ॥ १०९ ॥

रथान्हेमपरिष्कारान्सुयुक्ताञ्जवनैर्हयैः ।
भ्रममाणानपश्याम हतेषु रथिषु द्रुतम् ॥ ११० ॥

भग्नाक्षकूबरान्कांश्चिच्छिन्नचक्रांश्च मारिष ।
विपताकाध्वजांश्चान्याञ्छिन्नेषायुगबन्धुरान् ॥ १११ ॥

विहीनान्रथिनस्तत्र धावमानान्समन्ततः ।
सूर्यपुत्रशरैस्त्रस्तानपश्याम विशां पते ॥ ११२ ॥

विशस्त्रांश्च तथैवान्यान्सशस्त्रांश्च बहून्हतान् ।
तावकाञ्जालसंछन्नानुरोघण्टाविभूषितान् ॥ ११३ ॥

नानावर्णविचित्राभिः पताकाभिरलङ्कृतान् ।
पदातीनन्वपश्याम धावमानान्समन्ततः ॥ ११४ ॥

शिरांसि बाहूनूरूंश्च छिन्नानन्यांस्तथा युधि ।
कर्णचापच्युतैर्बाणैरपश्याम विनाकृतान् ॥ ११५ ॥

महान्व्यतिकरो रौद्रो योधानामन्वदृश्यत ।
कर्णसायकनुन्नानां हतानां निशितैः शरैः ॥ ११६ ॥

ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः ।
तमेवाभिमुखा यान्ति पतङ्गा इव पावकम् ॥ ११७ ॥

तं दहन्तमनीकानि तत्र तत्र महारथम् ।
क्षत्रिया वर्जयामासुर्युगान्ताग्निमिवोल्बणम् ॥ ११८ ॥

हतशेषास्तु ये वीराः पाञ्चालानां महारथाः ।

तान्प्रभग्नान्द्रुतान्कर्णः पृष्ठतो विकिरञ्शरैः ॥ ११९ ॥

अभ्यधावत तेजस्वी विशीर्णकवचध्वजान् ॥ ११९ ॥

तापयामास तान्बाणैः सूतपुत्रो महारथः ।
मध्यंदिनमनुप्राप्तो भूतानीव तमोनुदः ॥ १२० ॥

---

# अध्याय ०१८

सञ्जय उवाच ॥

युयुत्सुं तव पुत्रं तु प्राद्रवन्तं महद्बलम् ।
उलूकोऽभ्यपतत्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ००१ ॥

युयुत्सुस्तु ततो राजञ्शितधारेण पत्रिणा ।
उलूकं ताडयामास वज्रेणेन्द्र इवाचलम् ॥ ००२ ॥

उलूकस्तु ततः क्रुद्धस्तव पुत्रस्य संयुगे ।
क्षुरप्रेण धनुश्छित्त्वा ताडयामास कर्णिना ॥ ००३ ॥

तदपास्य धनुश्छिन्नं युयुत्सुर्वेगवत्तरम् ।
अन्यदादत्त सुमहच्चापं संरक्तलोचनः ॥ ००४ ॥

शाकुनिं च ततः षष्ट्या विव्याध भरतर्षभ ।
सारथिं त्रिभिरानर्छत्तं च भूयो व्यविध्यत ॥ ००५ ॥

उलूकस्तं तु विंशत्या विद्ध्वा हेमविभूषितैः ।
अथास्य समरे क्रुद्धो ध्वजं चिच्छेद काञ्चनम् ॥ ००६ ॥

स च्छिन्नयष्टिः सुमहाञ्शीर्यमाणो महाध्वजः ।
पपात प्रमुखे राजन्युयुत्सोः काञ्चनोज्ज्वलः ॥ ००७ ॥

ध्वजमुन्मथितं दृष्ट्वा युयुत्सुः क्रोधमूर्छितः ।
उलूकं पञ्चभिर्बाणैराजघान स्तनान्तरे ॥ ००८ ॥

उलूकस्तस्य भल्लेन तैलधौतेन मारिष ।
शिरश्चिच्छेद सहसा यन्तुर्भरतसत्तम ॥ ००९ ॥

जघान चतुरोऽश्वांश्च तं च विव्याध पञ्चभिः ।
सोऽतिविद्धो बलवता प्रत्यपायाद्रथान्तरम् ॥ ०१० ॥

तं निर्जित्य रणे राजन्नुलूकस्त्वरितो ययौ ।
पाञ्चालान्सृञ्जयांश्चैव विनिघ्नन्निशितैः शरैः ॥ ०११ ॥

शतानीकं महाराज श्रुतकर्मा सुतस्तव ।
व्यश्वसूतरथं चक्रे निमेषार्धादसंभ्रमम् ॥ ०१२ ॥

हताश्वे तु रथे तिष्ठञ्शतानीको महाबलः ।
गदां चिक्षेप सङ्क्रुद्धस्तव पुत्रस्य मारिष ॥ ०१३ ॥

सा कृत्वा स्यन्दनं भस्म हयांश्चैव ससारथीन् ।
पपात धरणीं तूर्णं दारयन्तीव भारत ॥ ०१४ ॥

तावुभौ विरथौ वीरौ कुरूणां कीर्तिवर्धनौ ।
अपाक्रमेतां युद्धार्तौ प्रेक्षमाणौ परस्परम् ॥ ०१५ ॥

पुत्रस्तु तव संभ्रान्तो विवित्सो रथमाविशत् ।
शतानीकोऽपि त्वरितः प्रतिविन्ध्यरथं गतः ॥ ०१६ ॥

सुतसोमस्तु शकुनिं विव्याध निशितैः शरैः ।
नाकम्पयत संरब्धो वार्योघ इव पर्वतम् ॥ ०१७ ॥

सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणम् ।
शरैरनेकसाहस्रैश्छादयामास भारत ॥ ०१८ ॥

ताञ्शराञ्शकुनिस्तूर्णं चिच्छेदान्यैः पतत्रिभिः ।
लघ्वस्त्रश्चित्रयोधी च जितकाशी च संयुगे ॥ ०१९ ॥

निवार्य समरे चापि शरांस्तान्निशितैः शरैः ।
आजघान सुसङ्क्रुद्धः सुतसोमं त्रिभिः शरैः ॥ ०२० ॥

तस्याश्वान्केतनं सूतं तिलशो व्यधमच्छरैः ।
स्यालस्तव महावीर्यस्ततस्ते चुक्रुशुर्जनाः ॥ ०२१ ॥

हताश्वो विरथश्चैव छिन्नधन्वा च मारिष ।
धन्वी धनुर्वरं गृह्य रथाद्भूमावतिष्ठत ॥ ०२२ ॥

व्यसृजत्सायकांश्चैव स्वर्णपुङ्खाञ्शिलाशितान् ॥ ०२२ ॥

छादयामासुरथ ते तव स्यालस्य तं रथम् ।
पतङ्गानामिव व्राताः शरव्राता महारथम् ॥ ०२३ ॥

रथोपस्थान्समीक्ष्यापि विव्यथे नैव सौबलः ।
प्रमृद्नंश्च शरांस्तांस्ताञ्शरव्रातैर्महायशाः ॥ ०२४ ॥

तत्रातुष्यन्त योधाश्च सिद्धाश्चापि दिवि स्थिताः ।
सुतसोमस्य तत्कर्म दृष्ट्वाश्रद्धेयमद्भुतम् ॥ ०२५ ॥

रथस्थं नृपतिं तं तु पदातिः सन्नयोधयत् ॥ ०२५ ॥

तस्य तीक्ष्णैर्महावेगैर्भल्लैः संनतपर्वभिः ।
व्यहनत्कार्मुकं राजा तूणीरं चैव सर्वशः ॥ ०२६ ॥

स च्छिन्नधन्वा समरे खङ्गमुद्यम्य नानदन् ।
वैडूर्योत्पलवर्णाभं हस्तिदन्तमयत्सरुम् ॥ ०२७ ॥

भ्राम्यमाणं ततस्तं तु विमलाम्ब्बरवर्चसम् ।
कालोपमं ततो मेने सुतसोमस्य धीमतः ॥ ०२८ ॥

सोऽचरत्सहसा खङ्गी मण्डलानि सहस्रशः ।
चतुर्विंशन्महाराज शिक्षाबलसमन्वितः ॥ ०२९ ॥

सौबलस्तु ततस्तस्य शरांश्चिक्षेप वीर्यवान् ।
तानापतत एवाशु चिच्छेद परमासिना ॥ ०३० ॥

ततः क्रुद्धो महाराज सौबलः परवीरहा ।
प्राहिणोत्सुतसोमस्य शरानाशीविषोपमान् ॥ ०३१ ॥

चिच्छेद तांश्च खङ्गेन शिक्षया च बलेन च ।
दर्शय.णल्लाघवं युद्धे तार्क्ष्यवीर्यसमद्युतिः ॥ ०३२ ॥

तस्य सञ्चरतो राजन्मण्डलावर्तने तदा ।
क्षुरप्रेण सुतीक्ष्णेन खङ्गं चिच्छेद सुप्रभम् ॥ ०३३ ॥

स च्छिन्नः सहसा भूमौ निपपात महानसिः ।
अवशस्य स्थितं हस्ते तं खङ्गं सत्सरुं तदा ॥ ०३४ ॥

छिन्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट् ।
प्राविध्यत ततः शेषं सुतसोमो महारथः ॥ ०३५ ॥

स च्छित्त्वा सगुणं चापं रणे तस्य महात्मनः ।

पपात धरणीं तूर्णं स्वर्णवज्रविभूषितः ॥ ०३६ ॥

सुतसोमस्ततोऽगच्छच्छ्रुतकीर्तेर्महारथम् ॥ ०३६ ॥

सौबलोऽपि धनुर्गृह्य घोरमन्यत्सुदुःसहम् ।
अभ्ययात्पाण्डवानीकं निघ्नञ्शत्रुगणान्बहून् ॥ ०३७ ॥

तत्र नादो महानासीत्पाण्डवानां विशां पते ।
सौबलं समरे दृष्ट्वा विचरन्तमभीतवत् ॥ ०३८ ॥

तान्यनीकानि दृप्तानि शस्त्रवन्ति महान्ति च ।
द्राव्यमाणान्यदृश्यन्त सौबलेन महात्मना ॥ ०३९ ॥

यथा दैत्यचमूं राजन्देवराजो ममर्द ह ।
तथैव पाण्डवीं सेनां सौबलेयो व्यनाशयत् ॥ ०४० ॥

धृष्टद्युम्नं कृपो राजन्वारयामास संयुगे ।
यथा दृप्तं वने नागं शरभो वारयेद्युधि ॥ ०४१ ॥

निरुद्धः पार्षतस्तेन गौतमेन बलीयसा ।
पदात्पदं विचलितुं नाशक्नोत्तत्र भारत ॥ ०४२ ॥

गौतमस्य वपुर्दृष्ट्वा धृष्टद्युम्नरथं प्रति ।
वित्रेसुः सर्वभूतानि क्षयं प्राप्तं च मेनिरे ॥ ०४३ ॥

तत्रावोचन्विमनसो रथिनः सादिनस्तथा ।
द्रोणस्य निधने नूनं सङ्क्रुद्धो द्विपदां वरः ॥ ०४४ ॥

शारद्वतो महातेजा दिव्यास्त्रविदुदारधीः ।
अपि स्वस्ति भवेदद्य धृष्टद्युम्नस्य गौतमात् ॥ ०४५ ॥

अपीयं वाहिनी कृत्स्ना मुच्येत महतो भयात् ।
अप्ययं ब्राह्मणः सर्वान्न नो हन्यात्समागतान्  ॥ ०४६  ॥

यादृशं दृश्यते रूपमन्तकप्रतिमं भृशम् ।
गमिष्यत्यद्य पदवीं भारद्वाजस्य संयुगे  ॥ ०४७  ॥

आचार्यः क्षिप्रहस्तश्च विजयी च सदा युधि ।
अस्त्रवान्वीर्यसंपन्नः क्रोधेन च समन्वितः  ॥ ०४८  ॥

पार्षतश्च भृशं युद्धे विमुखोऽद्यापि लक्ष्यते ।
इत्येवं विविधा वाचस्तावकानां परैः सह  ॥ ०४९  ॥

विनिःश्वस्य ततः क्रुद्धः कृपः शारद्वतो नृप ।
पार्षतं छादयामास निश्चेष्टं सर्वमर्मसु  ॥ ०५०  ॥

स वध्यमानः समरे गौतमेन महात्मना ।
कर्तव्यं न प्रजानाति मोहितः परमाहवे  ॥ ०५१  ॥

तमब्रवीत्ततो यन्ता कच्चित्क्षेमं नु पार्षत ।
ईदृशं व्यसनं युद्धे न ते दृष्टं कदाचन  ॥ ०५२  ॥

दैवयोगात्तु ते बाणा नातरन्मर्मभेदिनः ।
प्रेषिता द्विजमुख्येन मर्माण्युद्दिश्य सर्वशः  ॥ ०५३  ॥

व्यावर्तये तत्र रथं नदीवेगमिवार्णवात् ।
अवध्यं ब्राह्मणं मन्ये येन ते विक्रमो हतः  ॥ ०५४  ॥

धृष्टद्युम्नस्ततो राजञ्शनकैरब्रवीद्वचः ।
मुह्यते मे मनस्तात गात्रे स्वेदश्च जायते  ॥ ०५५  ॥

वेपथुं च शरीरे मे रोमहर्षं च पश्य वै ।

वर्जयन्ब्राह्मणं युद्धे शनैर्याहि यतोऽच्युतः ॥ ०५६ ॥

अर्जुनं भीमसेनं वा समरे प्राप्य सारथे ।
क्षेममद्य भवेद्यन्तरिति मे नैष्ठिकी मतिः ॥ ०५७ ॥

ततः प्रायान्महाराज सारथिस्त्वरयन्हयान् ।
यतो भीमो महेष्वासो युयुधे तव सैनिकैः ॥ ०५८ ॥

प्रद्रुतं तु रथं दृष्ट्वा धृष्टद्युम्नस्य मारिष ।
किरञ्शरशतान्येव गौतमोऽनुययौ तदा ॥ ०५९ ॥

शङ्खं च पूरयामास मुहुर्मुहुररिंदमः ।
पार्षतं प्राद्रवद्यन्तं महेन्द्र इव शम्बरम् ॥ ०६० ॥

शिखण्डिनं तु समरे भीष्ममृत्युं दुरासदम् ।
हार्दिक्यो वारयामास स्मयन्निव मुहुर्मुहुः ॥ ०६१ ॥

शिखण्डी च समासाद्य हृदिकानां महारथम् ।
पञ्चभिर्निशितैर्भल्लैर्जत्रुदेशे समार्दयत् ॥ ०६२ ॥

कृतवर्मा तु सङ्क्रुद्धो भित्त्वा षष्टिभिराशुगैः ।
धनुरेकेन चिच्छेद हसन्राजन्महारथः ॥ ०६३ ॥

अथान्यद्धनुरादाय द्रुपदस्यात्मजो बली ।
तिष्ठ तिष्ठेति सङ्क्रुद्धो हार्दिक्यं प्रत्यभाषत ॥ ०६४ ॥

ततोऽस्य नवतिं बाणान्रुक्मपुङ्खान्सुतेजनान् ।
प्रेषयामास राजेन्द्र तेऽस्याभ्रश्यन्त वर्मणः ॥ ०६५ ॥

वितथांस्तान्समालक्ष्य पतितांश्च महीतले ।
क्षुरप्रेण सुतीक्ष्णेन कार्मुकं चिच्छिदे बली ॥ ०६६ ॥

अथैनं छिन्नधन्वानं भग्नश्रृङ्गमिवर्षभम् ।
अशीत्या मार्गणैः क्रुद्धो बाह्वोरुरसि चार्दयत् ॥ ०६७ ॥

कृतवर्मा तु सङ्क्रुद्धो मार्गणैः कृतविक्षतः ।
धनुरन्यत्समादाय समार्गणगणं प्रभो ॥ ०६८ ॥

शिखण्डिनं बाणवरैः स्कन्धदेशेऽभ्यताडयत् ॥ ०६८ ॥

स्कन्धदेशे स्थितैर्बाणैः शिखण्डी च रराज ह ।
शाखाप्रतानैर्विमलैः सुमहान्स यथा द्रुमः ॥ ०६९ ॥

तावन्योन्यं भृशं विद्ध्वा रुधिरेण समुक्षितौ ।
अन्योन्यश्रृङ्गाभिहतौ रेजतुर्वृषभाविव ॥ ०७० ॥

अन्योन्यस्य वधे यत्नं कुर्वाणौ तौ महारथौ ।
रथाभ्यां चेरतुस्तत्र मण्डलानि सहस्रशः ॥ ०७१ ॥

कृतवर्मा महाराज पार्षतं निशितैः शरैः ।
रणे विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ॥ ०७२ ॥

ततोऽस्य समरे बाणं भोजः प्रहरतां वरः ।
जीवितान्तकरं घोरं व्यसृजत्त्वरयान्वितः ॥ ०७३ ॥

स तेनाभिहतो राजन्मूर्छामाशु समाविशत् ।
ध्वजयष्टिं च सहसा शिश्रिये कश्मलावृतः ॥ ०७४ ॥

अपोवाह रणात्तं तु सारथी रथिनां वरम् ।
हार्दिक्यशरसंतप्तं निःश्वसन्तं पुनः पुनः ॥ ०७५ ॥

पराजिते ततः शूरे द्रुपदस्य सुते प्रभो ।

प्राद्रवत्पाण्डवी सेना वध्यमाना समन्ततः ॥ ०७६ ॥

---

# अध्याय ०१९

सञ्जय उवाच ॥

श्वेताश्वोऽपि महाराज व्यधमत्तावकं बलम् ।
यथा वायुः समासाद्य तूलराशिं समन्ततः ॥ ००१ ॥

प्रत्युद्ययुस्त्रिगर्तास्तं शिबयः कौरवैः सह ।
शाल्वाः संशप्तकाश्चैव नारायणबलं च यत् ॥ ००२ ॥

सत्यसेनः सत्यकीर्तिर्मित्रदेवः श्रुतञ्जयः ।
सौश्रुतिश्चित्रसेनश्च मित्रवर्मा च भारत ॥ ००३ ॥

त्रिगर्तराजः समरे भ्रातृभिः परिवारितः ।
पुत्रैश्चैव महेष्वासैर्नानाशस्त्रधरैर्युधि ॥ ००४ ॥

ते सृजन्तः शरव्रातान्किरन्तोऽर्जुनमाहवे ।
अभ्यद्रवन्त समरे वार्योघा इव सागरम् ॥ ००५ ॥

ते त्वर्जुनं समासाद्य योधाः शतसहस्रशः ।
अगच्छन्विलयं सर्वे तार्क्ष्यं दृष्ट्वेव पन्नगाः ॥ ००६ ॥

ते वध्यमानाः समरे नाजहुः पाण्डवं तदा ।
दह्यमाना यथा राजञ्शलभा इव पावकम् ॥ ००७ ॥

सत्यसेनस्त्रिभिर्बाणैर्विव्याध युधि पाण्डवम् ।
मित्रदेवस्त्रिषष्ट्या च चन्द्रदेवश्च सप्तभिः ॥ ००८ ॥

मित्रवर्मा त्रिसप्तत्या सौश्रुतिश्चापि पञ्चभिः ।
शत्रुञ्जयश्च विंशत्या सुशर्मा नवभिः शरैः ॥ ००९ ॥

शत्रुञ्जयं च राजानं हत्वा तत्र शिलाशितैः ।
सौश्रुतेः सशिरस्त्राणं शिरः कायादपाहरत् ॥ ०१० ॥

त्वरितश्चन्द्रदेवं च शरैर्निन्ये यमक्षयम् ॥ ०१० ॥

अथेतरान्महाराज यतमानान्महारथान् ।
पञ्चभिः पञ्चभिर्बाणैरेकैकं प्रत्यवारयत् ॥ ०११ ॥

सत्यसेनस्तु सङ्क्रुद्धस्तोमरं व्यसृजन्महत् ।
समुद्दिश्य रणे कृष्णं सिंहनादं ननाद च ॥ ०१२ ॥

स निर्भिद्य भुजं सव्यं माधवस्य महात्मनः ।
अयस्मयो महाचण्डो जगाम धरणीं तदा ॥ ०१३ ॥

माधवस्य तु विद्धस्य तोमरेण महारणे ।
प्रतोदः प्रापतद्धस्ताद्रश्मयश्च विशां पते ॥ ०१४ ॥

स प्रतोदं पुनर्गृह्य रश्मींश्चैव महायशाः ।
वाहयामास तानश्वान्सत्यसेनरथं प्रति ॥ ०१५ ॥

विष्वक्सेनं तु निर्भिन्नं प्रेक्ष्य पार्थो धनञ्जयः ।
सत्यसेनं शरैस्तीक्ष्णैर्दारयित्वा महाबलः ॥ ०१६ ॥

ततः सुनिशितैर्बाणै राज्ञस्तस्य महच्छिरः ।
कुण्डलोपचितं कायाच्चकर्त पृतनान्तरे ॥ ०१७ ॥

तं निहत्य शितैर्बाणैर्मित्रवर्माणमाक्षिपत् ।
वत्सदन्तेन तीक्ष्णेन सारथिं चास्य मारिष ॥ ०१८ ॥

ततः शरशतैर्भूयः संशप्तकगणान्वशी ।
पातयामास सङ्क्रुद्धः शतशोऽथ सहस्रशः ॥ ०१९ ॥

ततो रजतपुङ्खेन राज्ञः शीर्षं महात्मनः ।
मित्रदेवस्य चिच्छेद क्षुरप्रेण महायशाः ॥ ०२० ॥

सुशर्माणं च सङ्क्रुद्धो जत्रुदेशे समार्दयत् ॥ ०२० ॥

ततः संशप्तकाः सर्वे परिवार्य धनञ्जयम् ।
शस्त्रौघैर्ममृदुः क्रुद्धा नादयन्तो दिशो दश ॥ ०२१ ॥

अभ्यर्दितस्तु तैर्जिष्णुः शक्रतुल्यपराक्रमः ।
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे महारथः ॥ ०२२ ॥

ततः शरसहस्राणि प्रादुरासन्विशां पते ॥ ०२२ ॥

ध्वजानां छिद्यमानानां कार्मुकाणां च संयुगे ।
रथानां सपताकानां तूणीराणां शरैः सह ॥ ०२३ ॥

अक्षाणामथ योक्त्राणां चक्राणां रश्मिभिः सह ।
कूबराणां वरूथानां पृषत्कानां च संयुगे ॥ ०२४ ॥

अश्मनां पततां चैव प्रासानामृष्टिभिः सह ।
गदानां परिघाणां च शक्तीनां तोमरैः सह ॥ ०२५ ॥

शतघ्नीनां सचक्राणां भुजानामूरुभिः सह ।
कण्ठसूत्राङ्गदानां च केयूराणां च मारिष ॥ ०२६ ॥

हाराणामथ निष्काणां तनुत्राणां च भारत ।
छत्राणां व्यजनानां च शिरसां मुकुटैः सह ॥ ०२७ ॥

अश्रूयत महाञ्शब्दस्तत्र तत्र विशां पते ॥ ०२७ ॥

सकुण्डलानि स्वक्षीणि पूर्णचन्द्रनिभानि च ।
शिरांस्युर्व्यामदृश्यन्त तारागण इवाम्बरे ॥ ०२८ ॥

सुस्रग्वीणि सुवासांसि चन्दनेनोक्षितानि च ।
शरीराणि व्यदृश्यन्त हतानां च महीतले ॥ ०२९ ॥

गन्धर्वनगराकारं घोरमायोधनं तदा ॥ ०२९ ॥

निहतै राजपुत्रैश्च क्षत्रियैश्च महाबलैः ।
हस्तिभिः पतितैश्चैव तुरगैश्चाभवन्मही ॥ ०३० ॥

अगम्यमार्गा समरे विशीर्णैरिव पर्वतैः ॥ ०३० ॥

नासीच्चक्रपथश्चैव पाण्डवस्य महात्मनः ।
निघ्नतः शात्रवान्भल्लैर्हस्त्यश्वं चामितं महत् ॥ ०३१ ॥

आ तुम्बादवसीदन्ति रथचक्राणि मारिष ।
रणे विचरतस्तस्य तस्मि.ण्ल्लोहितकर्दमे ॥ ०३२ ॥

सीदमानानि चक्राणि समूहुस्तुरगा भृशम् ।
श्रमेण महता युक्ता मनोमारुतरंहसः ॥ ०३३ ॥

वध्यमानं तु तत्सैन्यं पाण्डुपुत्रेण धन्विना ।
प्रायशो विमुखं सर्वं नावतिष्ठत संयुगे ॥ ०३४ ॥

ताञ्जित्वा समरे जिष्णुः संशप्तकगणान्बहून् ।
रराज स महाराज विधूमोऽग्निरिव ज्वलन् ॥ ०३५ ॥

युधिष्ठिरं महाराज विसृजन्तं शरान्बहून् ।
स्वयं दुर्योधनो राजा प्रत्यगृह्णादभीतवत् ॥ ०३६ ॥

तमापतन्तं सहसा तव पुत्रं महाबलम् ।
धर्मराजो द्रुतं विद्ध्वा तिष्ठ तिष्ठेति चाब्रवीत् ॥ ०३७ ॥

सा च तं प्रतिविव्याध नवभिर्निशितैः शरैः ।
सारथिं चास्य भल्लेन भृशं क्रुद्धोऽभ्यताडयत् ॥ ०३८ ॥

ततो युधिष्ठिरो राजा हेमपुङ्खाञ्शिलीमुखान् ।
दुर्योधनाय चिक्षेप त्रयोदश शिलाशितान् ॥ ०३९ ॥

चतुर्भिश्चतुरो वाहांस्तस्य हत्वा महारथः ।
पञ्चमेन शिरः कायात्सारथेस्तु समाक्षिपत् ॥ ०४० ॥

षष्ठेन च ध्वजं राज्ञः सप्तमेन च कार्मुकम् ।
अष्टमेन तथा खड्गं पातयामास भूतले ॥ ०४१ ॥

पञ्चभिर्नृपतिं चापि धर्मराजोऽर्दयद्भृशम् ॥ ०४१ ॥

हताश्वात्तु रथात्तस्मादवप्लुत्य सुतस्तव ।
उत्तमं व्यसनं प्राप्तो भूमावेव व्यतिष्ठत ॥ ०४२ ॥

तं तु कृच्छ्रगतं दृष्ट्वा कर्णद्रौणिकृपादयः ।
अभ्यवर्तन्त सहिताः परीप्सन्तो नराधिपम् ॥ ०४३ ॥

अथ पाण्डुसुताः सर्वे परिवार्य युधिष्ठिरम् ।
अभ्ययुः समरे राजंस्ततो युद्धमवर्तत ॥ ०४४ ॥

अथ तूर्यसहस्राणि प्रावाद्यन्त महामृधे ।
क्ष्वेडाः किलकिलाशब्दाः प्रादुरासन्महीपते ॥ ०४५ ॥

यदभ्यगच्छन्समरे पाञ्चालाः कौरवैः सह ॥ ०४५ ॥

नरा नरैः समाजग्मुर्वारणा वरवारणैः ।
रथाश्च रथिभिः सार्धं हयाश्च हयसादिभिः ॥ ०४६ ॥

द्वंद्वान्यासन्महाराज प्रेक्षणीयानि संयुगे ।
विस्मापनान्यचिन्त्यानि शस्त्रवन्त्युत्तमानि च ॥ ०४७ ॥

अयुध्यन्त महावेगाः परस्परवधैषिणः ।
अन्योन्यं समरे जघ्नुर्योधव्रतमनुष्ठिताः ॥ ०४८ ॥

न हि ते समरं चक्रुः पृष्ठतो वै कथञ्चन ॥ ०४८ ॥

मुहूर्तमेव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ॥ ०४९ ॥

रथी नागं समासाद्य विचरन्रणमूर्धनि ।
प्रेषयामास कालाय शरैः संनतपर्वभिः ॥ ०५० ॥

नागा हयान्समासाद्य विक्षिपन्तो बहूनथ ।
द्रावयामासुरत्युग्रास्तत्र तत्र तदा तदा ॥ ०५१ ॥

विद्राव्य च बहूनश्वान्नागा राजन्बलोत्कटाः ।
विषाणैश्चापरे जघ्नुर्ममृदुश्चापरे भृशम् ॥ ०५२ ॥

साश्वारोहांश्च तुरगान्विषाणैर्बिभिदू रणे ।
अपरांश्चिक्षिपुर्वेगात्प्रगृह्यातिबलास्तथा ॥ ०५३ ॥

पादातैराहता नागा विवरेषु समन्ततः ।
चक्रुरार्तस्वरं घोरं व्यद्रवन्त दिशो दश ॥ ०५४ ॥

पदातीनां तु सहसा प्रद्रुतानां महामृधे ।
उत्सृज्याभरणं तूर्णमवप्लुत्य रणाजिरे ॥ ०५५ ॥

निमित्तं मन्यमानास्तु परिणम्य महागजाः ।
जगृहुर्बिभिदुश्चैव चित्राण्याभरणानि च ॥ ०५६ ॥

प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे ।
निगृहीता भृशं नागाः प्रासतोमरशक्तिभिः ॥ ०५७ ॥

निगृह्य च गदाः केचित्पार्श्वस्थैर्भृशदारुणैः ।
रथाश्वसादिभिस्तत्र संभिन्ना न्यपतन्भुवि ॥ ०५८ ॥

सरथं सादिनं तत्र अपरे तु महागजाः ।
भूमावमृद्नन्वेगेन सवर्माणं पताकिनम् ॥ ०५९ ॥

रथं नागाः समासाद्य धुरि गृह्य च मारिष ।
व्याक्षिपन्सहसा तत्र घोररूपे महामृधे ॥ ०६० ॥

नाराचैर्निहतश्चापि निपपात महागजः ।
पर्वतस्येव शिखरं वज्रभग्नं महीतले ॥ ०६१ ॥

योधा योधान्समासाद्य मुष्टिभिर्व्यहनन्युधि ।
केशेष्वन्योन्यमाक्षिप्य चिच्छिदुर्बिभिदुः सह ॥ ०६२ ॥

उद्यम्य च भुजावन्यो निक्षिप्य च महीतले ।
पदा चोरः समाक्रम्य स्फुरतो व्यहनच्छिरः ॥ ०६३ ॥

मृतमन्यो महाराज पद्भ्यां ताडितवांस्तदा ।
जीवतश्च तथैवान्यः शस्त्रं काये न्यमज्जयत् ॥ ०६४ ॥

मुष्टियुद्धं महच्चासीद्योधानां तत्र भारत ।
तथा केशग्रहश्चोग्रो बाहुयुद्धं च केवलम् ॥ ०६५ ॥

समासक्तस्य चान्येन अविज्ञातस्तथापरः ।
जहार समरे प्राणान्नानाशस्त्रैरनेकधा ॥ ०६६ ॥

संसक्तेषु च योधेषु वर्तमाने च सङ्कुले ।
कबन्धान्युत्थितानि स्म शतशोऽथ सहस्रशः ॥ ०६७ ॥

लोहितैः सिच्यमानानि शस्त्राणि कवचानि च ।
महारङ्गानुरक्तानि वस्त्राणीव चकाशिरे ॥ ०६८ ॥

एवमेतन्महायुद्धं दारुणं भृशसङ्कुलम् ।
उन्मत्तरङ्गप्रतिमं शब्देनापूरयज्जगत् ॥ ०६९ ॥

नैव स्वे न परे राजन्विज्ञायन्ते शरातुराः ।
योद्धव्यमिति युध्यन्ते राजानो जयगृद्धिनः ॥ ०७० ॥

स्वान्स्वे जघ्नुर्महाराज परांश्चैव समागतान् ।
उभयोः सेनयोर्वीरैर्व्याकुलं समपद्यत ॥ ०७१ ॥

रथैर्भग्नैर्महाराज वारणैश्च निपातितैः ।
हयैश्च पतितैस्तत्र नरैश्च विनिपातितैः ॥ ०७२ ॥

अगम्यरूपा पृथिवी मांसशोणितकर्दमा ।
क्षणेनासीन्महाराज क्षतजौघप्रवर्तिनी ॥ ०७३ ॥

पाञ्चालानवधीत्कर्णस्त्रिगर्तांश्च धनञ्जयः ।

भीमसेनः कुरूऩ्राजन्हस्त्यनीकं च सर्वशः ॥ ०७४ ॥

एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः ।
अपराह्णे महाराज काङ्क्षन्त्योर्विपुलं जयम् ॥ ०७५ ॥

---

# अध्याय ०२०

धृतराष्ट्र उवाच ॥

अतितीव्राणि दुःखानि दुःसहानि बहूनि च ।
तवाहं सञ्जयाश्रौषं पुत्राणां मम सङ्क्षयम् ॥ ००१ ॥

तथा तु मे कथयसे यथा युद्धं तु वर्तते ।
न सन्ति सूत कौरव्या इति मे नैष्ठिकी मतिः ॥ ००२ ॥

दुर्योधनस्तु विरथः कृतस्तत्र महारणे ।
धर्मपुत्रः कथं चक्रे तस्मिन्वा नृपतिः कथम् ॥ ००३ ॥

अपराह्णे कथं युद्धमभवल्लोमहर्षणम् ।
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ॥ ००४ ॥

सञ्जय उवाच ॥

संसक्तेषु च सैन्येषु युध्यमानेषु भागशः ।
रथमन्यं समास्थाय पुत्रस्तव विशां पते ॥ ००५ ॥

क्रोधेन महताविष्टः सविषो भुजगो यथा ।

दुर्योधनस्तु दृष्ट्वा वै धर्मराजं युधिष्ठिरम्  ॥ ००६  ॥

उवाच सूत त्वरितं याहि याहीति भारत  ॥ ००६  ॥

अत्र मां प्रापय क्षिप्रं सारथे यत्र पाण्डवः ।
ध्रियमाणेन छत्रेण राजा राजति दंशितः  ॥ ००७  ॥

स सूतश्चोदितो राज्ञा राज्ञः स्यन्दनमुत्तमम् ।
युधिष्ठिरस्याभिमुखं प्रेषयामास संयुगे  ॥ ००८  ॥

ततो युधिष्ठिरः क्रुद्धः प्रमत्त इव सद्गवः ।
सारथिं चोदयामास याहि यत्र सुयोधनः  ॥ ००९  ॥

तौ समाजग्मतुर्वीरौ भ्रातरौ रथसत्तमौ ।
समेत्य च महावीर्यौ संनद्धौ युद्धदुर्मदौ  ॥ ०१०  ॥

ततक्षतुर्महेष्वासौ शरैरन्योन्यमाहवे  ॥ ०१०  ॥

ततो दुर्योधनो राजा धर्मशीलस्य मारिष ।
शिलाशितेन भल्लेन धनुश्चिच्छेद संयुगे  ॥ ०११  ॥

तं नामृष्यत सङ्क्रुद्धो व्यवसायं युधिष्ठिरः  ॥ ०११  ॥

अपविध्य धनुश्छिन्नं क्रोधसंरक्तलोचनः ।
अन्यत्कार्मुकमादाय धर्मपुत्रश्चमूमुखे  ॥ ०१२  ॥

दुर्योधनस्य चिच्छेद ध्वजं कार्मुकमेव च ।
अथान्यद्धनुरादाय प्रत्यविध्यत पाण्डवम्  ॥ ०१३  ॥

तावन्योन्यं सुसंरब्धौ शरवर्षाण्यमुञ्चताम् ।
सिंहाविव सुसङ्क्रुद्धौ परस्परजिगीषया  ॥ ०१४  ॥

अन्योन्यं जघ्नतुश्चैव नर्दमानौ वृषाविव ।
अन्योन्यं प्रेक्षमाणौ च चेरतुस्तौ महारथौ ॥ ०१५ ॥

ततः पूर्णायतोत्सृष्टैरन्योन्यं सुकृतव्रणौ ।
विरेजतुर्महाराज पुष्पिताविव किंशुकौ ॥ ०१६ ॥

ततो राजन्प्रतिभयान्सिंहनादान्मुहुर्मुहुः ।
तलयोश्च तथा शब्दान्धनुषोश्च महाहवे ॥ ०१७ ॥

शङ्खशब्दरवांश्चैव चक्रतुस्तौ रथोत्तमौ ।
अन्योन्यं च महाराज पीडयां चक्रतुर्भृशम् ॥ ०१८ ॥

ततो युधिष्ठिरो राजा तव पुत्रं त्रिभिः शरैः ।
आजघानोरसि क्रुद्धो वज्रवेगो दुरासदः ॥ ०१९ ॥

प्रतिविव्याध तं तूर्णं तव पुत्रो महीपतिम् ।
पञ्चभिर्निशितैर्बाणैर्हेमपुङ्खैः शिलाशितैः ॥ ०२० ॥

ततो दुर्योधनो राजा शक्तिं चिक्षेप भारत ।
सर्वपारशवीं तीक्ष्णां महोल्काप्रतिमां तदा ॥ ०२१ ॥

तामापतन्तीं सहसा धर्मराजः शिलाशितैः ।
त्रिभिश्चिच्छेद सहसा तं च विव्याध सप्तभिः ॥ ०२२ ॥

निपपात ततः साथ हेमदण्डा महाघना ।
निपतन्ती महोल्केव व्यराजच्छिखिसंनिभा ॥ ०२३ ॥

शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशां पते ।
नवभिर्निशितैर्भल्लैर्निजघान युधिष्ठिरम् ॥ ०२४ ॥

सोऽतिविद्धो बलवतामग्रणीः शत्रुतापनः ।
दुर्योधनं समुद्दिश्य बाणं जग्राह सत्वरः ॥ ०२५ ॥

समाधत्त च तं बाणं धनुष्युग्रं महाबलः ।
चिक्षेप च ततो राजा राज्ञः क्रुद्धः पराक्रमी ॥ ०२६ ॥

स तु बाणः समासाद्य तव पुत्रं महारथम् ।
व्यमोहयत राजानं धरणीं च जगाम ह ॥ ०२७ ॥

ततो दुर्योधनः क्रुद्धो गदामुद्यम्य वेगितः ।
विधित्सुः कलहस्यान्तमभिदुद्राव पाण्डवम् ॥ ०२८ ॥

तमालक्ष्योद्यतगदं दण्डहस्तमिवान्तकम् ।
धर्मराजो महाशक्तिं प्राहिणोत्तव सूनवे ॥ ०२९ ॥

दीप्यमानां महावेगां महोल्कां ज्वलितामिव ॥ ०२९ ॥

रथस्थः स तया विद्धो वर्म भित्त्वा महाहवे ।
भृशं संविग्नहृदयः पपात च मुमोह च ॥ ०३० ॥

ततस्त्वरितमागत्य कृतवर्मा तवात्मजम् ।
प्रत्यपद्यत राजानं मग्नं वै व्यसनार्णवे ॥ ०३१ ॥

भीमोऽपि महतीं गृह्य गदां हेमपरिष्कृताम् ।
अभिदुद्राव वेगेन कृतवर्माणमाहवे ॥ ०३२ ॥

एवं तदभवद्युद्धं त्वदीयानां परैः सह ॥ ०३२ ॥

# अध्याय ०२१

सञ्जय उवाच ॥

ततः कर्णं पुरस्कृत्य त्वदीया युद्धदुर्मदाः ।
पुनरावृत्य सङ्ग्रामं चक्रुर्देवासुरोपमम् ॥ ००१ ॥

द्विरदरथनराश्वशङ्खशब्दैः ; परिहृषिता विविधैश्च शस्त्रपातैः ।
द्विरदरथपदातिसार्थवाहाः ; परिपतिताभिमुखाः प्रजह्रिरे ते ॥ ००२ ॥

शरपरशुवरासिपट्टिशै ;रिषुभिरनेकविधैश्च सादिताः ।
द्विरदरथहया महाहवे ; वरपुरुषैः पुरुषाश्च वाहनैः ॥ ००३ ॥

कमलदिनकरेन्दुसंनिभैः ; सितदशनैः सुमुखाक्षिनासिकैः ।
रुचिरमुकुटकुण्डलैर्मही ; पुरुषशिरोभिरवस्तृता बभौ ॥ ००४ ॥

परिघमुसलशक्तितोमरै ;र्नखरभुशुण्डिगदाशतैर्द्रुताः ।
द्विरदनरहयाः सहस्रशो ; रुधिरनदीप्रवहास्तदाभवन् ॥ ००५ ॥

प्रहतनररथाश्वकुञ्जरं ; प्रतिभयदर्शनमुल्बणं तदा ।
तदहितनिहतं बभौ बलं ; पितृपतिराष्ट्रमिव प्रजाक्षये ॥ ००६ ॥

अथ तव नरदेव सैनिका ;स्तव च सुताः सुरसूनुसंनिभाः ।
अमितबलपुरःसरा रणे ; कुरुवृषभाः शिनिपुत्रमभ्ययुः ॥ ००७ ॥

तदतिरुचिरभीममाबभौ ; पुरुषवराश्वरथद्विपाकुलम् ।
लवणजलसमुद्धतस्वनं ; बलममरासुरसैन्यसंनिभम् ॥ ००८ ॥

सुरपतिसमविक्रमस्तत ;स्त्रिदशवरावरजोपमं युधि ।
दिनकरकिरणप्रभैः पृषत्कै ; रवितनयोऽभ्यहनच्छिनिप्रवीरम् ॥ ००९ ॥

तमपि सरथवाजिसारथिं ; शिनिवृषभो विविधैः शरैस्त्वरन् ।
भुजगविषसमप्रभै रणे ; पुरुषवरं समवास्तृणोत्तदा ॥ ०१० ॥

शिनिवृषभशरप्रपीडितं ; तव सुहृदो वसुषेणमभ्ययुः ।
त्वरितमतिरथा रथर्षभं ; द्विरदरथाश्वपदातिभिः सह ॥ ०११ ॥

तमुदधिनिभमाद्रवद्बली ; त्वरिततरैः समभिद्रुतं परैः ।
द्रुपदसुतसखस्तदाकरो ;त्पुरुषरथाश्वगजक्षयं महत् ॥ ०१२ ॥

अथ पुरुषवरौ कृताह्निकौ ; भवमभिपूज्य यथाविधि प्रभुम् ।
अरिवधकृतनिश्चयौ द्रुतं ; तव बलमर्जुनकेशवौ सृतौ ॥ ०१३ ॥

जलदनिनदनिस्वनं रथं ; पवनविधूतपताककेतनम् ।
सितहयमुपयान्तमन्तिकं ; हृतमनसो ददृशुस्तदारयः ॥ ०१४ ॥

अथ विस्फार्य गाण्डीवं रणे नृत्यन्निवार्जुनः ।
शरसंबाधमकरोत्खं दिशः प्रदिशस्तथा ॥ ०१५ ॥

रथान्विमानप्रतिमान्सज्जयन्त्रायुधध्वजान् ।
ससारथींस्तदा बाणैरभ्राणीवानिलोऽवधीत् ॥ ०१६ ॥

गजान्गजप्रयन्तॄंश्च वैजयन्त्यायुधध्वजान् ।
सादिनोऽश्वांश्च पत्तींश्च शरैर्निन्ये यमक्षयम् ॥ ०१७ ॥

तमन्तकमिव क्रुद्धमनिवार्यं महारथम् ।
दुर्योधनोऽभ्ययादेको निघ्नन्बाणैः पृथग्विधैः ॥ ०१८ ॥

तस्यार्जुनो धनुः सूतं केतुमश्वांश्च सायकैः ।
हत्वा सप्तभिरेकैकं छत्रं चिच्छेद पत्रिणा ॥ ०१९ ॥

नवमं च समासाद्य व्यसृजत्प्रतिघातिनम् ।

दुर्योधनायेषुवरं तं द्रौणिः सप्तधाच्छिनत् ॥ ०२० ॥

ततो द्रौणेर्धनुश्छित्त्वा हत्वा चाश्ववराञ्शरैः ।
कृपस्यापि तथात्युग्रं धनुश्चिच्छेद पाण्डवः ॥ ०२१ ॥

हार्दिक्यस्य धनुश्छित्त्वा ध्वजं चाश्वं तथावधीत् ।
दुःशासनस्येषुवरं छित्त्वा राधेयमभ्ययात् ॥ ०२२ ॥

अथ सात्यकिमुत्सृज्य त्वरन्कर्णोऽर्जुनं त्रिभिः ।
विद्ध्वा विव्याध विंशत्या कृष्णं पार्थं पुनस्त्रिभिः ॥ ०२३ ॥

अथ सात्यकिरागत्य कर्णं विद्ध्वा शितैः शरैः ।
नवत्या नवभिश्चोग्रैः शतेन पुनरार्दयत् ॥ ०२४ ॥

ततः प्रवीराः पाण्डूनां सर्वे कर्णमपीडयन् ।
युधामन्युः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ ०२५ ॥

उत्तमौजा युयुत्सुश्च यमौ पार्षत एव च ।
चेदिकारूषमत्स्यानां केकयानां च यद्बलम् ॥ ०२६ ॥

चेकितानश्च बलवान्धर्मराजश्च सुव्रतः ॥ ०२६ ॥

एते रथाश्वद्विरदैः पत्तिभिश्चोग्रविक्रमैः ।
परिवार्य रणे कर्णं नानाशस्त्रैरवाकिरन् ॥ ०२७ ॥

भाषन्तो वाग्भिरुग्राभिः सर्वे कर्णवधे वृताः ॥ ०२७ ॥

तां शस्त्रवृष्टिं बहुधा छित्त्वा कर्णः शितैः शरैः ।
अपोवाह स्म तान्सर्वान्द्रुमान्भङ्क्त्वेव मारुतः ॥ ०२८ ॥

रथिनः समहामात्रान्गजानश्वान्ससादिनः ।

शरव्रातांश्च सङ्क्रुद्धो निघ्नन्कर्णो व्यदृश्यत ॥ ०२९ ॥

तद्वध्यमानं पाण्डूनां बलं कर्णास्त्रतेजसा ।
विशस्त्रक्षतदेहं च प्राय आसीत्पराङ्मुखम् ॥ ०३० ॥

अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्जुनः स्वयम् ।
दिशः खं चैव भूमिं च प्रावृणोच्छरवृष्टिभिः ॥ ०३१ ॥

मुसलानीव निष्पेतुः परिघा इव चेषवः ।
शतघ्न्य इव चाप्यन्ये वज्राण्युग्राणि वापरे ॥ ०३२ ॥

तैर्वध्यमानं तत्सैन्यं सपत्त्यश्वरथद्विपम् ।
निमीलिताक्षमत्यर्थमुदभ्राम्यत्समन्ततः ॥ ०३३ ॥

निष्कैवल्यं तदा युद्धं प्रापुरश्वनरद्विपाः ।
वध्यमानाः शरैरन्ये तदा भीताः प्रदुद्रुवुः ॥ ०३४ ॥

एवं तेषां तदा युद्धे संसक्तानां जयैषिणाम् ।
गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ॥ ०३५ ॥

तमसा च महाराज रजसा च विशेषतः ।
न किञ्चित्प्रत्यपश्याम शुभं वा यदि वाशुभम् ॥ ०३६ ॥

ते त्रसन्तो महेष्वासा रात्रियुद्धस्य भारत ।
अपयानं ततश्चक्रुः सहिताः सर्ववाजिभिः ॥ ०३७ ॥

कौरवेषु च यातेषु तदा राजन्दिनक्षये ।
जयं सुमनसः प्राप्य पार्थाः स्वशिबिरं ययुः ॥ ०३८ ॥

वादित्रशब्दैर्विविधैः सिंहनादैश्च नर्तितैः ।
परानवहसन्तश्च स्तुवन्तश्चाच्युतार्जुनौ ॥ ०३९ ॥

कृतेऽवहारे तैर्वीरैः सैनिकाः सर्व एव ते ।
आशिषः पाण्डवेयेषु प्रायुज्यन्त नरेश्वराः ॥ ०४० ॥

ततः कृतेऽवहारे च प्रहृष्टाः कुरुपाण्डवाः ।
निशायां शिबिरं गत्वा न्यविशन्त नरेश्वराः ॥ ०४१ ॥

यक्षरक्षःपिशाचाश्च श्वापदानि च संघशः ।
जग्मुरायोधनं घोरं रुद्रस्यानर्तनोपमम् ॥ ०४२ ॥

---

# सप्तदशयुद्धदिवसः

## अध्याय ०२२

धृतराष्ट्र उवाच ॥

स्वेन च्छन्देन नः सर्वान्नावधीद्व्यक्तमर्जुनः ।
न ह्यस्य समरे मुच्येतान्तकोऽप्याततायिनः ॥ ००१ ॥

पार्थो ह्येकोऽहरद्भद्रामेकश्चाग्निमतर्पयत् ।
एकश्चेमां महीं जित्वा चक्रे बलिभृतो नृपान् ॥ ००२ ॥

एको निवातकवचानवधीद्दिव्यकार्मुकः ।
एकः किरातरूपेण स्थितं शर्वमयोधयत् ॥ ००३ ॥

एकोऽभ्यरक्षद्भरतानेको भवमतोषयत् ।
तेनैकेन जिताः सर्वे मदीया उग्रतेजसः ॥ ००४ ॥

ते न निन्द्याः प्रशस्याश्च यत्ते चक्रुर्ब्रवीहि तत् ॥ ००४ ॥

सञ्जय उवाच ॥

हतप्रहतविध्वस्ता विवर्मायुधवाहनाः ।
दीनस्वरा दूयमाना मानिनः शत्रुभिर्जिताः ॥ ००५ ॥

शिबिरस्थाः पुनर्मन्त्रं मन्त्रयन्ति स्म कौरवाः ।
भग्नदंष्ट्रा हतविषाः पदाक्रान्ता इवोरगाः ॥ ००६ ॥

तानब्रवीत्ततः कर्णः क्रुद्धः सर्प इव श्वसन् ।
करं करेणाभिपीड्य प्रेक्षमाणस्तवात्मजम् ॥ ००७ ॥

यत्तो दृढश्च दक्षश्च धृतिमानर्जुनः सदा ।
स बोधयति चाप्येनं प्राप्तकालमधोक्षजः ॥ ००८ ॥

सहसास्त्रविसर्गेण वयं तेनाद्य वञ्चिताः ।
श्वस्त्वहं तस्य सङ्कल्पं सर्वं हन्ता महीपते ॥ ००९ ॥

एवमुक्तस्तथेत्युक्त्वा सोऽनुजज्ञे नृपोत्तमान् ।
सुखोषितास्ते रजनीं हृष्टा युद्धाय निर्ययुः ॥ ०१० ॥

तेऽपश्यन्विहितं व्यूहं धर्मराजेन दुर्जयम् ।
प्रयत्नात्कुरुमुख्येन बृहस्पत्युशनोमतात् ॥ ०११ ॥

अथ प्रतीपकर्तारं सततं विजितात्मनाम् ।
सस्मार वृषभस्कन्धं कर्णं दुर्योधनस्तदा ॥ ०१२ ॥

पुरंदरसमं युद्धे मरुद्गणसमं बले ।
कार्तवीर्यसमं वीर्ये कर्णं राज्ञोऽगमन्मनः ॥ ०१३ ॥

सूतपुत्रं महेष्वासं बन्धुमात्ययिकेष्विव ॥ ०१३ ॥

धृतराष्ट्र उवाच ॥

यद्वोऽगमन्मनो मन्दाः कर्णं वैकर्तनं तदा ।
अप्यद्राक्षत तं यूयं शीतार्ता इव भास्करम् ॥ ०१४ ॥

कृतेऽवहारे सैन्यानां प्रवृत्ते च रणे पुनः ।
कथं वैकर्तनः कर्णस्तत्रायुध्यत सञ्जय ॥ ०१५ ॥

कथं च पाण्डवाः सर्वे युयुधुस्तत्र सूतजम् ॥ ०१५ ॥

कर्णो ह्येको महाबाहुर्हन्यात्पार्थान्ससोमकान् ।
कर्णस्य भुजयोर्वीर्यं शक्रविष्णुसमं मतम् ॥ ०१६ ॥

तथास्त्राणि सुघोराणि विक्रमश्च महात्मनः ॥ ०१६ ॥

दुर्योधनं तदा दृष्ट्वा पाण्डवेन भृशार्दितम् ।
पराक्रान्तान्पाण्डुसुतान्दृष्ट्वा चापि महाहवे ॥ ०१७ ॥

कर्णमाश्रित्य सङ्ग्रामे दर्पो दुर्योधने पुनः ।
जेतुमुत्सहते पार्थान्सपुत्रान्सहकेशवान् ॥ ०१८ ॥

अहो बत महद्दुःखं यत्र पाण्डुसुतान्रणे ।
नातरद्रभसः कर्णो दैवं नूनं परायणम् ॥ ०१९ ॥

अहो द्यूतस्य निष्ठेयं घोरा संप्रति वर्तते ॥ ०१९ ॥

अहो दुःखानि तीव्राणि दुर्योधनकृतान्यहम् ।
सहिष्यामि सुघोराणि शल्यभूतानि सञ्जय ॥ ०२० ॥

सौबलं च तथा तात नीतिमानिति मन्यते ।
युद्धेषु नाम दिव्येषु वर्तमानेषु सञ्जय ।
अश्रौषं निहतान्पुत्रान्नित्यमेव च निर्जितान्  ॥ ०२२  ॥

न पाण्डवानां समरे कश्चिदस्ति निवारकः ।
स्त्रीमध्यमिव गाहन्ति दैवं हि बलवत्तरम्  ॥ ०२३  ॥

सञ्जय उवाच  ॥

अतिक्रान्तं हि यत्कार्यं पश्चाच्चिन्तयतीति च ।
तच्चास्य न भवेत्कार्यं चिन्तया च विनश्यति  ॥ ०२४  ॥

तदिदं तव कार्यं तु दूरप्राप्तं विजानता ।
न कृतं यत्त्वया पूर्वं प्राप्ताप्राप्तविचारणे  ॥ ०२५  ॥

उक्तोऽसि बहुधा राजन्मा युध्यस्वेति पाण्डवैः ।
गृह्णीषे न च तन्मोहात्पाण्डवेषु विशां पते  ॥ ०२६  ॥

त्वया पापानि घोराणि समाचीर्णानि पाण्डुषु ।
त्वत्कृते वर्तते घोरः पार्थिवानां जनक्षयः  ॥ ०२७  ॥

तत्त्विदानीमतिक्रम्य मा शुचो भरतर्षभ ।
शृणु सर्वं यथावृत्तं घोरं वैशसमच्युत  ॥ ०२८  ॥

प्रभातायां रजन्यां तु कर्णो राजानमभ्ययात् ।
समेत्य च महाबाहुर्दुर्योधनमभाषत  ॥ ०२९  ॥

अद्य राजन्समेष्यामि पाण्डवेन यशस्विना ।
हनिष्यामि च तं वीरं स वा मां निहनिष्यति  ॥ ०३०  ॥

बहुत्वान्मम कार्याणां तथा पार्थस्य पार्थिव ।
नाभूत्समागमो राजन्मम चैवार्जुनस्य च ॥ ०३१ ॥

इदं तु मे यथाप्रज्ञं शृणु वाक्यं विशां पते ।
अनिहत्य रणे पार्थं नाहमेष्यामि भारत ॥ ०३२ ॥

हतप्रवीरे सैन्येऽस्मिन्मयि चैव स्थिते युधि ।
अभियास्यति मां पार्थः शक्रशक्त्या विनाकृतम् ॥ ०३३ ॥

ततः श्रेयस्करं यत्ते तन्निबोध जनेश्वर ।
आयुधानां च यद्वीर्यं द्रव्याणामर्जुनस्य च ॥ ०३४ ॥

कायस्य महतो भेदे लाघवे दूरपातने ।
सौष्ठवे चास्त्रयोगे च सव्यसाची न मत्समः ॥ ०३५ ॥

सर्वायुधमहामात्रं विजयं नाम तद्धनुः ।
इन्द्रार्थमभिकामेन निर्मितं विश्वकर्मणा ॥ ०३६ ॥

येन दैत्यगणान्राजञ्जितवान्वै शतक्रतुः ।
यस्य घोषेण दैत्यानां विमुह्यन्ति दिशो दश ॥ ०३७ ॥

तद्भार्गवाय प्रायच्छच्छक्रः परमसंमतम् ॥ ०३७ ॥

तद्दिव्यं भार्गवो मह्यमददाद्धनुरुत्तमम् ।
येन योत्स्ये महाबाहुमर्जुनं जयतां वरम् ॥ ०३८ ॥

यथेन्द्रः समरे सर्वान्दैतेयान्वै समागतान् ॥ ०३८ ॥

धनुर्घोरं रामदत्तं गाण्डीवात्तद्विशिष्यते ।
त्रिःसप्तकृत्वः पृथिवी धनुषा तेन निर्जिता ॥ ०३९ ॥

धनुषो यस्य कर्माणि दिव्यानि प्राह भार्गवः ।
तद्रामो ह्यददान्मह्यं येन योत्स्यामि पाण्डवम् ॥ ०४० ॥

अद्य दुर्योधनाहं त्वां नन्दयिष्ये सबान्धवम् ।
निहत्य समरे वीरमर्जुनं जयतां वरम् ॥ ०४१ ॥

सपर्वतवनद्वीपा हतद्विड्भूः ससागरा ।
पुत्रपौत्रप्रतिष्ठा ते भविष्यत्यद्य पार्थिव ॥ ०४२ ॥

नासाध्यं विद्यते मेऽद्य त्वत्प्रियार्थं विशेषतः ।
सम्यग्धर्मानुरक्तस्य सिद्धिरात्मवतो यथा ॥ ०४३ ॥

न हि मां समरे सोढुं स शक्तोऽग्निं तरुर्यथा ।
अवश्यं तु मया वाच्यं येन हीनोऽस्मि फल्गुनात् ॥ ०४४ ॥

ज्या तस्य धनुषो दिव्या तथाक्षय्यौ महेषुधी ।
तस्य दिव्यं धनुः श्रेष्ठं गाण्डीवमजरं युधि ॥ ०४५ ॥

विजयं च महद्दिव्यं ममापि धनुरुत्तमम् ।
तत्राहमधिकः पार्थाद्धनुषा तेन पार्थिव ॥ ०४६ ॥

मया चाभ्यधिको वीरः पाण्डवस्तन्निबोध मे ।
रश्मिग्राहश्च दाशार्हः सर्वलोकनमस्कृतः ॥ ०४७ ॥

अग्निदत्तश्च वै दिव्यो रथः काञ्चनभूषणः ।
अच्छेद्यः सर्वतो वीर वाजिनश्च मनोजवाः ॥ ०४८ ॥

ध्वजश्च दिव्यो द्युतिमान्वानरो विस्मयङ्करः ॥ ०४८ ॥

कृष्णश्च स्रष्टा जगतो रथं तमभिरक्षति ।
एभिर्द्रव्यैरहं हीनो योद्धुमिच्छामि पाण्डवम् ॥ ०४९ ॥

अयं तु सदृशो वीरः शल्यः समितिशोभनः ।
सारथ्यं यदि मे कुर्याद्ध्रुवस्ते विजयो भवेत् ॥ ०५० ॥

तस्य मे सारथिः शल्यो भवत्वसुकरः परैः ।
नाराचान्गार्ध्रपत्रांश्च शकटानि वहन्तु मे ॥ ०५१ ॥

रथाश्च मुख्या राजेन्द्र युक्ता वाजिभिरुत्तमैः ।
आयान्तु पश्चात्सततं मामेव भरतर्षभ ॥ ०५२ ॥

एवमभ्यधिकः पार्थाद्भविष्यामि गुणैरहम् ।
शल्यो ह्यभ्यधिकः कृष्णादर्जुनादधिको ह्यहम् ॥ ०५३ ॥

यथाश्वहृदयं वेद दाशार्हः परवीरहा ।
तथा शल्योऽपि जानीते हयानां वै महारथः ॥ ०५४ ॥

बाहुवीर्ये समो नास्ति मद्रराजस्य कश्चन ।
तथास्त्रैर्मत्समो नास्ति कश्चिदेव धनुर्धरः ॥ ०५५ ॥

तथा शल्यसमो नास्ति हययाने ह कश्चन ।
सोऽयमभ्यधिकः पार्थाद्भविष्यति रथो मम ॥ ०५६ ॥

एतत्कृतं महाराज त्वयेच्छामि परंतप ।
एवं कृते कृतं मह्यं सर्वकामैर्भविष्यति ॥ ०५७ ॥

ततो द्रष्टासि समरे यत्करिष्यामि भारत ।
सर्वथा पाण्डवान्सर्वाञ्जेष्याम्यद्य समागतान् ॥ ०५८ ॥

दुर्योधन उवाच ॥

सर्वमेतत्करिष्यामि यथा त्वं कर्ण मन्यसे ।

सोपासङ्गा रथाः साश्वा अनुयास्यन्ति सूतज ॥ ०५९ ॥

नाराचान्गार्ध्रपक्षांश्च शकटानि वहन्तु ते ।
अनुयास्याम कर्ण त्वां वयं सर्वे च पार्थिवाः ॥ ०६० ॥

सञ्जय उवाच ॥

एवमुक्त्वा महाराज तव पुत्राः प्रतापवान् ।
अभिगम्याब्रवीद्राजा मद्रराजमिदं वचः ॥ ०६१ ॥

---

# शल्यसारथ्याभ्युपगमः

## अध्याय ०२३

सञ्जय उवाच ॥

पुत्रस्तव महाराज मद्रराजमिदं वचः ।
विनयेनोपसङ्गम्य प्रणयाद्वाक्यमब्रवीत् ॥ ००१ ॥

सत्यव्रत महाभाग द्विषतामघवर्धन ।
मद्रेश्वर रणे शूर परसैन्यभयङ्कर ॥ ००२ ॥

श्रुतवानसि कर्णस्य ब्रुवतो वदतां वर ।
यथा नृपतिसिंहानां मध्ये त्वां वरयत्ययम् ॥ ००३ ॥

तस्मात्पार्थविनाशार्थं हितार्थं मम चैव हि ।
सारथ्यं रथिनां श्रेष्ठ सुमनाः कर्तुमर्हसि ॥ ००४ ॥

अस्याभीशुग्रहो लोके नान्योऽस्ति भवता समः ।
स पातु सर्वतः कर्णं भवान्ब्रह्मेव शङ्करम् ॥ ००५ ॥

पार्थस्य सचिवः कृष्णो यथाभीशुग्रहो वरः ।
तथा त्वमपि राधेयं सर्वतः परिपालय ॥ ००६ ॥

भीष्मो द्रोणः कृपः कर्णो भवान्भोजश्च वीर्यवान् ।
शकुनिः सौबलो द्रौणिरहमेव च नो बलम् ॥ ००७ ॥

एषामेव कृतो भागो नवधा पृतनापते ॥ ००७ ॥

नैव भागोऽत्र भीष्मस्य द्रोणस्य च महात्मनः ।
ताभ्यामतीत्य तौ भागौ निहता मम शत्रवः ॥ ००८ ॥

वृद्धौ हि तौ नरव्याघ्रौ छलेन निहतौ च तौ ।
कृत्वा नसुकरं कर्म गतौ स्वर्गमितोऽनघ ॥ ००९ ॥

तथान्ये पुरुषव्याघ्राः परैर्विनिहता युधि ।
अस्मदीयाश्च बहवः स्वर्गायोपगता रणे ॥ ०१० ॥

त्यक्त्वा प्राणान्यथाशक्ति चेष्टाः कृत्वा च पुष्कलाः ॥ ०१० ॥

कर्णो ह्येको महाबाहुरस्मत्प्रियहिते रतः ।
भवांश्च पुरुषव्याघ्र सर्वलोकमहारथः ॥ ०११ ॥

तस्मिञ्जयाशा विपुला मम मद्रजनाधिप ॥ ०११ ॥

पार्थस्य समरे कृष्णो यथाभीशुवरग्रहः ।
तेन युक्तो रणे पार्थो रक्ष्यमाणश्च पार्थिव ॥ ०१२ ॥

यानि कर्माणि कुरुते प्रत्यक्षाणि तथैव ते ॥ ०१२ ॥

पूर्वं न समरे ह्येवमवधीदर्जुनो रिपून् ।
अहन्यहनि मद्रेश द्रावयन्दृश्यते युधि ॥ ०१३ ॥

भागोऽवशिष्टः कर्णस्य तव चैव महाद्युते ।
तं भागं सह कर्णेन युगपन्नाशयाहवे ॥ ०१४ ॥

सूर्यारुणौ यथा दृष्ट्वा तमो नश्यति मारिष ।
तथा नश्यन्तु कौन्तेयाः सपाञ्चालाः ससृञ्जयाः ॥ ०१५ ॥

रथानां प्रवरः कर्णो यन्तॄणां प्रवरो भवान् ।
संनिपातः समो लोके भवतोर्नास्ति कश्चन ॥ ०१६ ॥

यथा सर्वास्ववस्थासु वार्ष्णेयः पाति पाण्डवम् ।
तथा भवान्परित्रातु कर्णं वैकर्तनं रणे ॥ ०१७ ॥

त्वया सारथिना ह्येष अप्रधृष्यो भविष्यति ।
देवतानामपि रणे सशक्राणां महीपते ॥ ०१८ ॥

किं पुनः पाण्डवेयानां मातिशङ्कीर्वचो मम ॥ ०१८ ॥

दुर्योधनवचः श्रुत्वा शल्यः क्रोधसमन्वितः ।
त्रिशिखां भ्रुकुटीं कृत्वा धुन्वन्हस्तौ पुनः पुनः ॥ ०१९ ॥

क्रोधरक्ते महानेत्रे परिवर्त्य महाभुजः ।
कुलैश्वर्यश्रुतिबलैर्दृप्तः शल्योऽब्रवीदिदम् ॥ ०२० ॥

अवमन्यसे मां गान्धारे ध्रुवं मां परिशङ्कसे ।
यन्मां ब्रवीषि विस्रब्धं सारथ्यं क्रियतामिति ॥ ०२१ ॥

अस्मत्तोऽभ्यधिकं कर्णं मन्यमानः प्रशंससि ।
न चाहं युधि राधेयं गणये तुल्यमात्मना ॥ ०२२ ॥

आदिश्यतामभ्यधिको ममांशः पृथिवीपते ।
तमहं समरे हत्वा गमिष्यामि यथागतम् ॥ ०२३ ॥

अथ वाप्येक एवाहं योत्स्यामि कुरुनन्दन ।
पश्य वीर्यं ममाद्य त्वं सङ्ग्रामे दहतो रिपून् ॥ ०२४ ॥

न चाभिकामान्कौरव्य विधाय हृदये पुमान् ।
अस्मद्विधः प्रवर्तेत मा मा त्वमतिशङ्किथाः ॥ ०२५ ॥

युधि चाप्यवमानो मे न कर्तव्यः कथञ्चन ।
पश्य हीमौ मम भुजौ वज्रसंहननोपमौ ॥ ०२६ ॥

धनुः पश्य च मे चित्रं शरांश्चाशीविषोपमान् ।
रथं पश्य च मे क्लृप्तं सदश्वैर्वातवेगितैः ॥ ०२७ ॥

गदां च पश्य गान्धारे हेमपट्टविभूषिताम् ॥ ०२७ ॥

दारयेयं महीं क्रुद्धो विकिरेयं च पर्वतान् ।
शोषयेयं समुद्रांश्च तेजसा स्वेन पार्थिव ॥ ०२८ ॥

तन्मामेवंविधं जानन्समर्थमरिनिग्रहे ।
कस्माद्युनक्षि सारथ्ये न्यूनस्याधिरथेर्नृप ॥ ०२९ ॥

न नाम धुरि राजेन्द्र प्रयोक्तुं त्वमिहार्हसि ।
न हि पापीयसः श्रेयान्भूत्वा प्रेष्यत्वमुत्सहे ॥ ०३० ॥

यो ह्यभ्युपगतं प्रीत्या गरीयांसं वशे स्थितम् ।
वशे पापीयसो धत्ते तत्पापमधरोत्तरम् ॥ ०३१ ॥

ब्राह्मणा ब्रह्मणा सृष्टा मुखात्क्षत्रमथोरसः ।
ऊरुभ्यामसृजद्वैश्याञ्शूद्रान्पद्भ्यामिति श्रुतिः ॥ ०३२ ॥

तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ॥ ०३२ ॥

अथान्योन्यस्य संयोगाच्चातुर्वर्ण्यस्य भारत ।
गोप्तारः सङ्ग्रहीतारो दातारः क्षत्रियाः स्मृताः ॥ ०३३ ॥

याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः ।
लोकस्यानुग्रहार्थाय स्थापिता ब्रह्मणा भुवि ॥ ०३४ ॥

कृषिश्च पाशुपाल्यं च विशां दानं च सर्वशः ।
ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ॥ ०३५ ॥

ब्रह्मक्षत्रस्य विहिताः सूता वै परिचारकाः ।
न विट्शूद्रस्य तत्रैव श्रृणु वाक्यं ममानघ ॥ ०३६ ॥

सोऽहं मूर्धावसिक्तः सन्राजर्षिकुलसंभवः ।
महारथः समाख्यातः सेव्यः स्तव्यश्च बन्दिनाम् ॥ ०३७ ॥

सोऽहमेतादृशो भूत्वा नेहारिकुलमर्दन ।
सूतपुत्रस्य सङ्ग्रामे सारथ्यं कर्तुमुत्सहे ॥ ०३८ ॥

अवमानमहं प्राप्य न योत्स्यामि कथञ्चन ।
आपृच्छ्य त्वाद्य गान्धारे गमिष्यामि यथागतम् ॥ ०३९ ॥

एवमुक्त्वा नरव्याघ्रः शल्यः समितिशोभनः ।
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ॥ ०४० ॥

प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव ।

अब्रवीन्मधुरं वाक्यं साम सर्वार्थसाधकम् ॥ ०४१ ॥

यथा शल्य त्वमात्थेदमेवमेतदसंशयम् ।
अभिप्रायस्तु मे कश्चित्तं निबोध जनेश्वर ॥ ०४२ ॥

न कर्णोऽभ्यधिकस्त्वत्तः शङ्के नैव कथञ्चन ।
न हि मद्रेश्वरो राजा कुर्याद्यदनृतं भवेत् ॥ ०४३ ॥

ऋतमेव हि पूर्वास्ते वहन्ति पुरुषोत्तमाः ।
तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ॥ ०४४ ॥

शल्यभूतश्च शत्रूणां यस्मात्त्वं भुवि मानद ।
तस्माच्छल्येति ते नाम कथ्यते पृथिवीपते ॥ ०४५ ॥

यदेव व्याहृतं पूर्वं भवता भूरिदक्षिण ।
तदेव कुरु धर्मज्ञ मदर्थं यद्यदुच्यसे ॥ ०४६ ॥

न च त्वत्तो हि राधेयो न चाहमपि वीर्यवान् ।
वृणीमस्त्वां हयाग्र्याणां यन्तारमिति संयुगे ॥ ०४७ ॥

यथा ह्यभ्यधिकं कर्णं गुणैस्तात धनञ्जयात् ।
वासुदेवादपि त्वां च लोकोऽयमिति मन्यते ॥ ०४८ ॥

कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ ।
भवानप्यधिकः कृष्णादश्वयाने बले तथा ॥ ०४९ ॥

यथाश्वहृदयं वेद वासुदेवो महामनाः ।
द्विगुणं त्वं तथा वेत्थ मद्रराज न संशयः ॥ ०५० ॥

शल्य उवाच ॥

यन्मा ब्रवीषि गान्धारे मध्ये सैन्यस्य कौरव ।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि  ॥ ०५१  ॥

एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे  ॥ ०५२  ॥

समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति ।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य संनिधौ  ॥ ०५३  ॥

सञ्जय उवाच  ॥

तथेति राजन्पुत्रस्ते सह कर्णेन भारत ।
अब्रवीन्मद्रराजस्य सुतं भरतसत्तम  ॥ ०५४  ॥

---

# त्रिपुरवधोपाख्यानम्

## अध्याय ०२४

दुर्योधन उवाच  ॥

भूय एव तु मद्रेश यत्ते वक्ष्यामि तच्छृणु ।
यथा पुरा वृत्तमिदं युद्धे देवासुरे विभो  ॥ ००१  ॥

यदुक्तवान्पितुर्मह्यं मार्कण्डेयो महानृषिः ।
तदशेषेण ब्रुवतो मम राजर्षिसत्तम  ॥ ००२  ॥

त्वं निबोध न चाप्यत्र कर्तव्या ते विचारणा  ॥ ००२  ॥

देवानामसुराणां च महानासीत्समागमः ।
बभूव प्रथमो राजन्सङ्ग्रामस्तारकामयः ॥ ००३ ॥

निर्जिताश्च तदा दैत्या दैवतैरिति नः श्रुतम् ॥ ००३ ॥

निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः ।
ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव ॥ ००४ ॥

तप उग्रं समास्थाय नियमे परमे स्थिताः ।
तपसा कर्शयामासुर्देहान्स्वाञ्शत्रुतापन ॥ ००५ ॥

दमेन तपसा चैव नियमेन च पार्थिव ।
तेषां पितामहः प्रीतो वरदः प्रददौ वरान् ॥ ००६ ॥

अवध्यत्वं च ते राजन्सर्वभूतेषु सर्वदा ।
सहिता वरयामासुः सर्वलोकपितामहम् ॥ ००७ ॥

तानब्रवीत्तदा देवो लोकानां प्रभुरीश्वरः ।
नास्ति सर्वामरत्वं हि निवर्तध्वमतोऽसुराः ॥ ००८ ॥

वरमन्यं वृणीध्वं वै यादृशं संप्ररोचते ॥ ००८ ॥

ततस्ते सहिता राजन्संप्रधार्यासकृद्बहु ।
सर्वलोकेश्वरं वाक्यं प्रणम्यैनमथाब्रुवन् ॥ ००९ ॥

अस्माकं त्वं वरं देव प्रयच्छेमं पितामह ।
वयं पुराणि त्रीण्येव समास्थाय महीमिमाम् ॥ ०१० ॥

विचरिष्याम लोकेऽस्मिंस्त्वत्प्रसादपुरस्कृताः ॥ ०१० ॥

ततो वर्षसहस्रे तु समेष्यामः परस्परम् ।
एकीभावं गमिष्यन्ति पुराण्येतानि चानघ ॥ ०११ ॥

समागतानि चैतानि यो हन्याद्भगवंस्तदा ।
एकेषुणा देववरः स नो मृत्युर्भविष्यति ॥ ०१२ ॥

एवमस्त्विति तान्देवः प्रत्युक्त्वा प्राविशद्दिवम् ॥ ०१२ ॥

ते तु लब्धवराः प्रीताः संप्रधार्य परस्परम् ।
पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महासुरम् ॥ ०१३ ॥

विश्वकर्माणमजरं दैत्यदानवपूजितम् ॥ ०१३ ॥

ततो मयः स्वतपसा चक्रे धीमान्पुराणि ह ।
त्रीणि काञ्चनमेकं तु रौप्यं कार्ष्णायसं तथा ॥ ०१४ ॥

काञ्चनं दिवि तत्रासीदन्तरिक्षे च राजतम् ।
आयसं चाभवद्भूमौ चक्रस्थं पृथिवीपते ॥ ०१५ ॥

एकैकं योजनशतं विस्तारायामसंमितम् ।
गृहाट्टाट्टालकयुतं बृहत्प्राकारतोरणम् ॥ ०१६ ॥

गुणप्रसवसंबाधमसंबाधमनामयम् ।
प्रासादैर्विविधैश्चैव द्वारैश्चाप्युपशोभितम् ॥ ०१७ ॥

पुरेषु चाभवन्राजन्राजानो वै पृथक्पृथक् ।
काञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः ॥ ०१८ ॥

राजतं कमलाक्षस्य विद्युन्मालिन आयसम् ॥ ०१८ ॥

त्रयस्ते दैत्यराजानस्त्री.ल्लोकानाशु तेजसा ।

आक्रम्य तस्थुर्वर्षाणां पूगान्नाम प्रजापतिः ॥ ०१९ ॥

तेषां दानवमुख्यानां प्रयुतान्यर्बुदानि च ।
कोट्यश्चाप्रतिवीराणां समाजग्मुस्ततस्ततः ॥ ०२० ॥

महदैश्वर्यमिच्छन्तस्त्रिपुरं दुर्गमाश्रिताः ॥ ०२० ॥

सर्वेषां च पुनस्तेषां सर्वयोगवहो मयः ।
तमाश्रित्य हि ते सर्वे अवर्तन्ताकुतोभयाः ॥ ०२१ ॥

यो हि यं मनसा कामं दध्यौ त्रिपुरसंश्रयः ।
तस्मै कामं मयस्तं तं विदधे मायया तदा ॥ ०२२ ॥

तारकाक्षसुतश्चासीद्धरिर्नाम महाबलः ।
तपस्तेपे परमकं येनातुष्यत्पितामहः ॥ ०२३ ॥

स तुष्टमवृणोद्देवं वापी भवतु नः पुरे ।
शस्त्रैर्विनिहता यत्र क्षिप्ताः स्युर्बलवत्तराः ॥ ०२४ ॥

स तु लब्ध्वा वरं वीरस्तारकाक्षसुतो हरिः ।
ससृजे तत्र वापीं तां मृतानां जीवनीं प्रभो ॥ ०२५ ॥

येन रूपेण दैत्यस्तु येन वेषेण चैव ह ।
मृतस्तस्यां परिक्षिप्तस्तादृशेनैव जज्ञिवान् ॥ ०२६ ॥

तां प्राप्य त्रैपुरस्थास्तु सर्वा.ण्ल्लोकान्बबाधिरे ।
महता तपसा सिद्धाः सुराणां भयवर्धनाः ॥ ०२७ ॥

न तेषामभवद्राजन्क्षयो युद्धे कथञ्चन ॥ ०२७ ॥

ततस्ते लोभमोहाभ्यामभिभूता विचेतसः ।

निर्ह्रीकाः संस्थितिं सर्वे स्थापितां समलूलुपन्  ॥ ०२८  ॥

विद्राव्य सगणान्देवांस्तत्र तत्र तदा तदा ।
विचेरुः स्वेन कामेन वरदानेन दर्पिताः  ॥ ०२९  ॥

देवारण्यानि सर्वाणि प्रियाणि च दिवौकसाम् ।
ऋषीणामाश्रमान्पुण्यान्यूपाञ्जनपदांस्तथा  ॥ ०३०  ॥

व्यनाशयन्त मर्यादा दानवा दुष्टचारिणः  ॥ ०३०  ॥

ते देवाः सहिताः सर्वे पितामहमरिंदम ।
अभिजग्मुस्तदाख्यातुं विप्रकारं सुरेतरैः  ॥ ०३१  ॥

ते तत्त्वं सर्वमाख्याय शिरसाभिप्रणम्य च ।
वधोपायमपृच्छन्त भगवन्तं पितामहम्  ॥ ०३२  ॥

श्रुत्वा तद्भगवान्देवो देवानिदमुवाच ह ।
असुराश्च दुरात्मानस्ते चापि विबुधद्विषः  ॥ ०३३  ॥

अपराध्यन्ति सततं ये युष्मान्पीडयन्त्युत  ॥ ०३३  ॥

अहं हि तुल्यः सर्वेषां भूतानां नात्र संशयः ।
अधार्मिकास्तु हन्तव्या इत्यहं प्रब्रवीमि वः  ॥ ०३४  ॥

ते यूयं स्थाणुमीशानं जिष्णुमक्लिष्टकारिणम् ।
योद्धारं वृणुतादित्याः स तान्हन्ता सुरेतरान्  ॥ ०३५  ॥

इति तस्य वचः श्रुत्वा देवाः शक्रपुरोगमाः ।
ब्रह्माणमग्रतः कृत्वा वृषाङ्कं शरणं ययुः  ॥ ०३६  ॥

तपः परं समातस्थुर्गृणन्तो ब्रह्म शाश्वतम् ।

ऋषिभिः सह धर्मज्ञा भवं सर्वात्मना गताः ॥ ०३७ ॥

तुष्टुवुर्वाग्भिरर्थ्याभिर्भयेष्वभयकृत्तमम् ।
सर्वात्मानं महात्मानं येनाप्तं सर्वमात्मना ॥ ०३८ ॥

तपोविशेषैर्बहुभिर्योगं यो वेद चात्मनः ।
यः सांख्यमात्मनो वेद यस्य चात्मा वशे सदा ॥ ०३९ ॥

ते तं ददृशुरीशानं तेजोराशिमुमापतिम् ।
अनन्यसदृशं लोके व्रतवन्तमकल्मषम् ॥ ०४० ॥

एकं च भगवन्तं ते नानारूपमकल्पयन् ।
आत्मनः प्रतिरूपाणि रूपाण्यथ महात्मनि ॥ ०४१ ॥

परस्परस्य चापश्यन्सर्वे परमविस्मिताः ॥ ०४१ ॥

सर्वभूतमयं चेशं तमजं जगतः पतिम् ।
देवा ब्रह्मर्षयश्चैव शिरोभिर्धरणीं गताः ॥ ०४२ ॥

तान्स्वस्तिवाक्येनाभ्यर्च्य समुत्थाप्य च शङ्करः ।
ब्रूत ब्रूतेति भगवान्स्मयमानोऽभ्यभाषत ॥ ०४३ ॥

त्र्यम्बकेणाभ्यनुज्ञातास्ततस्तेऽस्वस्थचेतसः ।
नमो नमस्तेऽस्तु विभो तत इत्यब्रुवन्भवम् ॥ ०४४ ॥

नमो देवातिदेवाय धन्विने चातिमन्यवे ।
प्रजापतिमखघ्नाय प्रजापतिभिरीड्यसे ॥ ०४५ ॥

नमः स्तुताय स्तुत्याय स्तूयमानाय मृत्यवे ।
विलोहिताय रुद्राय नीलग्रीवाय शूलिने ॥ ०४६ ॥

अमोघाय मृगाक्षाय प्रवरायुधयोधिने ।
दुर्वारणाय शुक्राय ब्रह्मणे ब्रह्मचारिणे ॥ ०४७ ॥

ईशानायाप्रमेयाय नियन्त्रे चर्मवाससे ।
तपोनित्याय पिङ्गाय व्रतिने कृत्तिवाससे ॥ ०४८ ॥

कुमारपित्रे त्र्यक्षाय प्रवरायुधधारिणे ।
प्रपन्नार्तिविनाशाय ब्रह्मद्विट्संघघातिने ॥ ०४९ ॥

वनस्पतीनां पतये नराणां पतये नमः ।
गवां च पतये नित्यं यज्ञानां पतये नमः ॥ ०५० ॥

नमोऽस्तु ते ससैन्याय त्र्यम्बकायोग्रतेजसे ।
मनोवाक्कर्मभिर्देव त्वां प्रपन्नान्भजस्व नः ॥ ०५१ ॥

ततः प्रसन्नो भगवान्स्वागतेनाभिनन्द्य तान् ।
प्रोवाच व्येतु वस्त्रासो ब्रूत किं करवाणि वः ॥ ०५२ ॥

पितृदेवर्षिसंघेभ्यो वरे दत्ते महात्मना ।
सत्कृत्य शङ्करं प्राह ब्रह्मा लोकहितं वचः ॥ ०५३ ॥

तवातिसर्गाद्देवेश प्राजापत्यमिदं पदम् ।
मयाधितिष्ठता दत्तो दानवेभ्यो महान्वरः ॥ ०५४ ॥

तानतिक्रान्तमर्यादान्नान्यः संहर्तुमर्हति ।
त्वामृते भूतभव्येश त्वं ह्येषां प्रत्यरिर्वधे ॥ ०५५ ॥

स त्वं देव प्रपन्नानां याचतां च दिवौकसाम् ।
कुरु प्रसादं देवेश दानवाञ्जहि शूलभृत् ॥ ०५६ ॥

श्रीभगवानुवाच ॥

हन्तव्याः शत्रवः सर्वे युष्माकमिति मे मतिः ।
न त्वेकोऽहं वधे तेषां समर्थो वै सुरद्विषाम् ॥ ०५७ ॥

ते यूयं सहिताः सर्वे मदीयेनास्त्रतेजसा ।
जयध्वं युधि ताञ्शत्रून्संघातो हि महाबलः ॥ ०५८ ॥

देवा ऊचुः ॥

अस्मत्तेजोबलं यावत्तावद्द्विगुणमेव च ।
तेषामिति ह मन्यामो दृष्टतेजोबला हि ते ॥ ०५९ ॥

भगवानुवाच ॥

वध्यास्ते सर्वतः पापा ये युष्मास्वपराधिनः ।
मम तेजोबलार्धेन सर्वांस्तान्घ्नत शात्रवान् ॥ ०६० ॥

देवा ऊचुः ॥

बिभर्तुं तेजसोऽर्धं ते न शक्ष्यामो महेश्वर ।
सर्वेषां नो बलार्धेन त्वमेव जहि शात्रवान् ॥ ०६१ ॥

दुर्योधन उवाच ॥

ततस्तथेति देवेशस्तैरुक्तो राजसत्तम ।
अर्धमादाय सर्वेभ्यस्तेजसाभ्यधिकोऽभवत् ॥ ०६२ ॥

स तु देवो बलेनासीत्सर्वेभ्यो बलवत्तरः ।
महादेव इति ख्यातस्तदाप्रभृति शङ्करः ॥ ०६३ ॥

ततोऽब्रवीन्महादेवो धनुर्बाणधरस्त्वहम् ।

हनिष्यामि रथेनाजौ तान्त्रिपूर्न्वै दिवौकसः ॥ ०६४ ॥

ते यूयं मे रथं चैव धनुर्बाणं तथैव च ।
पश्यध्वं यावदद्यैतान्पातयामि महीतले ॥ ०६५ ॥

देवा ऊचुः ॥

मूर्तिसर्वस्वमादाय त्रैलोक्यस्य ततस्ततः ।
रथं ते कल्पयिष्याम देवेश्वर महौजसम् ॥ ०६६ ॥

तथैव बुद्ध्या विहितं विश्वकर्मकृतं शुभम् ।
ततो विबुधशार्दूलास्तं रथं समकल्पयन् ॥ ०६७ ॥

वन्धुरं पृथिवीं देवीं विशालपुरमालिनीम् ।
सपर्वतवनद्वीपां चक्रुर्भूतधरां तदा ॥ ०६८ ॥

मन्दरं पर्वतं चाक्षं जङ्घास्तस्य महानदीः ।
दिशश्च प्रदिशश्चैव परिवारं रथस्य हि ॥ ०६९ ॥

अनुकर्षान्ग्रहान्दीप्तान्वरूथं चापि तारकाः ।
धर्मार्थकामसंयुक्तं त्रिवेणुं चापि बन्धुरम् ॥ ०७० ॥

ओषधीर्विविधास्तत्र नानापुष्पफलोद्गमाः ॥ ०७० ॥

सूर्याचन्द्रमसौ कृत्वा चक्रे रथवरोत्तमे ।
पक्षौ पूर्वापरौ तत्र कृते रात्र्यहनी शुभे ॥ ०७१ ॥

दश नागपतीनीषां धृतराष्ट्रमुखान्दृढाम् ।
द्यां युगं युगचर्माणि संवर्तकबलाहकान् ॥ ०७२ ॥

शम्यां धृतिं च मेधां च स्थितिं संनतिमेव च ।

ग्रहनक्षत्रताराभिश्चर्म चित्रं नभस्तलम्  ॥ ०७३  ॥

सुराम्बुप्रेतवित्तानां पती.ण्ल्लोकेश्वरान्हयान् ।
सिनीवालीमनुमतिं कुहूं राकां च सुव्रताम्  ॥ ०७४  ॥

योक्राणि चक्रुर्वाहानां रोहकांश्चापि कण्ठकम्  ॥ ०७४  ॥

कर्म सत्यं तपोऽर्थश्च विहितास्तत्र रश्मयः ।
अधिष्ठानं मनस्त्वासीत्परिरथ्यं सरस्वती  ॥ ०७५  ॥

नानावर्णाश्च चित्राश्च पताकाः पवनेरिताः ।
विद्युदिन्द्रधनुर्नद्धं रथं दीप्तं व्यदीपयत्  ॥ ०७६  ॥

एवं तस्मिन्महाराज कल्पिते रथसत्तमे ।
देवैर्मनुजशार्दूल द्विषतामभिमर्दने  ॥ ०७७  ॥

स्वान्यायुधानि मुख्यानि न्यदधाच्छङ्करो रथे ।
रथयष्टिं वियत्कृष्टां स्थापयामास गोवृषम्  ॥ ०७८  ॥

ब्रह्मदण्डः कालदण्डो रुद्रदण्डस्तथा ज्वरः ।
परिस्कन्दा रथस्यास्य सर्वतोदिशमुद्यताः  ॥ ०७९  ॥

अथर्वाङ्गिरसावास्तां चक्ररक्षौ महात्मनः ।
ऋग्वेदः सामवेदश्च पुराणं च पुरःसराः  ॥ ०८०  ॥

इतिहासयजुर्वेदौ पृष्ठरक्षौ बभूवतुः ।
दिव्या वाचश्च विद्याश्च परिपार्श्वचराः कृताः  ॥ ०८१  ॥

तोत्त्रादयश्च राजेन्द्र वषट्कारस्तथैव च ।
ओङ्कारश्च मुखे राजन्नतिशोभाकरोऽभवत्  ॥ ०८२  ॥

विचित्रमृतुभिः षड्भिः कृत्वा संवत्सरं धनुः ।
तस्मान्नृणां कालरात्रिर्ज्या कृता धनुषोऽजरा  ॥ ०८३  ॥

इषुश्चाप्यभवद्विष्णुर्ज्वलनः सोम एव च ।
अग्नीषोमौ जगत्कृत्स्नं वैष्णवं चोच्यते जगत्  ॥ ०८४  ॥

विष्णुश्चात्मा भगवतो भवस्यामिततेजसः ।
तस्माद्धनुर्ज्यासंस्पर्शं न विषेहुर्हरस्य ते  ॥ ०८५  ॥

तस्मिञ्शरे तिग्ममन्युर्मुमोचाविषहं प्रभुः ।
भृग्वङ्गिरोमन्युभवं क्रोधाग्निमतिदुःसहम्  ॥ ०८६  ॥

स नीललोहितो धूम्रः कृत्तिवासा भयङ्करः ।
आदित्यायुतसङ्काशस्तेजोज्वालावृतो ज्वलन्  ॥ ०८७  ॥

दुश्च्यावश्च्यावनो जेता हन्ता ब्रह्मद्विषां हरः ।
नित्यं त्राता च हन्ता च धर्माधर्माश्रिताञ्जनान्  ॥ ०८८  ॥

प्रमाथिभिर्घोररूपैर्भीमोदग्रैर्गणैर्वृतः ।
विभाति भगवान्स्थाणुस्तैरेवात्मगुणैर्वृतः  ॥ ०८९  ॥

तस्याङ्गानि समाश्रित्य स्थितं विश्वमिदं जगत् ।
जङ्गमाजङ्गमं राजञ्शुशुभेऽद्भुतदर्शनम्  ॥ ०९०  ॥

दृष्ट्वा तु तं रथं दिव्यं कवची स शरासनी ।
बाणमादत्त तं दिव्यं सोमविष्ण्वग्निसंभवम्  ॥ ०९१  ॥

तस्य वाजांस्ततो देवाः कल्पयां चक्रिरे विभोः ।
पुण्यगन्धवहं राजञ्श्वसनं राजसत्तम  ॥ ०९२  ॥

तमास्थाय महादेवस्त्रासयन्दैवतान्यपि ।

आरुरोह तदा यत्तः कम्पयन्निव रोदसी ॥ ०९३ ॥

स शोभमानो वरदः खड्गी बाणी शरासनी ।
हसन्निवाब्रवीद्देवो सारथिः को भविष्यति ॥ ०९४ ॥

तमब्रुवन्देवगणा यं भवान्संनियोक्ष्यते ।
स भविष्यति देवेश सारथिस्ते न संशयः ॥ ०९५ ॥

तानब्रवीत्पुनर्देवो मत्तः श्रेष्ठतरो हि यः ।
तं सारथिं कुरुध्वं मे स्वयं सञ्चिन्त्य माचिरम् ॥ ०९६ ॥

एतच्छ्रुत्वा ततो देवा वाक्यमुक्तं महात्मना ।
गत्वा पितामहं देवं प्रसाद्यैवं वचोऽब्रुवन् ॥ ०९७ ॥

देव त्वयेदं कथितं त्रिदशारिनिबर्हणम् ।
तथा च कृतमस्माभिः प्रसन्नो वृषभध्वजः ॥ ०९८ ॥

रथश्च विहितोऽस्माभिर्विचित्रायुधसंवृतः ।
सारथिं तु न जानीमः कः स्यात्तस्मिन्रथोत्तमे ॥ ०९९ ॥

तस्माद्विधीयतां कश्चित्सारथिर्देवसत्तम ।
सफलां तां गिरं देव कर्तुमर्हसि नो विभो ॥ १०० ॥

एवमस्मासु हि पुरा भगवन्नुक्तवानसि ।
हितं कर्तास्मि भवतामिति तत्कर्तुमर्हसि ॥ १०१ ॥

स देव युक्तो रथसत्तमो नो ; दुरावरो द्रावणः शात्रवाणाम् ।
पिनाकपाणिर्विहितोऽत्र योद्धा ; विभीषयन्दानवानुद्यतोऽसौ ॥ १०२ ॥

तथैव वेदाश्चतुरो हयाग्र्या ; धरा सशैला च रथो महात्मन् ।
नक्षत्रवंशोऽनुगतो वरूथे ; यस्मिन्योद्धा सारथिनाभिरक्ष्यः ॥ १०३ ॥

तत्र सारथिरेष्टव्यः सर्वैरेतैर्विशेषवान् ।
तत्प्रतिष्ठो रथो देव हया योद्धा तथैव च ॥ १०४ ॥

कवचानि च शस्त्राणि कार्मुकं च पितामह ॥ १०४ ॥

त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम् ।
त्वं हि सर्वैर्गुणैर्युक्तो देवताभ्योऽधिकः प्रभो ॥ १०५ ॥

सारथ्ये तूर्णमारोह संयच्छ परमान्हयान् ॥ १०५ ॥

इति ते शिरसा नत्वा त्रिलोकेशं पितामहम् ।
देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतम् ॥ १०६ ॥

ब्रह्मोवाच ॥

नात्र किञ्चिन्मृषा वाक्यं यदुक्तं वो दिवौकसः ।
संयच्छामि हयानेष युध्यतो वै कपर्दिनः ॥ १०७ ॥

ततः स भगवान्देवो लोकस्रष्टा पितामहः ।
सारथ्ये कल्पितो देवैरीशानस्य महात्मनः ॥ १०८ ॥

तस्मिन्नारोहति क्षिप्रं स्यन्दनं लोकपूजिते ।
शिरोभिरगमंस्तूर्णं ते हया वातरंहसः ॥ १०९ ॥

महेश्वरे त्वारुहति जानुभ्यामगमन्महीम् ।
अभीशून्हि त्रिलोकेशः सङ्गृह्य प्रपितामहः ।
तानश्वांश्चोदयामास मनोमारुतरंहसः ॥ १११ ॥

ततोऽधिरूढे वरदे प्रयाते चासुरान्प्रति ।
साधु साध्विति विश्वेशः स्मयमानोऽभ्यभाषत ॥ ११२ ॥

याहि देव यतो दैत्याश्चोदयाश्वानतन्द्रितः ।
पश्य बाह्वोर्बलं मेऽद्य निघ्नतः शात्रवान्रणे ॥ ११३ ॥

ततस्तांश्चोदयामास वायुवेगसमाञ्जवे ।
येन तत्त्रिपुरं राजन्दैत्यदानवरक्षितम् ॥ ११४ ॥

अथाधिज्यं धनुः कृत्वा शर्वः संधाय तं शरम् ।
युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ॥ ११५ ॥

तस्मिन्स्थिते तदा राजन्क्रुद्धे विधृतकार्मुके ।
पुराणि तानि कालेन जग्मुरेकत्वतां तदा ॥ ११६ ॥

एकीभावं गते चैव त्रिपुरे समुपागते ।
बभूव तुमुलो हर्षो दैवतानां महात्मनाम् ॥ ११७ ॥

ततो देवगणाः सर्वे सिद्धाश्च परमर्षयः ।
जयेति वाचो मुमुचुः संस्तुवन्तो मुदान्विताः ॥ ११८ ॥

ततोऽग्रतः प्रादुरभूत्त्रिपुरं जघ्नुषोऽसुरान् ।
अनिर्देश्योग्रवपुषो देवस्यासह्यतेजसः ॥ ११९ ॥

स तद्विकृष्य भगवान्दिव्यं लोकेश्वरो धनुः ।
त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति ॥ १२० ॥

तत्सासुरगणं दग्ध्वा प्राक्षिपत्पश्चिमार्णवे ॥ १२० ॥

एवं तत्त्रिपुरं दग्धं दानवाश्चाप्यशेषतः ।
महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा ॥ १२१ ॥

स चात्मक्रोधजो वह्निर्हाहेत्युक्त्वा निवारितः ।

मा कार्षीर्भस्मसाल्लोकानिति त्र्यक्षोऽब्रवीच्च तम् ॥ १२२ ॥

ततः प्रकृतिमापन्ना देवा लोकास्तथर्षयः ।
तुष्टुवुर्वाग्भिरर्थ्याभिः स्थाणुमप्रतिमौजसम् ॥ १२३ ॥

तेऽनुज्ञाता भगवता जग्मुः सर्वे यथागतम् ।
कृतकामाः प्रसन्नेन प्रजापतिमुखाः सुराः ॥ १२४ ॥

यथैव भगवान्ब्रह्मा लोकधाता पितामहः ।
संयच्छ त्वं हयानस्य राधेयस्य महात्मनः ॥ १२५ ॥

त्वं हि कृष्णाच्च कर्णाच्च फल्गुनाच्च विशेषतः ।
विशिष्टो राजशार्दूल नास्ति तत्र विचारणा ॥ १२६ ॥

युद्धे ह्ययं रुद्रकल्पस्त्वं च ब्रह्मसमोऽनघ ।
तस्माच्छक्तौ युवां जेतुं मच्छत्रूंस्ताविवासुरान् ॥ १२७ ॥

यथा शल्याद्य कर्णोऽयं श्वेताश्वं कृष्णसारथिम् ।
प्रमथ्य हन्यात्कौन्तेयं तथा शीघ्रं विधीयताम् ॥ १२८ ॥

त्वयि कर्णश्च राज्यं च वयं चैव प्रतिष्ठिताः ॥ १२८ ॥

इमं चाप्यपरं भूय इतिहासं निबोध मे ।
पितुर्मम सकाशे यं ब्राह्मणः प्राह धर्मवित् ॥ १२९ ॥

श्रुत्वा चैतद्वचश्चित्रं हेतुकार्यार्थसंहितम् ।
कुरु शल्य विनिश्चित्य मा भूदत्र विचारणा ॥ १३० ॥

भार्गवाणां कुले जातो जमदग्निर्महातपाः ।
तस्य रामेति विख्यातः पुत्रस्तेजोगुणान्वितः ॥ १३१ ॥

स तीव्रं तप आस्थाय प्रसादयितवान्भवम् ।
अस्त्रहेतोः प्रसन्नात्मा नियतः संयतेन्द्रियः ॥ १३२ ॥

तस्य तुष्टो महादेवो भक्त्या च प्रशमेन च ।
हृद्गतं चास्य विज्ञाय दर्शयामास शङ्करः ॥ १३३ ॥

ईश्वर उवाच ॥

राम तुष्टोऽस्मि भद्रं ते विदितं मे तवेप्सितम् ।
कुरुष्व पूतमात्मानं सर्वमेतदवाप्स्यसि ॥ १३४ ॥

दास्यामि ते तदास्त्राणि यदा पूतो भविष्यसि ।
अपात्रमसमर्थं च दहन्त्यस्त्राणि भार्गव ॥ १३५ ॥

इत्युक्तो जामदग्न्यस्तु देवदेवेन शूलिना ।
प्रत्युवाच महात्मानं शिरसावनतः प्रभुम् ॥ १३६ ॥

यदा जानासि देवेश पात्रं मामस्त्रधारणे ।
तदा शुश्रूषतेऽस्त्राणि भवान्मे दातुमर्हति ॥ १३७ ॥

दुर्योधन उवाच ॥

ततः स तपसा चैव दमेन नियमेन च ।
पूजोपहारबलिभिर्होममन्त्रपुरस्कृतैः ॥ १३८ ॥

आराधयितवाञ्शर्वं बहून्वर्षगणांस्तदा ।
प्रसन्नश्च महादेवो भार्गवस्य महात्मनः ॥ १३९ ॥

अब्रवीत्तस्य बहुशो गुणान्देव्याः समीपतः ।
भक्तिमानेष सततं मयि रामो दृढव्रतः ॥ १४० ॥

एवं तस्य गुणान्प्रीतो बहुशोऽकथयत्प्रभुः ।
देवतानां पितॄणां च समक्षमरिसूदनः ॥ १४१ ॥

एतस्मिन्नेव काले तु दैत्या आसन्महाबलाः ।
तैस्तदा दर्पमोहान्धैरबाध्यन्त दिवौकसः ॥ १४२ ॥

ततः संभूय विबुधास्तान्हन्तुं कृतनिश्चयाः ।
चक्रुः शत्रुवधे यत्नं न शेकुर्जेतुमेव ते ॥ १४३ ॥

अभिगम्य ततो देवा महेश्वरमथाब्रुवन् ।
प्रसादयन्तस्तं भक्त्या जहि शत्रुगणानिति ॥ १४४ ॥

प्रतिज्ञाय ततो देवो देवतानां रिपुक्षयम् ।
रामं भार्गवमाहूय सोऽभ्यभाषत शङ्करः ॥ १४५ ॥

रिपून्भार्गव देवानां जहि सर्वान्समागतान् ।
लोकानां हितकामार्थं मत्प्रीत्यर्थं तथैव च ॥ १४६ ॥

राम उवाच ॥

अकृतास्त्रस्य देवेश का शक्तिर्मे महेश्वर ।
निहन्तुं दानवान्सर्वान्कृतास्त्रान्युद्धदुर्मदान् ॥ १४७ ॥

ईश्वर उवाच ॥

गच्छ त्वं मदनुध्यानान्निहनिष्यसि दानवान् ।
विजित्य च रिपून्सर्वान्गुणान्प्राप्स्यसि पुष्कलान् ॥ १४८ ॥

दुर्योधन उवाच ॥

एतच्छ्रुत्वा च वचनं प्रतिगृह्य च सर्वशः ।

रामः कृतस्वस्त्ययनः प्रययौ दानवान्प्रति ॥ १४९ ॥

अवधीद्देवशत्रूंस्तान्मददर्पबलान्वितान् ।
वज्राशनिसमस्पर्शैः प्रहारैरेव भार्गवः ॥ १५० ॥

स दानवैः क्षततनुर्जामदग्न्यो द्विजोत्तमः ।
संस्पृष्टः स्थाणुना सद्यो निर्व्रणः समजायत ॥ १५१ ॥

प्रीतश्च भगवान्देवः कर्मणा तेन तस्य वै ।
वरान्प्रादाद्ब्रह्मविदे भार्गवाय महात्मने ॥ १५२ ॥

उक्तश्च देवदेवेन प्रीतियुक्तेन शूलिना ।
निपातात्तव शस्त्राणां शरीरे याभवद्रुजा ॥ १५३ ॥

तया ते मानुषं कर्म व्यपोढं भृगुनन्दन ।
गृहाणास्त्राणि दिव्यानि मत्सकाशाद्यथेप्सितम् ॥ १५४ ॥

ततोऽस्त्राणि समस्तानि वरांश्च मनसेप्सितान् ।
लब्ध्वा बहुविधान्रामः प्रणम्य शिरसा शिवम् ॥ १५५ ॥

अनुज्ञां प्राप्य देवेशाज्जगाम स महातपाः ।
एवमेतत्पुरावृत्तं तदा कथितवानृषिः ॥ १५६ ॥

भार्गवोऽप्यददात्सर्वं धनुर्वेदं महात्मने ।
कर्णाय पुरुषव्याघ्र सुप्रीतेनान्तरात्मना ॥ १५७ ॥

वृजिनं हि भवेत्किञ्चिद्यदि कर्णस्य पार्थिव ।
नास्मै ह्यस्त्राणि दिव्यानि प्रादास्यद्भृगुनन्दनः ॥ १५८ ॥

नापि सूतकुले जातं कर्णं मन्ये कथञ्चन ।
देवपुत्रमहं मन्ये क्षत्रियाणां कुलोद्भवम् ॥ १५९ ॥

सकुण्डलं सकवचं दीर्घबाहुं महारथम् ।
कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति ॥ १६० ॥

पश्य ह्यस्य भुजौ पीनौ नागराजकरोपमौ ।
वक्षः पश्य विशालं च सर्वशत्रुनिबर्हणम् ॥ १६१ ॥

---

# अध्याय ०२५

दुर्योधन उवाच ॥

एवं स भगवान्देवः सर्वलोकपितामहः ।
सारथ्यमकरोत्तत्र यत्र रुद्रोऽभवद्रथी ॥ ००१ ॥

रथिनाभ्यधिको वीरः कर्तव्यो रथसारथिः ।
तस्मात्त्वं पुरुषव्याघ्र नियच्छ तुरगान्युधि ॥ ००२ ॥

सञ्जय उवाच ॥

ततः शल्यः परिष्वज्य सुतं ते वाक्यमब्रवीत् ।
दुर्योधनममित्रघ्नः प्रीतो मद्राधिपस्तदा ॥ ००३ ॥

एवं चेन्मन्यसे राजन्गान्धारे प्रियदर्शन ।
तस्मात्ते यत्प्रियं किञ्चित्तत्सर्वं करवाण्यहम् ॥ ००४ ॥

यत्रास्मि भरतश्रेष्ठ योग्यः कर्मणि कर्हिचित् ।
तत्र सर्वात्मना युक्तो वक्ष्ये कार्यधुरं तव ॥ ००५ ॥

यत्तु कर्णमहं ब्रूयां हितकामः प्रियाप्रियम् ।
मम तत्क्षमतां सर्वं भवान्कर्णश्च सर्वशः ॥ ००६ ॥

कर्ण उवाच ॥

ईशानस्य यथा ब्रह्मा यथा पार्थस्य केशवः ।
तथा नित्यं हिते युक्तो मद्रराज भजस्व नः ॥ ००७ ॥

शल्य उवाच ॥

आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् ॥ ००८ ॥

यत्तु विद्वन्प्रवक्ष्यामि प्रत्ययार्थमहं तव ।
आत्मनः स्तवसंयुक्तं तन्निबोध यथातथम् ॥ ००९ ॥

अहं शक्रस्य सारथ्ये योग्यो मातलिवत्प्रभो ।
अप्रमादप्रयोगाच्च ज्ञानविद्याचिकित्सितैः ॥ ०१० ॥

ततः पार्थेन सङ्ग्रामे युध्यमानस्य तेऽनघ ।
वाहयिष्यामि तुरगान्विज्वरो भव सूतज ॥ ०११ ॥

---

# अध्याय ०२६

दुर्योधन उवाच ॥

अयं ते कर्ण सारथ्यं मद्रराजः करिष्यति ।
कृष्णादभ्यधिको यन्ता देवेन्द्रस्येव मातलिः ॥ ००१ ॥

यथा हरिहयैर्युक्तं सङ्गृह्णाति स मातलिः ।
शल्यस्तव तथाद्यायं संयन्ता रथवाजिनाम्  ॥ ००२  ॥

योधे त्वयि रथस्थे च मद्रराजे च सारथौ ।
रथश्रेष्ठो ध्रुवं संख्ये पार्थो नाभिभविष्यति  ॥ ००३  ॥

सञ्जय उवाच  ॥

ततो दुर्योधनो भूयो मद्रराजं तरस्विनम् ।
उवाच राजन्सङ्ग्रामे संयच्छन्तं हयोत्तमान्  ॥ ००४  ॥

त्वयाभिगुप्तो राधेयो विजेष्यति धनञ्जयम् ।
इत्युक्तो रथमास्थाय तथेति प्राह भारत  ॥ ००५  ॥

शल्येऽभ्युपगते कर्णः सारथिं सुमनोऽब्रवीत् ।
स्वं सूत स्यन्दनं मह्यं कल्पयेत्यसकृत्त्वरन्  ॥ ००६  ॥

ततो जैत्रं रथवरं गन्धर्वनगरोपमम् ।
विधिवत्कल्पितं भर्त्रे जयेत्युक्त्वा न्यवेदयत्  ॥ ००७  ॥

तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि ।
संपादितं ब्रह्मविदा पूर्वमेव पुरोधसा  ॥ ००८  ॥

कृत्वा प्रदक्षिणं यत्नादुपस्थाय च भास्करम् ।
समीपस्थं मद्रराजं समारोपयदग्रतः  ॥ ००९  ॥

ततः कर्णस्य दुर्धर्षं स्यन्दनप्रवरं महत् ।
आरुरोह महातेजाः शल्यः सिंह इवाचलम्  ॥ ०१०  ॥

ततः शल्यास्थितं राजन्कर्णः स्वरथमुत्तमम् ।

अध्यतिष्ठद्यथाम्भोदं विद्युत्वन्तं दिवाकरः ॥ ०११ ॥

तावेकरथमारूढावादित्याग्निसमत्विषौ ।
व्यभ्राजेतां यथा मेघं सूर्याग्नी सहितौ दिवि ॥ ०१२ ॥

संस्तूयमानौ तौ वीरौ तदास्तां द्युतिमत्तरौ ।
ऋत्विक्सदस्यैरिन्द्राग्नी हूयमानाविवाध्वरे ॥ ०१३ ॥

स शल्यसङ्गृहीताश्वे रथे कर्णः स्थितोऽभवत् ।
धनुर्विस्फारयन्घोरं परिवेषीव भास्करः ॥ ०१४ ॥

आस्थितः स रथश्रेष्ठं कर्णः शरगभस्तिमान् ।
प्रबभौ पुरुषव्याघ्रो मन्दरस्थ इवांशुमान् ॥ ०१५ ॥

तं रथस्थं महावीरं यान्तं चामिततेजसम् ।
दुर्योधनः स्म राधेयमिदं वचनमब्रवीत् ॥ ०१६ ॥

अकृतं द्रोणभीष्माभ्यां दुष्करं कर्म संयुगे ।
कुरुष्वाधिरथे वीर मिषतां सर्वधन्विनाम् ॥ ०१७ ॥

मनोगतं मम ह्यासीद्भीष्मद्रोणौ महारथौ ।
अर्जुनं भीमसेनं च निहन्ताराविति ध्रुवम् ॥ ०१८ ॥

ताभ्यां यदकृतं वीर वीरकर्म महामृधे ।
तत्कर्म कुरु राधेय वज्रपाणिरिवापरः ॥ ०१९ ॥

गृहाण धर्मराजं वा जहि वा त्वं धनञ्जयम् ।
भीमसेनं च राधेय माद्रीपुत्रौ यमावपि ॥ ०२० ॥

जयश्च तेऽस्तु भद्रं च प्रयाहि पुरुषर्षभ ।
पाण्डुपुत्रस्य सैन्यानि कुरु सर्वाणि भस्मसात् ॥ ०२१ ॥

ततस्तूर्यसहस्राणि भेरीणामयुतानि च ।
वाद्यमानान्यरोचन्त मेघशब्दा यथा दिवि ॥ ०२२ ॥

प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तमः ।
अभ्यभाषत राधेयः शल्यं युद्धविशारदम् ॥ ०२३ ॥

चोदयाश्वान्महाबाहो यावद्धन्मि धनञ्जयम् ।
भीमसेनं यमौ चोभौ राजानं च युधिष्ठिरम् ॥ ०२४ ॥

अद्य पश्यतु मे शल्य बाहुवीर्यं धनञ्जयः ।
अस्यतः कङ्कपत्राणां सहस्राणि शतानि च ॥ ०२५ ॥

अद्य क्षेप्स्याम्यहं शल्य शरान्परमतेजनान् ।
पाण्डवानां विनाशाय दुर्योधनजयाय च ॥ ०२६ ॥

शल्य उवाच ॥

सूतपुत्र कथं नु त्वं पाण्डवानवमन्यसे ।
सर्वास्त्रज्ञान्महेष्वासान्सर्वानेव महारथान् ॥ ०२७ ॥

अनिवर्तिनो महाभागानजेयान्सत्यविक्रमान् ।
अपि सञ्जनयेयुर्ये भयं साक्षाच्छतक्रतोः ॥ ०२८ ॥

यदा श्रोष्यसि निर्घोषं विस्फूर्जितमिवाशनेः ।
राधेय गाण्डिवस्याजौ तदा नैवं वदिष्यसि ॥ ०२९ ॥

सञ्जय उवाच ॥

अनादृत्य तु तद्वाक्यं मद्रराजेन भाषितम् ।
द्रक्ष्यस्यद्येत्यवोचद्वै शल्यं कर्णो नरेश्वर ॥ ०३० ॥

दृष्ट्वा कर्णं महेष्वासं युयुत्सुं समवस्थितम् ।
चुक्रुशुः कुरवः सर्वे हृष्टरूपाः परंतप ॥ ०३१ ॥

ततो दुन्दुभिघोषेण भेरीणां निनदेन च ।
बाणशब्दैश्च विविधैर्गर्जितैश्च तरस्विनाम् ॥ ०३२ ॥

निर्ययुस्तावका युद्धे मृत्युं कृत्वा निवर्तनम् ॥ ०३२ ॥

प्रयाते तु ततः कर्णे योधेषु मुदितेषु च ।
चचाल पृथिवी राजन्ररास च सुविस्वरम् ॥ ०३३ ॥

निश्चरन्तो व्यदृश्यन्त सूर्यात्सप्त महाग्रहाः ।
उल्कापातश्च सञ्जज्ञे दिशां दाहस्तथैव च ॥ ०३४ ॥

तथाशन्यश्च संपेतुर्ववुर्वाताश्च दारुणाः ॥ ०३४ ॥

मृगपक्षिगणाश्चैव बहुशः पृतनां तव ।
अपसव्यं तदा चक्रुर्वेदयन्तो महद्भयम् ॥ ०३५ ॥

प्रस्थितस्य च कर्णस्य निपेतुस्तुरगा भुवि ।
अस्थिवर्षं च पतितमन्तरिक्षाद्भयानकम् ॥ ०३६ ॥

जज्वलुश्चैव शस्त्राणि ध्वजाश्चैव चकम्पिरे ।
अश्रूणि च व्यमुञ्चन्त वाहनानि विशां पते ॥ ०३७ ॥

एते चान्ये च बहव उत्पातास्तत्र मारिष ।
समुत्पेतुर्विनाशाय कौरवाणां सुदारुणाः ॥ ०३८ ॥

न च तान्गणयामासुः सर्वे ते दैवमोहिताः ।
प्रस्थितं सूतपुत्रं च जयेत्यूचुर्नरा भुवि ॥ ०३९ ॥

निर्जितान्पाण्डवांश्चैव मेनिरे तव कौरवाः ॥ ०३९ ॥

ततो रथस्थः परवीरहन्ता ; भीष्मद्रोणावात्तवीर्यौ निरीक्ष्य ।
समज्वलद्भारत पावकाभो ; वैकर्तनोऽसौ रथकुञ्जरो वृषः ॥ ०४० ॥

स शल्यमाभाष्य जगाद वाक्यं ; पार्थस्य कर्माप्रतिमं च दृष्ट्वा ।
मानेन दर्पेण च दह्यमानः ; क्रोधेन दीप्यन्निव निःश्वसित्वा ॥ ०४१ ॥

नाहं महेन्द्रादपि वज्रपाणेः ; क्रुद्धाद्बिभेम्यात्तधनू रथस्थः ।
दृष्ट्वा तु भीष्मप्रमुखाञ्शयाना ;न्न त्वेव मां स्थिरता सञ्जहाति ॥ ०४२ ॥

महेन्द्रविष्णुप्रतिमावनिन्दितौ ; रथाश्वनागप्रवरप्रमाथिनौ ।
अवध्यकल्पौ निहतौ यदा परै ;स्ततो ममाद्यापि रणेऽस्ति साध्वसम् ॥ ०४३ ॥

समीक्ष्य संख्येऽतिबलान्नराधिपै ;र्नराश्वमातङ्गरथाञ्शरैर्हतान् ।
कथं न सर्वानहितान्रणेऽवधी ;न्महास्त्रविद्ब्राह्मणपुङ्गवो गुरुः ॥ ०४४ ॥

स संस्मरन्द्रोणहवं महाहवे ; ब्रवीमि सत्यं कुरवो निबोधत ।
न वो मदन्यः प्रसहेद्रणेऽर्जुनं ; क्रमागतं मृत्युमिवोग्ररूपिणम् ॥ ०४५ ॥

शिक्षा प्रसादश्च बलं धृतिश्च ; द्रोणे महास्त्राणि च संनतिश्च ।
स चेदगान्मृत्युवशं महात्मा ; सर्वानन्यानातुरानद्य मन्ये ॥ ०४६ ॥

नेह ध्रुवं किञ्चिदपि प्रचिन्त्यं ; विदुर्लोके कर्मणोऽनित्ययोगात् ।
सूर्योदये को हि विमुक्तसंशयो ; गर्वं कुर्वीताद्य गुरौ निपातिते ॥ ०४७ ॥

न नूनमस्त्राणि बलं पराक्रमः ; क्रिया सुनीतं परमायुधानि वा ।
अलं मनुष्यस्य सुखाय वर्तितुं ; तथा हि युद्धे निहतः परैर्गुरुः ॥ ०४८ ॥

हुताशनादित्यसमानतेजसं ; पराक्रमे विष्णुपुरंदरोपमम् ।
नये बृहस्पत्युशनःसमं सदा ; न चैनमस्त्रं तदपात्सुदुःसहम्  ॥ ०४९  ॥

संप्रक्रुष्टे रुदितस्त्रीकुमारे ; पराभूते पौरुषे धार्तराष्ट्रे ।
मया कृत्यमिति जानामि शल्य ; प्रयाहि तस्माद्द्विषतामनीकम्  ॥ ०५०  ॥

यत्र राजा पाण्डवः सत्यसंधो ; व्यवस्थितो भीमसेनार्जुनौ च ।
वासुदेवः सृञ्जयाः सात्यकिश्च ; यमौ च कस्तौ विषहेन्मदन्यः  ॥ ०५१  ॥

तस्मात्क्षिप्रं मद्रपते प्रयाहि ; रणे पाञ्चालान्पाण्डवान्सृञ्जयांश्च ।
तान्वा हनिष्यामि समेत्य संख्ये ; यास्यामि वा द्रोणमुखाय मन्ये  ॥ ०५२  ॥

न त्वेवाहं न गमिष्यामि मध्यं ; तेषां शूराणामिति मा शल्य विद्धि ।
मित्रद्रोहो मर्षणीयो न मेऽयं ; त्यक्त्वा प्राणाननुयास्यामि द्रोणम्  ॥ ०५३  ॥

प्राज्ञस्य मूढस्य च जीवितान्ते ; प्राणप्रमोक्षोऽन्तकवक्त्रगस्य ।
अतो विद्वन्नभियास्यामि पार्थं ; दिष्टं न शक्यं व्यतिवर्तितुं वै  ॥ ०५४  ॥

कल्याणवृत्तः सततं हि राज ;न्वैचित्रवीर्यस्य सुतो ममासीत् ।
तस्यार्थसिद्ध्यर्थमहं त्यजामि ; प्रियान्भोगान्दुस्त्यजं जीवितं च  ॥ ०५५  ॥

वैयाघ्रचर्माणमकूजनाक्षं ; हैमत्रिकोशं रजतत्रिवेणुम् ।
रथप्रबर्हं तुरगप्रबर्है ;र्युक्तं प्रादान्मह्यमिदं हि रामः  ॥ ०५६  ॥

धनूंषि चित्राणि निरीक्ष्य शल्य ; ध्वजं गदां सायकांश्चोग्ररूपान् ।
असिं च दीप्तं परमायुधं च ; शङ्खं च शुभ्रं स्वनवन्तमुग्रम्  ॥ ०५७  ॥

पताकिनं वज्रनिपातनिस्वनं ; सिताश्वयुक्तं शुभतूणशोभितम् ।
इमं समास्थाय रथं रथर्षभं ; रणे हनिष्याम्यहमर्जुनं बलात्  ॥ ०५८  ॥

तं चेन्मृत्युः सर्वहरोऽभिरक्षते ; सदाप्रमत्तः समरे पाण्डुपुत्रम् ।

तं वा हनिष्यामि समेत्य युद्धे ; यास्यामि वा भीष्ममुखो यमाय ॥ ०५९ ॥

यमवरुणकुबेरवासवा वा ; यदि युगपत्सगणा महाहवे ।
जुगुपिषव इहैत्य पाण्डवं ; किमु बहुना सह तैर्जयामि तम् ॥ ०६० ॥

इति रणरभसस्य कत्थत ;स्तदुपनिशम्य वचः स मद्रराट् ।
अवहसदवमन्य वीर्यवा ;न्प्रतिषिषिधे च जगाद चोत्तरम् ॥ ०६१ ॥

विरम विरम कर्ण कत्थना ;दतिरभसोऽस्यति चाप्ययुक्तवाक् ।
क्व च हि नरवरो धनञ्जयः ; क्व पुनरिह त्वमुपारमाबुध ॥ ०६२ ॥

यदुसदनमुपेन्द्रपालितं ; त्रिदिवमिवामरराजरक्षितम् ।
प्रसभमिह विलोक्य को हरे ;त्पुरुषवरावरजामृतेऽर्जुनात् ॥ ०६३ ॥

त्रिभुवनसृजमीश्वरेश्वरं ; क इह पुमान्भवमाह्वयेद्युधि ।
मृगवधकलहे ऋतेऽर्जुना ;त्सुरपतिवीर्यसमप्रभावतः ॥ ०६४ ॥

असुरसुरमहोरगान्नरा ;न्गरुडपिशाचसयक्षराक्षसान् ।
इषुभिरजयदग्निगौरवा ;त्स्वभिलषितं च हविर्ददौ जयः ॥ ०६५ ॥

स्मरसि ननु यदा परैर्हृतः ; स च धृतराष्ट्रसुतो विमोक्षितः ।
दिनकरज नरोत्तमैर्यदा ; मरुषु बहून्विनिहत्य तानरीन् ॥ ०६६ ॥

प्रथममपि पलायिते त्वयि ; प्रियकलहा धृतराष्ट्रसूनवः ।
स्मरसि ननु यदा प्रमोचिताः ; खचरगणानवजित्य पाण्डवैः ॥ ०६७ ॥

समुदितबलवाहनाः पुनः ; पुरुषवरेण जिताः स्थ गोग्रहे ।
सगुरुगुरुसुताः सभीष्मकाः ; किमु न जितः स तदा त्वयार्जुनः ॥ ०६८ ॥

इदमपरमुपस्थितं पुन ;स्तव निधनाय सुयुद्धमद्य वै ।
यदि न रिपुभयात्पलायसे ; समरगतोऽद्य हतोऽसि सूतज ॥ ०६९ ॥

सञ्जय उवाच ॥

इति बहुपरुषं प्रभाषति ; प्रमनसि मद्रपतौ रिपुस्तवम् ।
भृशमतिरुषितः परं वृषः ; कुरुपृतनापतिराह मद्रपम् ॥ ०७० ॥

भवतु भवतु किं विकत्थसे ; ननु मम तस्य च युद्धमुद्यतम् ।
यदि स जयति मां महाहवे ; तत इदमस्तु सुकत्थितं तव ॥ ०७१ ॥

एवमस्त्विति मद्रेश उक्त्वा नोत्तरमुक्तवान् ।
याहि मद्रेश चाप्येनं कर्णः प्राह युयुत्सया ॥ ०७२ ॥

स रथः प्रययौ शत्रूञ्श्वेताश्वः शल्यसारथिः ।
निघ्नन्नमित्रान्समरे तमो घ्नन्सविता यथा ॥ ०७३ ॥

ततः प्रायात्प्रीतिमान्वै रथेन ; वैयाघ्रेण श्वेतयुजाथ कर्णः ।
स चालोक्य ध्वजिनीं पाण्डवानां ; धनञ्जयं त्वरया पर्यपृच्छत् ॥ ०७४ ॥

---

# मद्रककुत्सनम्

# अध्याय ०२७

सञ्जय उवाच ॥

प्रयानेव तदा कर्णो हर्षयन्वाहिनीं तव ।
एकैकं समरे दृष्ट्वा पाण्डवं पर्यपृच्छत ॥ ००१ ॥

यो ममाद्य महात्मानं दर्शयेच्छ्वेतवाहनम् ।
तस्मै दद्यामभिप्रेतं वरं यं मनसेच्छति ॥ ००२ ॥

स चेत्तदभिमन्येत तस्मै दद्यामहं पुनः ।
शकटं रत्नसंपूर्णं यो मे ब्रूयाद्धनञ्जयम् ॥ ००३ ॥

स चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै पुनर्दद्यां सौवर्णं हस्तिषङ्गवम् ॥ ००४ ॥

तथा तस्मै पुनर्दद्यां स्त्रीणां शतमलङ्कृतम् ।
श्यामानां निष्ककण्ठीनां गीतवाद्यविपश्चिताम् ॥ ००५ ॥

स चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै वरं दद्यां श्वेतान्पञ्चशतान्हयान् ॥ ००६ ॥

हेमभाण्डपरिच्छन्नान्सुमृष्टमणिकुण्डलान् ।
सुदान्तानपि चैवाहं दद्यामष्टशतान्परान् ॥ ००७ ॥

रथं च शुभ्रं सौवर्णं दद्यां तस्मै स्वलङ्कृतम् ।
युक्तं परमकाम्बोजैर्यो मे ब्रूयाद्धनञ्जयम् ॥ ००८ ॥

अन्यं तस्मै वरं दद्यां कुञ्जराणां शतानि षट् ।
काञ्चनैर्विविधैर्भाण्डैराच्छन्नान्हेममालिनः ॥ ००९ ॥

उत्पन्नानपरान्तेषु विनीतान्हस्तिशिक्षकैः ॥ ००९ ॥

स चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै वरं दद्यां यमसौ कामयेत्स्वयम् ॥ ०१० ॥

पुत्रदारान्विहारांश्च यदन्यद्वित्तमस्ति मे ।

तच्च तस्मै पुनर्दद्यां यद्यत्स मनसेच्छति ॥ ०११ ॥

हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्वशः ।
तस्मै दद्यामहं यो मे प्रब्रूयात्केशवार्जुनौ ॥ ०१२ ॥

एता वाचः सुबहुशः कर्ण उच्चारयन्युधि ।
दध्मौ सागरसंभूतं सुस्वनं शङ्खमुत्तमम् ॥ ०१३ ॥

ता वाचः सूतपुत्रस्य तथा युक्ता निशम्य तु ।
दुर्योधनो महाराज प्रहृष्टः सानुगोऽभवत् ॥ ०१४ ॥

ततो दुन्दुभिनिर्घोषो मृदङ्गानां च सर्वशः ।
सिंहनादः सवादित्रः कुञ्जराणां च निस्वनः ॥ ०१५ ॥

प्रादुरासीत्तदा राजंस्त्वत्सैन्ये भरतर्षभ ।
योधानां संप्रहृष्टानां तथा समभवत्स्वनः ॥ ०१६ ॥

तथा प्रहृष्टे सैन्ये तु प्लवमानं महारथम् ।
विकत्थमानं समरे राधेयमरिकर्शनम् ॥ ०१७ ॥

मद्रराजः प्रहस्येदं वचनं प्रत्यभाषत ॥ ०१७ ॥

मा सूतपुत्र मानेन सौवर्णं हस्तिषङ्गवम् ।
प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनञ्जयम् ॥ ०१८ ॥

बाल्यादिव त्वं त्यजसि वसु वैश्रवणो यथा ।
अयत्नेनैव राधेय द्रष्टास्यद्य धनञ्जयम् ॥ ०१९ ॥

परासृजसि मिथ्या किं किं च त्वं बहु मूढवत् ।
अपात्रदाने ये दोषास्तान्मोहान्नावबुध्यसे ॥ ०२० ॥

यत्प्रवेदयसे वित्तं बहुत्वेन खलु त्वया ।
शक्यं बहुविधैर्यज्ञैर्यष्टुं सूत यजस्व तैः ॥ ०२१ ॥

यच्च प्रार्थयसे हन्तुं कृष्णौ मोहान्मृषैव तत् ।
न हि शुश्रुम संमर्दे क्रोष्ट्रा सिंहौ निपातितौ ॥ ०२२ ॥

अप्रार्थितं प्रार्थयसे सुहृदो न हि सन्ति ते ।
ये त्वां न वारयन्त्याशु प्रपतन्तं हुताशने ॥ ०२३ ॥

कालकार्यं न जानीषे कालपक्वोऽस्यसंशयम् ।
बह्वबद्धमकर्णीयं को हि ब्रूयाज्जिजीविषुः ॥ ०२४ ॥

समुद्रतरणं दोर्भ्यां कण्ठे बद्ध्वा यथा शिलाम् ।
गिर्यग्राद्वा निपतनं तादृक्तव चिकीर्षितम् ॥ ०२५ ॥

सहितः सर्वयोधैस्त्वं व्यूढानीकैः सुरक्षितः ।
धनञ्जयेन युध्यस्व श्रेयश्चेत्प्राप्तुमिच्छसि ॥ ०२६ ॥

हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वा न हिंसया ।
श्रद्धत्स्वैतन्मया प्रोक्तं यदि तेऽस्ति जिजीविषा ॥ ०२७ ॥

कर्ण उवाच ॥

स्ववीर्येऽहं पराश्वस्य प्रार्थयाम्यर्जुनं रणे ।
त्वं तु मित्रमुखः शत्रुर्मां भीषयितुमिच्छसि ॥ ०२८ ॥

न मामस्मादभिप्रायात्कश्चिदद्य निवर्तयेत् ।
अपीन्द्रो वज्रमुद्यम्य किं नु मर्त्यः करिष्यति ॥ ०२९ ॥

सञ्जय उवाच ॥

इति कर्णस्य वाक्यान्ते शल्यः प्राहोत्तरं वचः ।
चुकोपयिषुरत्यर्थं कर्णं मद्रेश्वरः पुनः ॥ ०३० ॥

यदा वै त्वां फल्गुनवेगनुन्ना ; ज्याचोदिता हस्तवता विसृष्टाः ।
अन्वेतारः कङ्कपत्राः शिताग्रा ;स्तदा तप्स्यस्यर्जुनस्याभियोगात् ॥ ०३१ ॥

यदा दिव्यं धनुरादाय पार्थः ; प्रभासयन्पृतनां सव्यसाची ।
त्वामर्दयेत निशितैः पृषत्कै ;स्तदा पश्चात्तप्स्यसे सूतपुत्र ॥ ०३२ ॥

बालश्चन्द्रं मातुरङ्के शयानो ; यथा कश्चित्प्रार्थयतेऽपहर्तुम् ।
तद्वन्मोहाद्यतमानो रथस्थ ;स्त्वं प्रार्थयस्यर्जुनमद्य जेतुम् ॥ ०३३ ॥

त्रिशूलमाश्लिष्य सुतीक्ष्णधारं ; सर्वाणि गात्राणि निघर्षसि त्वम् ।
सुतीक्ष्णधारोपमकर्मणा त्वं ; युयुत्ससे योऽर्जुनेनाद्य कर्ण ॥ ०३४ ॥

सिद्धं सिंहं केसरिणं बृहन्तं ; बालो मूढः क्षुद्रमृगस्तरस्वी ।
समाह्वयेत्तद्वदेतत्तवाद्य ; समाह्वानं सूतपुत्रार्जुनस्य ॥ ०३५ ॥

मा सूतपुत्राह्वय राजपुत्रं ; महावीर्यं केसरिणं यथैव ।
वने सृगालः पिशितस्य तृप्तो ; मा पार्थमासाद्य विनङ्क्ष्यसि त्वम् ॥ ०३६ ॥

ईषादन्तं महानागं प्रभिन्नकरटामुखम् ।
शशकाह्वयसे युद्धे कर्ण पार्थं धनञ्जयम् ॥ ०३७ ॥

बिलस्थं कृष्णसर्पं त्वं बाल्यात्काष्ठेन विध्यसि ।
महाविषं पूर्णकोशं यत्पार्थं योद्धुमिच्छसि ॥ ०३८ ॥

सिंहं केसरिणं क्रुद्धमतिक्रम्याभिनर्दसि ।
सृगाल इव मूढत्वान्नृसिंहं कर्ण पाण्डवम् ॥ ०३९ ॥

सुपर्णं पतगश्रेष्ठं वैनतेयं तरस्विनम् ।
लट्वेवाह्वयसे पाते कर्ण पार्थं धनञ्जयम्  ॥ ०४०  ॥

सर्वाम्भोनिलयं भीममूर्मिमन्तं झषायुतम् ।
चन्द्रोदये विवर्तन्तमप्लवः संतितीर्षसि  ॥ ०४१  ॥

ऋषभं दुन्दुभिग्रीवं तीक्ष्णशृङ्गं प्रहारिणम् ।
वत्स आह्वयसे युद्धे कर्ण पार्थं धनञ्जयम्  ॥ ०४२  ॥

महाघोषं महामेघं दर्दुरः प्रतिनर्दसि ।
कामतोयप्रदं लोके नरपर्जन्यमर्जुनम्  ॥ ०४३  ॥

यथा च स्वगृहस्थः श्वा व्याघ्रं वनगतं भषेत् ।
तथा त्वं भषसे कर्ण नरव्याघ्रं धनञ्जयम्  ॥ ०४४  ॥

सृगालोऽपि वने कर्ण शशैः परिवृतो वसन् ।
मन्यते सिंहमात्मानं यावत्सिंहं न पश्यति  ॥ ०४५  ॥

तथा त्वमपि राधेय सिंहमात्मानमिच्छसि ।
अपश्यञ्शत्रुदमनं नरव्याघ्रं धनञ्जयम्  ॥ ०४६  ॥

व्याघ्रं त्वं मन्यसेऽऽत्मानं यावत्कृष्णौ न पश्यसि ।
समास्थितावेकरथे सूर्याचन्द्रमसाविव  ॥ ०४७  ॥

यावद्गाण्डीवनिर्घोषं न शृणोषि महाहवे ।
तावदेव त्वया कर्ण शक्यं वक्तुं यथेच्छसि  ॥ ०४८  ॥

रथशब्दधनुःशब्दैर्नादयन्तं दिशो दश ।
नर्दन्तमिव शार्दूलं दृष्ट्वा क्रोष्टा भविष्यसि  ॥ ०४९  ॥

नित्यमेव सृगालस्त्वं नित्यं सिंहो धनञ्जयः ।

वीरप्रद्वेषणान्मूढ नित्यं क्रोष्टेव लक्ष्यसे ॥ ०५० ॥

यथाखुः स्याद्बिडालश्च श्वा व्याघ्रश्च बलाबले ।
यथा सृगालः सिंहश्च यथा च शशकुञ्जरौ ॥ ०५१ ॥

यथानृतं च सत्यं च यथा चापि विषामृते ।
तथा त्वमपि पार्थश्च प्रख्यातावात्मकर्मभिः ॥ ०५२ ॥

सञ्जय उवाच ॥

अधिक्षिप्तस्तु राधेयः शल्येनामिततेजसा ।
शल्यमाह सुसङ्क्रुद्धो वाक्शल्यमवधारयन् ॥ ०५३ ॥

गुणान्गुणवतः शल्य गुणवान्वेत्ति नागुणः ।
त्वं तु नित्यं गुणैर्हीनः किं ज्ञास्यस्यगुणो गुणान् ॥ ०५४ ॥

अर्जुनस्य महास्त्राणि क्रोधं वीर्यं धनुः शरान् ।
अहं शल्याभिजानामि न त्वं जानासि तत्तथा ॥ ०५५ ॥

एवमेवात्मनो वीर्यमहं वीर्यं च पाण्डवे ।
जानन्नेवाह्वये युद्धे शल्य नाग्निं पतङ्गवत् ॥ ०५६ ॥

अस्ति चायमिषुः शल्य सुपुङ्खो रक्तभोजनः ।
एकतूणीशयः पत्री सुधौतः समलङ्कृतः ॥ ०५७ ॥

शेते चन्दनपूर्णेन पूजितो बहुलाः समाः ।
आहेयो विषवानुग्रो नराश्वद्विपसंघहा ॥ ०५८ ॥

एकवीरो महारौद्रस्तनुत्रास्थिविदारणः ।
निर्भिन्द्यां येन रुष्टोऽहमपि मेरुं महागिरिम् ॥ ०५९ ॥

तमहं जातु नास्येयमन्यस्मिन्फल्गुनादृते ।
कृष्णाद्वा देवकीपुत्रात्सत्यं चात्र शृणुष्व मे ॥ ०६० ॥

तेनाहमिषुणा शल्य वासुदेवधनञ्जयौ ।
योत्स्ये परमसङ्क्रुद्धस्तत्कर्म सदृशं मम ॥ ०६१ ॥

सर्वेषां वासुदेवानां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः ॥ ०६२ ॥

उभयं तत्समासाद्य कोऽतिवर्तितुमर्हति ॥ ०६२ ॥

तावेतौ पुरुषव्याघ्रौ समेतौ स्यन्दने स्थितौ ।
मामेकमभिसंयातौ सुजातं शल्य पश्य मे ॥ ०६३ ॥

पितृष्वसामातुलजौ भ्रातरावपराजितौ ।
मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया ॥ ०६४ ॥

अर्जुने गाण्डिवं कृष्णे चक्रं तार्क्ष्यकपिध्वजौ ।
भीरूणां त्रासजननौ शल्य हर्षकरौ मम ॥ ०६५ ॥

त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः ।
भयावतीर्णः संत्रासादबद्धं बहु भाषसे ॥ ०६६ ॥

संस्तौषि त्वं तु केनापि हेतुना तौ कुदेशज ।
तौ हत्वा समरे हन्ता त्वामद्धा सहबान्धवम् ॥ ०६७ ॥

पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन ।
सुहृद्भूत्वा रिपुः किं मां कृष्णाभ्यां भीषयन्नसि ॥ ०६८ ॥

तौ वा ममाद्य हन्तारौ हन्तास्मि समरे स्थितौ ।
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम् ॥ ०६९ ॥

वासुदेवसहस्त्रं वा फल्गुनानां शतानि च ।
अहमेको हनिष्यामि जोषमास्स्व कुदेशज ॥ ०७० ॥

स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः ।
या गाथाः संप्रगायन्ति कुर्वन्तोऽध्ययनं यथा ॥ ०७१ ॥

ता गाथाः शृणु मे शल्य मद्रकेषु दुरात्मसु ॥ ०७१ ॥

ब्राह्मणैः कथिताः पूर्वं यथावद्राजसंनिधौ ।
श्रुत्वा चैकमना मूढ क्षम वा ब्रूहि वोत्तरम् ॥ ०७२ ॥

मित्रध्रुङ्मद्रको नित्यं यो नो द्वेष्टि स मद्रकः ।
मद्रके सङ्गतं नास्ति क्षुद्रवाक्ये नराधमे ॥ ०७३ ॥

दुरात्मा मद्रको नित्यं नित्यं चानृतिकोऽनृजुः ।
यावदन्तं हि दौरात्म्यं मद्रकेष्विति नः श्रुतम् ॥ ०७४ ॥

पिता माता च पुत्रश्च श्वश्रूश्वशुरमातुलाः ।
जामाता दुहिता भ्राता नप्ता ते ते च बान्धवाः ॥ ०७५ ॥

वयस्याभ्यागताश्चान्ये दासीदासं च सङ्गतम् ।
पुंभिर्विमिश्रा नार्यश्च ज्ञाताज्ञाताः स्वयेच्छया ॥ ०७६ ॥

येषां गृहेषु शिष्टानां सक्तुमन्थाशिनां सदा ।
पीत्वा सीधुं सगोमांसं नर्दन्ति च हसन्ति च ॥ ०७७ ॥

यानि चैवाप्यबद्धानि प्रवर्तन्ते च कामतः ।
कामप्रलापिनोऽन्योन्यं तेषु धर्मः कथं भवेत् ॥ ०७८ ॥

मद्रकेषु विलुप्तेषु प्रख्याताशुभकर्मसु ।

नापि वैरं न सौहार्दं मद्रकेषु समाचरेत्  ॥ ०७९  ॥

मद्रके सङ्गतं नास्ति मद्रको हि सचापलः ।
मद्रकेषु च दुःस्पर्शं शौचं गान्धारकेषु च  ॥ ०८०  ॥

राजयाजकयाज्येन नष्टं दत्तं हविर्भवेत् ।
शूद्रसंस्कारको विप्रो यथा याति पराभवम् ।
तथा ब्रह्मद्विषो नित्यं गच्छन्तीह पराभवम्  ॥ ०८२  ॥

मद्रके सङ्गतं नास्ति हतं वृश्चिकतो विषम् ।
आथर्वणेन मन्त्रेण सर्वा शान्तिः कृता भवेत्  ॥ ०८३  ॥

इति वृश्चिकदष्टस्य नानाविषहतस्य च ।
कुर्वन्ति भेषजं प्राज्ञाः सत्यं तच्चापि दृश्यते  ॥ ०८४  ॥

एवं विद्वञ्जोषमास्स्व श्रृणु चात्रोत्तरं वचः  ॥ ०८४  ॥

वासांस्युत्सृज्य नृत्यन्ति स्त्रियो या मद्यमोहिताः ।
मिथुनेऽसंयताश्चापि यथाकामचराश्च ताः  ॥ ०८५  ॥

तासां पुत्रः कथं धर्मं मद्रको वक्तुमर्हति  ॥ ०८५  ॥

यास्तिष्ठन्त्यः प्रमेहन्ति यथैवोष्ट्रीदशेरके ।
तासां विभ्रष्टलज्जानां निर्लज्जानां ततस्ततः  ॥ ०८६  ॥

त्वं पुत्रस्तादृशीनां हि धर्मं वक्तुमिहेच्छसि  ॥ ०८६  ॥

सुवीरकं याच्यमाना मद्रका कषति स्फिजौ ।
अदातुकामा वचनमिदं वदति दारुणम्  ॥ ०८७  ॥

मा मा सुवीरकं कश्चिद्याचतां दयितो मम ।

पुत्रं दद्यां प्रतिपदं न तु दद्यां सुवीरकम् ॥ ०८८ ॥

नार्यो बृहत्यो निर्ह्रीका मद्रकाः कम्बलावृताः ।
घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुम ॥ ०८९ ॥

एवमादि मयान्यैर्वा शक्यं वक्तुं भवेद्बहु ।
आ केशाग्रान्नखाग्राच्च वक्तव्येषु कुवर्त्मसु ॥ ०९० ॥

मद्रकाः सिन्धुसौवीरा धर्मं विद्युः कथं त्विह ।
पापदेशोद्भवा म्लेच्छा धर्माणामविचक्षणाः ॥ ०९१ ॥

एष मुख्यतमो धर्मः क्षत्रियस्येति नः श्रुतम् ।
यदाजौ निहतः शेते सद्भिः समभिपूजितः ॥ ०९२ ॥

आयुधानां संपराये यन्मुच्येयमहं ततः ।
न मे स प्रथमः कल्पो निधने स्वर्गमिच्छतः ॥ ०९३ ॥

सोऽहं प्रियः सखा चास्मि धार्तराष्ट्रस्य धीमतः ।
तदर्थे हि मम प्राणा यच्च मे विद्यते वसु ॥ ०९४ ॥

व्यक्तं त्वमप्युपहितः पाण्डवैः पापदेशज ।
यथा ह्यमित्रवत्सर्वं त्वमस्मासु प्रवर्तसे ॥ ०९५ ॥

कामं न खलु शक्योऽहं त्वद्विधानां शतैरपि ।
सङ्ग्रामाद्विमुखः कर्तुं धर्मज्ञ इव नास्तिकैः ॥ ०९६ ॥

सारङ्ग इव घर्मार्तः कामं विलप शुष्य च ।
नाहं भीषयितुं शक्यः क्षत्रवृत्ते व्यवस्थितः ॥ ०९७ ॥

तनुत्यजां नृसिंहानामाहवेष्वनिवर्तिनाम् ।
या गतिर्गुरुणा प्राङ्मे प्रोक्ता रामेण तां स्मर ॥ ०९८ ॥

स्वेषां त्राणार्थमुद्युक्तं वधाय द्विषतामपि ।
विद्धि मामास्थितं वृत्तं पौरूरवसमुत्तमम् ॥ ०९९ ॥

न तद्भूतं प्रपश्यामि त्रिषु लोकेषु मद्रक ।
यो मामस्मादभिप्रायाद्वारयेदिति मे मतिः ॥ १०० ॥

एवं विद्वञ्जोषमास्स्व त्रासात्किं बहु भाषसे ।
मा त्वा हत्वा प्रदास्यामि क्रव्याद्भ्यो मद्रकाधम ॥ १०१ ॥

मित्रप्रतीक्षया शल्य धार्तराष्ट्रस्य चोभयोः ।
अपवादतितिक्षाभिस्त्रिभिरेतैर्हि जीवसि ॥ १०२ ॥

पुनश्चेदीदृशं वाक्यं मद्रराज वदिष्यसि ।
शिरस्ते पातयिष्यामि गदया वज्रकल्पया ॥ १०३ ॥

श्रोतारस्त्विदमद्येह द्रष्टारो वा कुदेशज ।
कर्णं वा जघ्नतुः कृष्णौ कर्णो वापि जघान तौ ॥ १०४ ॥

एवमुक्त्वा तु राधेयः पुनरेव विशां पते ।
अब्रवीन्मद्रराजानं याहि याहीत्यसंभ्रमम् ॥ १०५ ॥

---

# हंसकाकीयोपाख्यानम्

## अध्याय ०२८

सञ्जय उवाच ॥

मारिषाधिरथेः श्रुत्वा वचो युद्धाभिनन्दिनः ।
शल्योऽब्रवीत्पुनः कर्णं निदर्शनमुदाहरन्  ॥ ००१  ॥

यथैव मत्तो मद्येन त्वं तथा न च वा तथा ।
तथाहं त्वां प्रमाद्यन्तं चिकित्सामि सुहृत्तया  ॥ ००२  ॥

इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे ।
श्रुत्वा यथेष्टं कुर्यास्त्वं विहीन कुलपांसन  ॥ ००३  ॥

नाहमात्मनि किञ्चिद्वै किल्बिषं कर्ण संस्मरे ।
येन त्वं मां महाबाहो हन्तुमिच्छस्यनागसम्  ॥ ००४  ॥

अवश्यं तु मया वाच्यं बुध्यतां यदि ते हितम् ।
विशेषतो रथस्थेन राज्ञश्चैव हितैषिणा  ॥ ००५  ॥

समं च विषमं चैव रथिनश्च बलाबलम् ।
श्रमः खेदश्च सततं हयानां रथिना सह  ॥ ००६  ॥

आयुधस्य परिज्ञानं रुतं च मृगपक्षिणाम् ।
भारश्चाप्यतिभारश्च शल्यानां च प्रतिक्रिया  ॥ ००७  ॥

अस्त्रयोगश्च युद्धं च निमित्तानि तथैव च ।
सर्वमेतन्मया ज्ञेयं रथस्यास्य कुटुम्बिना  ॥ ००८  ॥

अतस्त्वां कथये कर्ण निदर्शनमिदं पुनः  ॥ ००८  ॥

वैश्यः किल समुद्रान्ते प्रभूतधनधान्यवान् ।
यज्वा दानपतिः क्षान्तः स्वकर्मस्थोऽभवच्छुचिः  ॥ ००९  ॥

बहुपुत्रः प्रियापत्यः सर्वभूतानुकम्पकः ।

राज्ञो धर्मप्रधानस्य राष्ट्रे वसति निर्भयः ॥ ०१० ॥

पुत्राणां तस्य बालानां कुमाराणां यशस्विनाम् ।
काको बहूनामभवदुच्छिष्टकृतभोजनः ॥ ०११ ॥

तस्मै सदा प्रयच्छन्ति वैश्यपुत्राः कुमारकाः ।
मांसोदनं दधि क्षीरं पायसं मधुसर्पिषी ॥ ०१२ ॥

स चोच्छिष्टभृतः काको वैश्यपुत्रैः कुमारकैः ।
सदृशान्पक्षिणो दृप्तः श्रेयसश्चावमन्यते ॥ ०१३ ॥

अथ हंसाः समुद्रान्ते कदाचिदभिपातिनः ।
गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतसः ॥ ०१४ ॥

कुमारकास्ततो हंसान्दृष्ट्वा काकमथाब्रुवन् ।
भवानेव विशिष्टो हि पतत्रिभ्यो विहङ्गम ॥ ०१५ ॥

प्रतार्यमाणस्तु स तैरल्पबुद्धिभिरण्डजः ।
तद्वचः सत्यमित्येव मौर्ख्याद्दर्पाच्च मन्यते ॥ ०१६ ॥

तान्सोऽभिपत्य जिज्ञासुः क एषां श्रेष्ठभागिति ।
उच्छिष्टदर्पितः काको बहूनां दूरपातिनाम् ॥ ०१७ ॥

तेषां यं प्रवरं मेने हंसानां दूरपातिनाम् ।
तमाह्वयत दुर्बुद्धिः पताम इति पक्षिणम् ॥ ०१८ ॥

तच्छ्रुत्वा प्राहसन्हंसा ये तत्रासन्समागताः ।
भाषतो बहु काकस्य बलिनः पततां वराः ॥ ०१९ ॥

इदमूचुश्च चक्राङ्गा वचः काकं विहङ्गमाः ॥ ०१९ ॥

वयं हंसाश्चरामेमां पृथिवीं मानसौकसः ।
पक्षिणां च वयं नित्यं दूरपातेन पूजिताः ॥ ०२० ॥

कथं नु हंसं बलिनं वज्राङ्गं दूरपातिनम् ।
काको भूत्वा निपतने समाह्वयसि दुर्मते ॥ ०२१ ॥

कथं त्वं पतनं काक सहास्माभिर्ब्रवीषि तत् ॥ ०२१ ॥

अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः ।
प्रजगादोत्तरं काकः कत्थनो जातिलाघवात् ॥ ०२२ ॥

शतमेकं च पातानां पतितास्मि न संशयः ।
शतयोजनमेकैकं विचित्रं विविधं तथा ॥ ०२३ ॥

उड्डीनमवडीनं च प्रडीनं डीनमेव च ।
निडीनमथ संडीनं तिर्यक्कातिगतानि च ॥ ०२४ ॥

विडीनं परिडीनं च पराडीनं सुडीनकम् ।
अतिडीनं महाडीनं निडीनं परिडीनकम् ॥ ०२५ ॥

गतागतप्रतिगता बह्वीश्च निकुडीनिकाः ।
कर्तास्मि मिषतां वोऽद्य ततो द्रक्ष्यथ मे बलम् ॥ ०२६ ॥

एवमुक्ते तु काकेन प्रहस्यैको विहङ्गमः ।
उवाच हंसस्तं काकं वचनं तन्निबोध मे ॥ ०२७ ॥

शतमेकं च पातानां त्वं काक पतिता ध्रुवम् ।
एकमेव तु ये पातं विदुः सर्वे विहङ्गमाः ॥ ०२८ ॥

तमहं पतिता काक नान्यं जानामि कञ्चन ।
पत त्वमपि रक्ताक्ष येन वा तेन मन्यसे ॥ ०२९ ॥

अथ काकाः प्रजहसुर्ये तत्रासन्समागताः ।
कथमेकेन पातेन हंसः पातशतं जयेत् ॥ ०३० ॥

एकेनैव शतस्यैकं पातेनाभिभविष्यति ।
हंसस्य पतितं काको बलवानाशुविक्रमः ॥ ०३१ ॥

प्रपेततुः स्पर्धयाथ ततस्तौ हंसवायसौ ।
एकपाती च चक्राङ्गः काकः पातशतेन च ॥ ०३२ ॥

पेतिवानथ चक्राङ्गः पेतिवानथ वायसः ।
विसिस्मापयिषुः पातैराचक्षाणोऽऽत्मनः क्रियाम् ॥ ०३३ ॥

अथ काकस्य चित्राणि पतितानीतराणि च ।
दृष्ट्वा प्रमुदिताः काका विनेदुरथ तैः स्वरैः ॥ ०३४ ॥

हंसांश्चावहसन्ति स्म प्रावदन्नप्रियाणि च ।
उत्पत्योत्पत्य च प्राहुर्मुहूर्तमिति चेति च ॥ ०३५ ॥

वृक्षाग्रेभ्यः स्थलेभ्यश्च निपतन्त्युत्पतन्ति च ।
कुर्वाणा विविधान्रावानाशंसन्तस्तदा जयम् ॥ ०३६ ॥

हंसस्तु मृदुकेनैव विक्रान्तुमुपचक्रमे ।
प्रत्यहीयत काकाच्च मुहूर्तमिव मारिष ॥ ०३७ ॥

अवमन्य रयं हंसानिदं वचनमब्रवीत् ।
योऽसावुत्पतितो हंसः सोऽसावेव प्रहीयते ॥ ०३८ ॥

अथ हंसः स तच्छ्रुत्वा प्रापतत्पश्चिमां दिशम् ।
उपर्युपरि वेगेन सागरं वरुणालयम् ॥ ०३९ ॥

ततो भीः प्राविशत्काकं तदा तत्र विचेतसम् ।
द्वीपद्रुमानपश्यन्तं निपतन्तं श्रमान्वितम्  ॥ ०४०  ॥

निपतेयं क्व नु श्रान्त इति तस्मिञ्जलार्णवे  ॥ ०४०  ॥

अविषह्यः समुद्रो हि बहुसत्त्वगणालयः ।
महाभूतशतोद्भासी नभसोऽपि विशिष्यते  ॥ ०४१  ॥

गाम्भीर्याद्धि समुद्रस्य न विशेषः कुलाधम ।
दिगम्बराम्भसां कर्ण समुद्रस्था हि दुर्जयाः  ॥ ०४२  ॥

विदूरपातात्तोयस्य किं पुनः कर्ण वायसः  ॥ ०४२  ॥

अथ हंसोऽभ्यतिक्रम्य मुहूर्तमिति चेति च ।
अवेक्षमाणस्तं काकं नाशक्नोद्व्यपसर्पितुम्  ॥ ०४३  ॥

अतिक्रम्य च चक्राङ्गः काकं तं समुदैक्षत  ॥ ०४३  ॥

तं तथा हीयमानं च हंसो दृष्ट्वाब्रवीदिदम् ।
उज्जिहीर्षुर्निमज्जन्तं स्मरन्सत्पुरुषव्रतम्  ॥ ०४४  ॥

बहूनि पतनानि त्वमाचक्षाणो मुहुर्मुहुः ।
पतस्यव्याहरंश्चेदं न नो गुह्यं प्रभाषसे  ॥ ०४५  ॥

किं नाम पतनं काक यत्त्वं पतसि सांप्रतम् ।
जलं स्पृशसि पक्षाभ्यां तुण्डेन च पुनः पुनः  ॥ ०४६  ॥

स पक्षाभ्यां स्पृशन्नार्तस्तुण्डेन जलमर्णवे ।
काको दृढं परिश्रान्तः सहसा निपपात ह  ॥ ०४७  ॥

हंस उवाच  ॥

शतमेकं च पातानां यत्प्रभाषसि वायस ।
नानाविधानीह पुरा तच्चानृतमिहाद्य ते ॥ ०४८ ॥

काक उवाच ॥

उच्छिष्टदर्पितो हंस मन्येऽऽत्मानं सुपर्णवत् ।
अवमन्य बहूंश्चाहं काकानन्यांश्च पक्षिणः ॥ ०४९ ॥

प्राणैर्हंस प्रपद्ये त्वां द्वीपान्तं प्रापयस्व माम् ॥ ०४९ ॥

यद्यहं स्वस्तिमान्हंस स्वदेशं प्राप्नुयां पुनः ।
न कञ्चिदवमन्येयमापदो मां समुद्धर ॥ ०५० ॥

तमेवंवादिनं दीनं विलपन्तमचेतनम् ।
काक काकेति वाशन्तं निमज्जन्तं महार्णवे ॥ ०५१ ॥

तथैत्य वायसं हंसो जलक्लिन्नं सुदुर्दशम् ।
पद्भ्यामुत्क्षिप्य वेपन्तं पृष्ठमारोपयच्छनैः ॥ ०५२ ॥

आरोप्य पृष्ठं काकं तं हंसः कर्ण विचेतसम् ।
आजगाम पुनर्द्वीपं स्पर्धया पेततुर्यतः ॥ ०५३ ॥

संस्थाप्य तं चापि पुनः समाश्वास्य च खेचरम् ।
गतो यथेप्सितं देशं हंसो मन इवाशुगः ॥ ०५४ ॥

उच्छिष्टभोजनात्काको यथा वैश्यकुले तु सः ।
एवं त्वमुच्छिष्टभृतो धार्तराष्ट्रैर्न संशयः ॥ ०५५ ॥

सदृशाञ्श्रेयसश्चापि सर्वान्कर्णातिमन्यसे ॥ ०५५ ॥

द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः ।
विराटनगरे पार्थमेकं किं नावधीस्तदा ॥ ०५६ ॥

यत्र व्यस्ताः समस्ताश्च निर्जिताः स्थ किरीटिना ।
सृगाला इव सिंहेन क्व ते वीर्यमभूत्तदा ॥ ०५७ ॥

भ्रातरं च हतं दृष्ट्वा निर्जितः सव्यसाचिना ।
पश्यतां कुरुवीराणां प्रथमं त्वं पलायथाः ॥ ०५८ ॥

तथा द्वैतवने कर्ण गन्धर्वैः समभिद्रुतः ।
कुरून्समग्रानुत्सृज्य प्रथमं त्वं पलायथाः ॥ ०५९ ॥

हत्वा जित्वा च गन्धर्वांश्चित्रसेनमुखान्रणे ।
कर्ण दुर्योधनं पार्थः सभार्यं सममोचयत् ॥ ०६० ॥

पुनः प्रभावः पार्थस्य पुराणः केशवस्य च ।
कथितः कर्ण रामेण सभायां राजसंसदि ॥ ०६१ ॥

सततं च तदश्रौषीर्वचनं द्रोणभीष्मयोः ।
अवध्यौ वदतोः कृष्णौ संनिधौ वै महीक्षिताम् ॥ ०६२ ॥

कियन्तं तत्र वक्ष्यामि येन येन धनञ्जयः ।
त्वत्तोऽतिरिक्तः सर्वेभ्यो भूतेभ्यो ब्राह्मणो यथा ॥ ०६३ ॥

इदानीमेव द्रष्टासि प्रधने स्यन्दने स्थितौ ।
पुत्रं च वसुदेवस्य पाण्डवं च धनञ्जयम् ॥ ०६४ ॥

देवासुरमनुष्येषु प्रख्यातौ यौ नरर्षभौ ।
प्रकाशेनाभिविख्यातौ त्वं तु खद्योतवन्नृषु ॥ ०६५ ॥

एवं विद्वान्मावमंस्थाः सूतपुत्राच्युतार्जुनौ ।

नृसिंहौ तौ नरश्वा त्वं जोषमास्स्व विकत्थन ॥ ०६६ ॥

---

# अध्याय ०२९

सञ्जय उवाच ॥

मद्राधिपस्याधिरथिस्तदैवं ; वचो निशम्याप्रियमप्रतीतः ।
उवाच शल्यं विदितं ममैत ;द्यथाविधावर्जुनवासुदेवौ ॥ ००१ ॥

शौरे रथं वाहयतोऽर्जुनस्य ; बलं महास्त्राणि च पाण्डवस्य ।
अहं विजानामि यथावदद्य ; परोक्षभूतं तव तत्तु शल्य ॥ ००२ ॥

तौ चाप्रधृष्यौ शस्त्रभृतां वरिष्ठौ ; व्यपेतभीर्योधयिष्यामि कृष्णौ ।
संतापयत्यभ्यधिकं तु रामा ;च्छापोऽद्य मां ब्राह्मणसत्तमाच्च ॥ ००३ ॥

अवात्सं वै ब्राह्मणच्छद्मनाहं ; रामे पुरा दिव्यमस्त्रं चिकीर्षुः ।
तत्रापि मे देवराजेन विघ्नो ; हितार्थिना फल्गुनस्यैव शल्य ॥ ००४ ॥

कृतोऽवभेदेन ममोरुमेत्य ; प्रविश्य कीटस्य तनुं विरूपाम् ।
गुरोर्भयाच्चापि न चेलिवानहं ; तच्चावबुद्धो ददृशे स विप्रः ॥ ००५ ॥

पृष्टश्चाहं तमवोचं महर्षिं ; सूतोऽहमस्मीति स मां शशाप ।
सूतोपधावाप्तमिदं त्वयास्त्रं ; न कर्मकाले प्रतिभास्यति त्वाम् ॥ ००६ ॥

अन्यत्र यस्मात्तव मृत्युकाला ;दब्राह्मणे ब्रह्म न हि ध्रुवं स्यात् ।
तदद्य पर्याप्तमतीव शस्त्र ;मस्मिन्सङ्ग्रामे तुमुले तात भीमे ॥ ००७ ॥

अपां पतिर्वेगवानप्रमेयो ; निमज्जयिष्यन्निवहान्प्रजानाम् ।
महानगं यः कुरुते समुद्रं ; वेलैव तं वारयत्यप्रमेयम् ॥ ००८ ॥

प्रमुञ्चन्तं बाणसंघानमोघा ;न्मर्मच्छिदो वीरहणः सपत्रान् ।
कुन्तीपुत्रं प्रतियोत्स्यामि युद्धे ; ज्याकर्षिणामुत्तममद्य लोके ॥ ००९ ॥

एवं बलेनातिबलं महास्त्रं ; समुद्रकल्पं सुदुरापमुग्रम् ।
शरौघिणं पार्थिवान्मज्जयन्तं ; वेलेव पार्थमिषुभिः संसहिष्ये ॥ ०१० ॥

अद्याहवे यस्य न तुल्यमन्यं ; मन्ये मनुष्यं धनुराददानम् ।
सुरासुरान्वै युधि यो जयेत ; तेनाद्य मे पश्य युद्धं सुघोरम् ॥ ०११ ॥

अतिमानी पाण्डवो युद्धकामो ; अमानुषैरेष्यति मे महास्त्रैः ।
तस्यास्त्रमस्त्रैरभिहत्य संख्ये ; शरोत्तमैः पातयिष्यामि पार्थम् ॥ ०१२ ॥

दिवाकरेणापि समं तपन्तं ; समाप्तरश्मिं यशसा ज्वलन्तम् ।
तमोनुदं मेघ इवातिमात्रो ; धनञ्जयं छादयिष्यामि बाणैः ॥ ०१३ ॥

वैश्वानरं धूमशिखं ज्वलन्तं ; तेजस्विनं लोकमिमं दहन्तम् ।
मेघो भूत्वा शरवर्षैर्यथाग्निं ; तथा पार्थं शमयिष्यामि युद्धे ॥ ०१४ ॥

प्रमाथिनं बलवन्तं प्रहारिणं ; प्रभञ्जनं मातरिश्वानमुग्रम् ।
युद्धे सहिष्ये हिमवानिवाचलो ; धनञ्जयं क्रुद्धममृष्यमाणम् ॥ ०१५ ॥

विशारदं रथमार्गेष्वसक्तं ; धुर्यं नित्यं समरेषु प्रवीरम् ।
लोके वरं सर्वधनुर्धराणां ; धनञ्जयं संयुगे संसहिष्ये ॥ ०१६ ॥

अद्याहवे यस्य न तुल्यमन्यं ; मध्येमनुष्यं धनुराददानम् ।
सर्वामिमां यः पृथिवीं सहेत ; तथा विद्वान्योत्स्यमानोऽस्मि तेन ॥ ०१७ ॥

यः सर्वभूतानि सदेवकानि ; प्रस्थेऽजयत्खाण्डवे सव्यसाची ।

को जीवितं रक्षमाणो हि तेन ; युयुत्सते मामृते मानुषोऽन्यः ॥ ०१८ ॥

अहं तस्य पौरुषं पाण्डवस्य ; ब्रूयां हृष्टः समितौ क्षत्रियाणाम् ।
किं त्वं मूर्खः प्रभषन्मूढचेता ; मामवोचः पौरुषमर्जुनस्य ॥ ०१९ ॥

अप्रियो यः परुषो निष्ठुरो हि ; क्षुद्रः क्षेप्ता क्षमिणश्चाक्षमावान् ।
हन्यामहं तादृशानां शतानि ; क्षमामि त्वां क्षमया कालयोगात् ॥ ०२० ॥

अवोचस्त्वं पाण्डवार्थेऽप्रियाणि ; प्रधर्षयन्मां मूढवत्पापकर्मन् ।
मय्यार्जवे जिह्मगतिर्हतस्त्वं ; मित्रद्रोही सप्तपदं हि मित्रम् ॥ ०२१ ॥

कालस्त्वयं मृत्युमयोऽतिदारुणो ; दुर्योधनो युद्धमुपागमद्यत् ।
तस्यार्थसिद्धिमभिकाङ्क्षमाण ;स्तमभ्येष्ये यत्र नैकान्त्यमस्ति ॥ ०२२ ॥

मित्रं मिदेर्नन्दतेः प्रीयतेर्वा ; संत्रायतेर्मानद मोदतेर्वा ।
ब्रवीति तच्चामुत विप्रपूर्वा ;त्तच्चापि सर्वं मम दुर्योधनेऽस्ति ॥ ०२३ ॥

शत्रुः शदेः शासतेः शायतेर्वा ; श्रृणातेर्वा श्वयतेर्वापि सर्गे ।
उपसर्गाद्बहुधा सूदतेश्च ; प्रायेण सर्वं त्वयि तच्च मह्यम् ॥ ०२४ ॥

दुर्योधनार्थं तव चाप्रियार्थं ; यशोर्थमात्मार्थमपीश्वरार्थम् ।
तस्मादहं पाण्डववासुदेवौ ; योत्स्ये यत्नात्कर्म तत्पश्य मेऽद्य ॥ ०२५ ॥

अस्त्राणि पश्याद्य ममोत्तमानि ; ब्राह्माणि दिव्यान्यथ मानुषाणि ।
आसादयिष्याम्यहमुग्रवीर्यं ; द्विपोत्तमं मत्तमिवाभिमत्तः ॥ ०२६ ॥

अस्त्रं ब्राह्मं मनसा तद्ध्यजय्यं ; क्षेप्स्ये पार्थायाप्रतिमं जयाय ।
तेनापि मे नैव मुच्येत युद्धे ; न चेत्पतेद्विषमे मेऽद्य चक्रम् ॥ ०२७ ॥

वैवस्वताद्दण्डहस्ताद्वरुणाद्वापि पाशिनः ।
सगदाद्वा धनपतेः सवज्राद्वापि वासवात् ॥ ०२८ ॥

नान्यस्मादपि कस्माच्चिद्बिभिमो ह्याततायिनः ।
इति शल्य विजानीहि यथा नाहं बिभेम्यभीः ॥ ०२९ ॥

तस्माद्भयं न मे पार्थान्नापि चैव जनार्दनात् ।
अद्य युद्धं हि ताभ्यां मे संपराये भविष्यति ॥ ०३० ॥

श्वभ्रे ते पततां चक्रमिति मे ब्राह्मणोऽवदत् ।
युध्यमानस्य सङ्ग्रामे प्राप्तस्यैकायने भयम् ॥ ०३१ ॥

तस्माद्बिभेमि बलवद्ब्राह्मणव्याहृतादहम् ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ०३२ ॥

होमधेन्वा वत्समस्य प्रमत्त इषुणाहनम् ।
चरन्तमजने शल्य ब्राह्मणात्तपसो निधेः ॥ ०३३ ॥

ईषादन्तान्सप्तशतान्दासीदासशतानि च ।
ददतो द्विजमुख्याय प्रसादं न चकार मे ॥ ०३४ ॥

कृष्णानां श्वेतवत्सानां सहस्राणि चतुर्दश ।
आहरन्न लभे तस्मात्प्रसादं द्विजसत्तमात् ॥ ०३५ ॥

ऋद्धं गेहं सर्वकामैर्यच्च मे वसु किञ्चन ।
तत्सर्वमस्मै सत्कृत्य प्रयच्छामि न चेच्छति ॥ ०३६ ॥

ततोऽब्रवीन्मां याचन्तमपराद्धं प्रयत्नतः ।
व्याहृतं यन्मया सूत तत्तथा न तदन्यथा ॥ ०३७ ॥

अनृतोक्तं प्रजा हन्यात्ततः पापमवाप्नुयात् ।
तस्माद्धर्माभिरक्षार्थं नानृतं वक्तुमुत्सहे ॥ ०३८ ॥

मा त्वं ब्रह्मगतिं हिंस्याः प्रायश्चित्तं कृतं त्वया ।
मद्वाक्यं नानृतं लोके कश्चित्कुर्यात्समाप्नुहि ॥ ०३९ ॥

इत्येतत्ते मया प्रोक्तं क्षिप्तेनापि सुहृत्तया ।
जानामि त्वाधिक्षिपन्तं जोषमास्स्वोत्तरं शृणु ॥ ०४० ॥

---

# बाल्हीकमद्रककुत्सनम्

## अध्याय ०३०

सञ्जय उवाच ॥

ततः पुनर्महाराज मद्रराजमरिंदमम् ।
अभ्यभाषत राधेयः संनिवार्योत्तरं वचः ॥ ००१ ॥

यत्त्वं निदर्शनार्थं मां शल्य जल्पितवानसि ।
नाहं शक्यस्त्वया वाचा विभीषयितुमाहवे ॥ ००२ ॥

यदि मां देवताः सर्वा योधयेयुः सवासवाः ।
तथापि मे भयं न स्यात्किमु पार्थात्सकेशवात् ॥ ००३ ॥

नाहं भीषयितुं शक्यो वाङ्मात्रेण कथञ्चन ।
अन्यं जानीहि यः शक्यस्त्वया भीषयितुं रणे ॥ ००४ ॥

नीचस्य बलमेतावत्पारुष्यं यत्त्वमात्थ माम् ।
अशक्तोऽस्मद्गुणान्प्राप्तुं वल्गसे बहु दुर्मते ॥ ००५ ॥

न हि कर्णः समुद्भूतो भयार्थमिह मारिष ।
विक्रमार्थमहं जातो यशोर्थं च तथैव च ॥ ००६ ॥

इदं तु मे त्वमेकाग्रः शृणु मद्रजनाधिप ।
संनिधौ धृतराष्ट्रस्य प्रोच्यमानं मया श्रुतम् ॥ ००७ ॥

देशांश्च विविधांश्चित्रान्पूर्ववृत्तांश्च पार्थिवान् ।
ब्राह्मणाः कथयन्तः स्म धृतराष्ट्रमुपासते ॥ ००८ ॥

तत्र वृद्धः पुरावृत्ताः कथाः काश्चिद्द्विजोत्तमः ।
बाह्लीकदेशं मद्रांश्च कुत्सयन्वाक्यमब्रवीत् ॥ ००९ ॥

बहिष्कृता हिमवता गङ्गया च तिरस्कृताः ।
सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये ॥ ०१० ॥

पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः ।
तान्धर्मबाह्यानशुचीन्बाह्लीकान्परिवर्जयेत् ॥ ०११ ॥

गोवर्धनो नाम वटः सुभाण्डं नाम चत्वरम् ।
एतद्राजकुलद्वारमाकुमारः स्मराम्यहम् ॥ ०१२ ॥

कार्येणात्यर्थगाढेन बाह्लीकेषूषितं मया ।
तत एषां समाचारः संवासाद्विदितो मम ॥ ०१३ ॥

शाकलं नाम नगरमापगा नाम निम्नगा ।
जर्तिका नाम बाह्लीकास्तेषां वृत्तं सुनिन्दितम् ॥ ०१४ ॥

धानागौडासवे पीत्वा गोमांसं लशुनैः सह ।
अपूपमांसवाट्यानामाशिनः शीलवर्जिताः ॥ ०१५ ॥

हसन्ति गान्ति नृत्यन्ति स्त्रीभिर्मत्ता विवाससः ।

नगरागारवप्रेषु बहिर्माल्यानुलेपनाः ॥ ०१६ ॥

मत्तावगीतैर्विविधैः खरोष्ट्रनिनदोपमैः ।
आहुरन्योन्यमुक्तानि प्रब्रुवाणा मदोत्कटाः ॥ ०१७ ॥

हा हते हा हतेत्येव स्वामिभर्तृहतेति च ।
आक्रोशन्त्यः प्रनृत्यन्ति मन्दाः पर्वस्वसंयताः ॥ ०१८ ॥

तेषां किलावलिप्तानां निवसन्कुरुजाङ्गले ।
कश्चिद्बाह्लीकमुख्यानां नातिहृष्टमना जगौ ॥ ०१९ ॥

सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी ।
मामनुस्मरती शेते बाह्लीकं कुरुवासिनम् ॥ ०२० ॥

शतद्रुकनदीं तीर्त्वा तां च रम्यामिरावतीम् ।
गत्वा स्वदेशं द्रक्ष्यामि स्थूलशङ्खाः शुभाः स्त्रियः ॥ ०२१ ॥

मनःशिलोज्ज्वलापाङ्गा गौर्यस्त्रिककुदाञ्जनाः ।
केवलाजिनसंवीताः कूर्दन्त्यः प्रियदर्शनाः ॥ ०२२ ॥

मृदङ्गानकशङ्खानां मर्दलानां च निस्वनैः ।
खरोष्ट्राश्वतरैश्चैव मत्ता यास्यामहे सुखम् ॥ ०२३ ॥

शमीपीलुकरीराणां वनेषु सुखवर्त्मसु ।
अपूपान्सक्तुपिण्डीश्च खादन्तो मथितान्विताः ॥ ०२४ ॥

पथिषु प्रबला भूत्वा कदासमृदितेऽध्वनि ।
खलोपहारं कुर्वाणास्ताडयिष्याम भूयसः ॥ ०२५ ॥

एवं हीनेषु व्रात्येषु बाह्लीकेषु दुरात्मसु ।
कश्चेतयानो निवसेन्मुहूर्तमपि मानवः ॥ ०२६ ॥

ईदृशा ब्राह्मणेनोक्ता बाह्लीका मोघचारिणः ।
येषां षड्भागहर्ता त्वमुभयोः शुभपापयोः ॥ ०२७ ॥

इत्युक्त्वा ब्राह्मणः साधुरुत्तरं पुनरुक्तवान् ।
बाह्लीकेष्वविनीतेषु प्रोच्यमानं निबोधत ॥ ०२८ ॥

तत्र स्म राक्षसी गाति सदा कृष्णचतुर्दशीम् ।
नगरे शाकले स्फीते आहत्य निशि दुन्दुभिम् ॥ ०२९ ॥

कदा वा घोषिका गाथाः पुनर्गास्यन्ति शाकले ।
गव्यस्य तृप्ता मांसस्य पीत्वा गौडं महासवम् ॥ ०३० ॥

गौरीभिः सह नारीभिर्बृहतीभिः स्वलङ्कृताः ।
पलाण्डुगण्डूषयुतान्खादन्ते चैडकान्बहून् ॥ ०३१ ॥

वाराहं कौक्कुटं मांसं गव्यं गार्दभमौष्ट्रकम् ।
ऐडं च ये न खादन्ति तेषां जन्म निरर्थकम् ॥ ०३२ ॥

इति गायन्ति ये मत्ताः शीधुना शाकलावतः ।
सबालवृद्धाः कूर्दन्तस्तेषु वृत्तं कथं भवेत् ॥ ०३३ ॥

इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदन्योऽप्युक्तवानस्मान्ब्राह्मणः कुरुसंसदि ॥ ०३४ ॥

पञ्च नद्यो वहन्त्येता यत्र पीलुवनान्यपि ।
शतद्रुश्च विपाशा च तृतीयेरावती तथा ॥ ०३५ ॥

चन्द्रभागा वितस्ता च सिन्धुषष्ठा बहिर्गताः ॥ ०३५ ॥

आरट्टा नाम ते देशा नष्टधर्मान्न तान्व्रजेत् ।

व्रात्यानां दासमीयानां विदेहानामयज्वनाम् ॥ ०३६ ॥

न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा ।
तेषां प्रनष्टधर्माणां बाह्लीकानामिति श्रुतिः ॥ ०३७ ॥

ब्राह्मणेन तथा प्रोक्तं विदुषा साधुसंसदि ।
काष्ठकुण्डेषु बाह्लीका मृण्मयेषु च भुञ्जते ॥ ०३८ ॥

सक्तुवाट्यावलिप्तेषु श्वादिलीढेषु निर्घृणाः ॥ ०३८ ॥

आविकं चौष्ट्रिकं चैव क्षीरं गार्दभमेव च ।
तद्विकारांश्च बाह्लीकाः खादन्ति च पिबन्ति च ॥ ०३९ ॥

पुत्रसङ्करिणो जाल्माः सर्वान्नक्षीरभोजनाः ।
आरट्टा नाम बाह्लीका वर्जनीया विपश्चिता ॥ ०४० ॥

उत शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदन्योऽप्युक्तवान्सभ्यो ब्राह्मणः कुरुसंसदि ॥ ०४१ ॥

युगंधरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले ।
तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति ॥ ०४२ ॥

पञ्च नद्यो वहन्त्येता यत्र निःसृत्य पर्वतात् ।
आरट्टा नाम बाह्लीका न तेष्वार्यो द्व्यहं वसेत् ॥ ०४३ ॥

बहिश्च नाम ह्लीकश्च विपाशायां पिशाचकौ ।
तयोरपत्यं बाह्लीका नैषा सृष्टिः प्रजापतेः ॥ ०४४ ॥

कारस्करान्महिषकान्कलिङ्गान्कीकटाटवीन् ।
कर्कोटकान्वीरकांश्च दुर्धर्मांश्च विवर्जयेत् ॥ ०४५ ॥

इति तीर्थानुसर्तारं राक्षसी काचिदब्रवीत् ।
एकरात्रा शमीगेहे महोलूखलमेखला ॥ ०४६ ॥

आरट्टा नाम ते देशा बाह्लीका नाम ते जनाः ।
वसातिसिन्धुसौवीरा इति प्रायो विकुत्सिताः ॥ ०४७ ॥

उत शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
उच्यमानं मया सम्यक्तदेकाग्रमनाः शृणु ॥ ०४८ ॥

ब्राह्मणः शिल्पिनो गेहमभ्यगच्छत्पुरातिथिः ।
आचारं तत्र संप्रेक्ष्य प्रीतः शिल्पिनमब्रवीत् ॥ ०४९ ॥

मया हिमवतः शृङ्गमेकेनाध्युषितं चिरम् ।
दृष्टाश्च बहवो देशा नानाधर्मसमाकुलाः ॥ ०५० ॥

न च केन च धर्मेण विरुध्यन्ते प्रजा इमाः ।
सर्वे हि तेऽब्रुवन्धर्मं यथोक्तं वेदपारगैः ॥ ०५१ ॥

अटता तु सदा देशान्नानाधर्मसमाकुलान् ।
आगच्छता महाराज बाह्लीकेषु निशामितम् ॥ ०५२ ॥

तत्रैव ब्राह्मणो भूत्वा ततो भवति क्षत्रियः ।
वैश्यः शूद्रश्च बाह्लीकस्ततो भवति नापितः ॥ ०५३ ॥

नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः ।
द्विजो भूत्वा च तत्रैव पुनर्दासोऽपि जायते ॥ ०५४ ॥

भवत्येकः कुले विप्रः शिष्टान्ये कामचारिणः ।
गान्धारा मद्रकाश्चैव बाह्लीकाः केऽप्यचेतसः ॥ ०५५ ॥

एतन्मया श्रुतं तत्र धर्मसङ्करकारकम् ।

कृत्स्नामटित्वा पृथिवीं बाह्लीकेषु विपर्ययः ॥ ०५६ ॥

उत शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदप्यन्योऽब्रवीद्वाक्यं बाह्लीकानां विकुत्सितम् ॥ ०५७ ॥

सती पुरा हृता काचिदारट्टा किल दस्युभिः ।
अधर्मतश्चोपयाता सा तानभ्यशपत्ततः ॥ ०५८ ॥

बालां बन्धुमतीं यन्मामधर्मेणोपगच्छथ ।
तस्मान्नार्यो भविष्यन्ति बन्धक्यो वै कुलेषु वः ॥ ०५९ ॥

न चैवास्मात्प्रमोक्ष्यध्वं घोरात्पापान्नराधमाः ॥ ०५९ ॥

कुरवः सहपाञ्चालाः शाल्वा मत्स्याः सनैमिषाः ।
कोसलाः काशयोऽङ्गाश्च कलिङ्गा मगधास्तथा ॥ ०६० ॥

चेदयश्च महाभागा धर्मं जानन्ति शाश्वतम् ।
नानादेशेषु सन्तश्च प्रायो बाह्या लयादृते ॥ ०६१ ॥

आ मत्स्येभ्यः कुरुपाञ्चालदेश्या ; आ नैमिषाच्चेदयो ये विशिष्टाः ।
धर्मं पुराणमुपजीवन्ति सन्तो ; मद्रानृते पञ्चनदांश्च जिह्मान् ॥ ०६२ ॥

एवं विद्वन्धर्मकथांश्च राजं ;स्तूष्णींभूतो जडवच्छल्य भूयाः ।
त्वं तस्य गोप्ता च जनस्य राजा ; षड्भागहर्ता शुभदुष्कृतस्य ॥ ०६३ ॥

अथ वा दुष्कृतस्य त्वं हर्ता तेषामरक्षिता ।
रक्षिता पुण्यभाग्राजा प्रजानां त्वं त्वपुण्यभाक् ॥ ०६४ ॥

पूज्यमाने पुरा धर्मे सर्वदेशेषु शाश्वते ।
धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः ॥ ०६५ ॥

व्रात्यानां दाशमीयानां कृतेऽप्यशुभकर्मणाम् ।
इति पाञ्चनदं धर्ममवमेने पितामहः ॥ ०६६ ॥

स्वधर्मस्थेषु वर्णेषु सोऽप्येतं नाभिपूजयेत् ॥ ०६६ ॥

उत शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
कल्माषपादः सरसि निमज्जन्राक्षसोऽब्रवीत् ॥ ०६७ ॥

क्षत्रियस्य मलं भैक्षं ब्राह्मणस्यानृतं मलम् ।
मलं पृथिव्या बाह्लीकाः स्त्रीणां मद्रस्त्रियो मलम् ॥ ०६८ ॥

निमज्जमानमुद्धृत्य कश्चिद्राजा निशाचरम् ।
अपृच्छत्तेन चाख्यातं प्रोक्तवान्यन्निबोध तत् ॥ ०६९ ॥

मानुषाणां मलं म्लेच्छा म्लेच्छानां मौष्टिका मलम् ।
मौष्टिकानां मलं शण्डाः शण्डानां राजयाजकाः ॥ ०७० ॥

राजयाजकयाज्यानां मद्रकाणां च यन्मलम् ।
तद्भवेद्वै तव मलं यद्यस्मान्न विमुञ्चसि ॥ ०७१ ॥

इति रक्षोपसृष्टेषु विषवीर्यहतेषु च ।
राक्षसं भेषजं प्रोक्तं संसिद्धं वचनोत्तरम् ॥ ०७२ ॥

ब्राह्मं पाञ्चालाः कौरवेयाः स्वधर्मः ; सत्यं मत्स्याः शूरसेनाश्च यज्ञः ।
प्राच्या दासा वृषला दाक्षिणात्याः ; स्तेना बाह्लीकाः सङ्करा वै सुराष्ट्राः ॥ ०७३ ॥

कृतघ्नता परवित्तापहारः ; सुरापानं गुरुदारावमर्शः ।
येषां धर्मस्तान्प्रति नास्त्यधर्म ; आरट्टकान्पाञ्चनदान्धिगस्तु ॥ ०७४ ॥

आ पाञ्चालेभ्यः कुरवो नैमिषाश्च ; मत्स्याश्चैवाप्यथ जानन्ति धर्मम् ।

कलिङ्गकाश्चाङ्गका मागधाश्च ; शिष्टान्धर्मानुपजीवन्ति वृद्धाः ॥ ०७५ ॥

प्राचीं दिशं श्रिता देवा जातवेदःपुरोगमाः ।
दक्षिणां पितरो गुप्तां यमेन शुभकर्मणा ॥ ०७६ ॥

प्रतीचीं वरुणः पाति पालयन्नसुरान्बली ।
उदीचीं भगवान्सोमो ब्रह्मण्यो ब्राह्मणैः सह ॥ ०७७ ॥

रक्षःपिशाचान्हिमवान्गुह्यकान्गन्धमादनः ।
ध्रुवः सर्वाणि भूतानि विष्णुर्लोकाञ्जनार्दनः ॥ ०७८ ॥

इङ्गितज्ञाश्च मगधाः प्रेक्षितज्ञाश्च कोसलाः ।
अर्धोक्ताः कुरुपाञ्चालाः शाल्वाः कृत्स्नानुशासनाः ॥ ०७९ ॥

पार्वतीयाश्च विषमा यथैव गिरयस्तथा ॥ ०७९ ॥

सर्वज्ञा यवना राजञ्शूराश्चैव विशेषतः ।
म्लेच्छाः स्वसञ्ज्ञानियता नानुक्त इतरो जनः ॥ ०८० ॥

प्रतिरब्धास्तु बाह्लीका न च केचन मद्रकाः ।
स त्वमेतादृशः शल्य नोत्तरं वक्तुमर्हसि ॥ ०८१ ॥

एतज्ज्ञात्वा जोषमास्स्व प्रतीपं मा स्म वै कृथाः ।
स त्वां पूर्वमहं हत्वा हनिष्ये केशवार्जुनौ ॥ ०८२ ॥

शल्य उवाच ॥

आतुराणां परित्यागः स्वदारसुतविक्रयः ।
अङ्गेषु वर्तते कर्ण येषामधिपतिर्भवान् ॥ ०८३ ॥

रथातिरथसंख्यायां यत्त्वा भीष्मस्तदाब्रवीत् ।

तान्विदित्वात्मनो दोषान्निर्मन्युर्भव मा क्रुधः ॥ ०८४ ॥

सर्वत्र ब्राह्मणाः सन्ति सन्ति सर्वत्र क्षत्रियाः ।
वैश्याः शूद्रास्तथा कर्ण स्त्रियः साध्व्यश्च सुव्रताः ॥ ०८५ ॥

रमन्ते चोपहासेन पुरुषाः पुरुषैः सह ।
अन्योन्यमवतक्षन्तो देशे देशे समैथुनाः ॥ ०८६ ॥

परवाच्येषु निपुणः सर्वो भवति सर्वदा ।
आत्मवाच्यं न जानीते जानन्नपि विमुह्यति ॥ ०८७ ॥

सञ्जय उवाच ॥

कर्णोऽपि नोत्तरं प्राह शल्योऽप्यभिमुखः परान् ।
पुनः प्रहस्य राधेयः पुनर्याहीत्यचोदयत् ॥ ०८८ ॥

---

# अध्याय ०३१

सञ्जय उवाच ॥

ततः परानीकभिदं व्यूहमप्रतिमं परैः ।
समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् ॥ ००१ ॥

प्रययौ रथघोषेण सिंहनादरवेण च ।
वादित्राणां च निनदैः कम्पयन्निव मेदिनीम् ॥ ००२ ॥

वेपमान इव क्रोधाद्युद्धशौण्डः परंतपः ।

पतिव्यूह्य महातेजा यथावद्भरतर्षभ ॥ ००३ ॥

व्यधमत्पाण्डवीं सेनामासुरीं मघवानिव ।
युधिष्ठिरं चाभिभवन्नसपव्यं चकार ह ॥ ००४ ॥

धृतराष्ट्र उवाच ॥

कथं सञ्जय राधेयः प्रत्यव्यूहत पाण्डवान् ।
धृष्टद्युम्नमुखान्वीरान्भीमसेनाभिरक्षितान् ॥ ००५ ॥

के च प्रपक्षौ पक्षौ वा मम सैन्यस्य सञ्जय ।
प्रविभज्य यथान्यायं कथं वा समवस्थिताः ॥ ००६ ॥

कथं पाण्डुसुताश्चापि प्रत्यव्यूहन्त मामकान् ।
कथं चैतन्महायुद्धं प्रावर्तत सुदारुणम् ॥ ००७ ॥

क्व च बीभत्सुरभवद्यत्कर्णोऽयाद्युधिष्ठिरम् ।
को ह्यर्जुनस्य सांनिध्ये शक्तोऽभ्येतुं युधिष्ठिरम् ॥ ००८ ॥

सर्वभूतानि यो ह्येकः खाण्डवे जितवान्पुरा ।
कस्तमन्यत्र राधेयात्प्रतियुध्येज्जिजीविषुः ॥ ००९ ॥

सञ्जय उवाच ॥

शृणु व्यूहस्य रचनामर्जुनश्च यथा गतः ।
परिदाय नृपं तेभ्यः सङ्ग्रामश्चाभवद्यथा ॥ ०१० ॥

कृपः शारद्वतो राजन्मागधश्च तरस्विनः ।
सात्वतः कृतवर्मा च दक्षिणं पक्षमाश्रिताः ॥ ०११ ॥

तेषां प्रपक्षे शकुनिरुलूकश्च महारथः ।

सादिभिर्विमलप्रासैस्तवानीकमरक्षताम्  ॥ ०१२  ॥

गान्धारिभिरसंभ्रान्तैः पार्वतीयैश्च दुर्जयैः ।
शलभानामिव व्रातैः पिशाचैरिव दुर्दृशैः  ॥ ०१३  ॥

चतुस्त्रिंशत्सहस्राणि रथानामनिवर्तिनाम् ।
संशप्तका युद्धशौण्डा वामं पार्श्वमपालयन्  ॥ ०१४  ॥

समुच्चितास्तव सुतैः कृष्णार्जुनजिघांसवः ।
तेषां प्रपक्षः काम्बोजाः शकाश्च यवनैः सह  ॥ ०१५  ॥

निदेशात्सूतपुत्रस्य सरथाः साश्वपत्तयः ।
आह्वयन्तोऽर्जुनं तस्थुः केशवं च महाबलम्  ॥ ०१६  ॥

मध्येसेनामुखं कर्णो व्यवातिष्ठत दंशितः ।
चित्रवर्माङ्गदः स्रग्वी पालयन्ध्वजिनीमुखम्  ॥ ०१७  ॥

रक्ष्यमाणः सुसंरब्धैः पुत्रैः शस्त्रभृतां वरः ।
वाहिनीप्रमुखं वीरः संप्रकर्षन्नशोभत  ॥ ०१८  ॥

अयोरत्निर्महाबाहुः सूर्यवैश्वानरद्युतिः ।
महाद्विपस्कन्धगतः पिङ्गलः प्रियदर्शनः  ॥ ०१९  ॥

दुःशासनो वृतः सैन्यैः स्थितो व्यूहस्य पृष्ठतः  ॥ ०१९  ॥

तमन्वयान्महाराज स्वयं दुर्योधनो नृपः ।
चित्राश्वैश्चित्रसंनाहैः सोदर्यैरभिरक्षितः  ॥ ०२०  ॥

रक्ष्यमाणो महावीर्यैः सहितैर्मद्रकेकयैः ।
अशोभत महाराज देवैरिव शतक्रतुः  ॥ ०२१  ॥

अश्वत्थामा कुरूणां च ये प्रवीरा महारथाः ।
नित्यमत्ताश्च मातङ्गाः शूरैर्म्लेच्छैरधिष्ठिताः ॥ ०२२ ॥

अन्वयुस्तद्रथानीकं क्षरन्त इव तोयदाः ॥ ०२२ ॥

ते ध्वजैर्वैजयन्तीभिर्ज्वलद्भिः परमायुधैः ।
सादिभिश्चास्थिता रेजुर्द्रुमवन्त इवाचलाः ॥ ०२३ ॥

तेषां पदातिनागानां पादरक्षाः सहस्रशः ।
पट्टिशासिधराः शूरा बभूवुरनिवर्तिनः ॥ ०२४ ॥

सादिभिः स्यन्दनैर्नागैरधिकं समलङ्कृतैः ।
स व्यूहराजो विबभौ देवासुरचमूपमः ॥ ०२५ ॥

बार्हस्पत्यः सुविहितो नायकेन विपश्चिता ।
नृत्यतीव महाव्यूहः परेषामादधद्भयम् ॥ ०२६ ॥

तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ।
पत्त्यश्वरथमातङ्गाः प्रावृषीव बलाहकाः ॥ ०२७ ॥

ततः सेनामुखे कर्णं दृष्ट्वा राजा युधिष्ठिरः ।
धनञ्जयममित्रघ्नमेकवीरमुवाच ह ॥ ०२८ ॥

पश्यार्जुन महाव्यूहं कर्णेन विहितं रणे ।
युक्तं पक्षैः प्रपक्षैश्च सेनानीकं प्रकाशते ॥ ०२९ ॥

तदेतद्वै समालोक्य प्रत्यमित्रं महद्बलम् ।
यथा नाभिभवत्यस्मांस्तथा नीतिर्विधीयताम् ॥ ०३० ॥

एवमुक्तोऽर्जुनो राज्ञा प्राञ्जलिर्नृपमब्रवीत् ।
यथा भवानाह तथा तत्सर्वं न तदन्यथा ॥ ०३१ ॥

यस्त्वस्य विहितो घातस्तं करिष्यामि भारत ।
प्रधानवध एवास्य विनाशस्तं करोम्यहम्  ॥ ०३२  ॥

युधिष्ठिर उवाच  ॥

तस्मात्त्वमेव राधेयं भीमसेनः सुयोधनम् ।
वृषसेनं च नकुलः सहदेवोऽपि सौबलम्  ॥ ०३३  ॥

दुःशासनं शतानीको हार्दिक्यं शिनिपुङ्गवः ।
धृष्टद्युम्नस्तथा द्रौणिं स्वयं यास्याम्यहं कृपम्  ॥ ०३४  ॥

द्रौपदेया धार्तराष्ट्राञ्शिष्टान्सह शिखण्डिना ।
ते ते च तांस्तानहितानस्माकं घ्नन्तु मामकाः  ॥ ०३५  ॥

सञ्जय उवाच  ॥

इत्युक्तो धर्मराजेन तथेत्युक्त्वा धनञ्जयः ।
व्यादिदेश स्वसैन्यानि स्वयं चागाच्चमूमुखम्  ॥ ०३६  ॥

अथ तं रथमायान्तं दृष्ट्वात्यद्भुतदर्शनम् ।
उवाचाधिरथिं शल्यः पुनस्तं युद्धदुर्मदम्  ॥ ०३७  ॥

अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः ।
निघ्नन्नमित्रान्कौन्तेयो यं यं त्वं परिपृच्छसि  ॥ ०३८  ॥

श्रूयते तुमुलः शब्दो रथनेमिस्वनो महान् ।
एष रेणुः समुद्भूतो दिवमावृत्य तिष्ठति  ॥ ०३९  ॥

चक्रनेमिप्रणुन्ना च कम्पते कर्ण मेदिनी ।
प्रवात्येष महावायुरभितस्तव वाहिनीम्  ॥ ०४०  ॥

क्रव्यादा व्याहरन्त्येते मृगाः कुर्वन्ति भैरवम्  ॥ ०४०  ॥

पश्य कर्ण महाघोरं भयदं लोमहर्षणम् ।
कबन्धं मेघसङ्काशं भानुमावृत्य संस्थितम्  ॥ ०४१  ॥

पश्य यूथैर्बहुविधैर्मृगाणां सर्वतोदिशम् ।
बलिभिर्दृप्तशार्दूलैरादित्योऽभिनिरीक्ष्यते  ॥ ०४२  ॥

पश्य कङ्कांश्च गृध्रांश्च समवेतान्सहस्रशः ।
स्थितानभिमुखान्घोरानन्योन्यमभिभाषतः  ॥ ०४३  ॥

सिताश्चाश्वाः समायुक्तास्तव कर्ण महारथे ।
प्रदराः प्रज्वलन्त्येते ध्वजश्चैव प्रकम्पते  ॥ ०४४  ॥

उदीर्यतो हयान्पश्य महाकायान्महाजवान् ।
प्लवमानान्दर्शनीयानाकाशे गरुडानिव  ॥ ०४५  ॥

ध्रुवमेषु निमित्तेषु भूमिमावृत्य पार्थिवाः ।
स्वप्स्यन्ति निहताः कर्ण शतशोऽथ सहस्रशः  ॥ ०४६  ॥

शङ्खानां तुमुलः शब्दः श्रूयते लोमहर्षणः ।
आनकानां च राधेय मृदङ्गानां च सर्वशः  ॥ ०४७  ॥

बाणशब्दान्बहुविधान्नराश्वरथनिस्वनान् ।
ज्यातलत्रेषुशब्दांश्च शृणु कर्ण महात्मनाम्  ॥ ०४८  ॥

हेमरूप्यप्रमृष्टानां वाससां शिल्पिनिर्मिताः ।
नानावर्णा रथे भान्ति श्वसनेन प्रकम्पिताः  ॥ ०४९  ॥

सहेमचन्द्रतारार्काः पताकाः किङ्किणीयुताः ।

पश्य कर्णार्जुनस्यैताः सौदामिन्य इवाम्बुदे ॥ ०५० ॥

ध्वजाः कणकणायन्ते वातेनाभिसमीरिताः ।
सपताका रथाश्चापि पाञ्चालानां महात्मनाम् ॥ ०५१ ॥

नागाश्वरथपत्त्यौघांस्तावकान्समभिघ्नतः ।
ध्वजाग्रं दृश्यते त्वस्य ज्याशब्दश्चापि श्रूयते ॥ ०५२ ॥

अद्य द्रष्टासि तं वीरं श्वेताश्वं कृष्णसारथिम् ।
निघ्नन्तं शात्रवान्संख्ये यं कर्ण परिपृच्छसि ॥ ०५३ ॥

अद्य तौ पुरुषव्याघ्रौ लोहिताक्षौ परंतपौ ।
वासुदेवार्जुनौ कर्ण द्रष्टास्येकरथस्थितौ ॥ ०५४ ॥

सारथिर्यस्य वार्ष्णेयो गाण्डीवं यस्य कार्मुकम् ।
तं चेद्धन्तासि राधेय त्वं नो राजा भविष्यसि ॥ ०५५ ॥

एष संशप्तकाहूतस्तानेवाभिमुखो गतः ।
करोति कदनं चैषां सङ्ग्रामे द्विषतां बली ॥ ०५६ ॥

इति ब्रुवाणं मद्रेशं कर्णः प्राहातिमन्युमान् ॥ ०५६ ॥

पश्य संशप्तकैः क्रुद्धैः सर्वतः समभिद्रुतः ।
एष सूर्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते ॥ ०५७ ॥

एतदन्तोऽर्जुनः शल्य निमग्नः शोकसागरे ॥ ०५७ ॥

शल्य उवाच ॥

वरुणं कोऽम्भसा हन्यादिन्धनेन च पावकम् ।
को वानिलं निगृह्णीयात्पिबेद्वा को महार्णवम् ॥ ०५८ ॥

ईदृग्रूपमहं मन्ये पार्थस्य युधि निग्रहम् ।
न हि शक्योऽर्जुनो जेतुं सेन्द्रैः सर्वैः सुरासुरैः ॥ ०५९ ॥

अथैवं परितोषस्ते वाचोक्त्वा सुमना भव ।
न स शक्यो युधा जेतुमन्यं कुरु मनोरथम् ॥ ०६० ॥

बाहुभ्यामुद्धरेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ ०६१ ॥

पश्य कुन्तीसुतं वीरं भीममक्लिष्टकारिणम् ।
प्रभासन्तं महाबाहुं स्थितं मेरुमिवाचलम् ॥ ०६२ ॥

अमर्षी नित्यसंरब्धश्चिरं वैरमनुस्मरन् ।
एष भीमो जयप्रेप्सुर्युधि तिष्ठति वीर्यवान् ॥ ०६३ ॥

एष धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः ।
तिष्ठत्यसुकरः संख्ये परैः परपुरञ्जयः ॥ ०६४ ॥

एतौ च पुरुषव्याघ्रावश्विनाविव सोदरौ ।
नकुलः सहदेवश्च तिष्ठतो युधि दुर्जयौ ॥ ०६५ ॥

दृश्यन्त एते कार्ष्णेयाः पञ्च पञ्चाचला इव ।
व्यवस्थिता योत्स्यमानाः सर्वेऽर्जुनसमा युधि ॥ ०६६ ॥

एते द्रुपदपुत्राश्च धृष्टद्युम्नपुरोगमाः ।
हीनाः सत्यजिता वीरास्तिष्ठन्ति परमौजसः ॥ ०६७ ॥

इति संवदतोरेव तयोः पुरुषसिंहयोः ।
ते सेने समसज्जेतां गङ्गायमुनवद्भृशम् ॥ ०६८ ॥

# अध्याय ०३२

धृतराष्ट्र उवाच ॥

तथा व्यूढेष्वनीकेषु संसक्तेषु च सञ्जय ।
संशप्तकान्कथं पार्थो गतः कर्णश्च पाण्डवान् ॥ ००१ ॥

एतद्विस्तरतो युद्धं प्रब्रूहि कुशलो ह्यसि ।
न हि तृप्यामि वीराणां शृण्वानो विक्रमान्रणे ॥ ००२ ॥

सञ्जय उवाच ॥

तत्स्थाने समवस्थाप्य प्रत्यमित्रं महाबलम् ।
अव्यूहतार्जुनो व्यूहं पुत्रस्य तव दुर्नये ॥ ००३ ॥

तत्सादिनागकलिलं पदातिरथसङ्कुलम् ।
धृष्टद्युम्नमुखैर्व्यूढमशोभत महद्बलम् ॥ ००४ ॥

पारावतसवर्णाश्वश्चन्द्रादित्यसमद्युतिः ।
पार्षतः प्रबभौ धन्वी कालो विग्रहवानिव ॥ ००५ ॥

पार्षतं त्वभि संतस्थुर्द्रौपदेया युयुत्सवः ।
सानुगा भीमवपुषश्चन्द्रं तारागणा इव ॥ ००६ ॥

अथ व्यूढेष्वनीकेषु प्रेक्ष्य संशप्तकान्रणे ।
क्रुद्धोऽर्जुनोऽभिदुद्राव व्याक्षिपन्गाण्डिवं धनुः ॥ ००७ ॥

अथ संशप्तकाः पार्थमभ्यधावन्वधैषिणः ।
विजये कृतसङ्कल्पा मृत्युं कृत्वा निवर्तनम्  ॥ ००८  ॥

तदश्वसंघबहुलं मत्तनागरथाकुलम् ।
पत्तिमच्छूरवीरौघैर्द्रुतमर्जुनमाद्रवत्  ॥ ००९  ॥

स संप्रहारस्तुमुलस्तेषामासीत्किरीटिना ।
तस्यैव नः श्रुतो यादृङ्निवातकवचैः सह  ॥ ०१०  ॥

रथानश्वान्ध्वजान्नागान्पत्तीन्रथपतीनपि ।
इषून्धनूंषि खड्गांश्च चक्राणि च परश्वधान्  ॥ ०११  ॥

सायुधानुद्यतान्बाहूनुद्यतान्यायुधानि च ।
चिच्छेद द्विषतां पार्थः शिरांसि च सहस्रशः  ॥ ०१२  ॥

तस्मिन्सैन्ये महावर्ते पातालावर्तसंनिभे ।
निमग्नं तं रथं मत्वा नेदुः संशप्तका मुदा  ॥ ०१३  ॥

स पुरस्तादरीन्हत्वा पश्चार्धेनोत्तरेण च ।
दक्षिणेन च बीभत्सुः क्रुद्धो रुद्रः पशूनिव  ॥ ०१४  ॥

अथ पाञ्चालचेदीनां सृञ्जयानां च मारिष ।
त्वदीयैः सह सङ्ग्राम आसीत्परमदारुणः  ॥ ०१५  ॥

कृपश्च कृतवर्मा च शकुनिश्चापि सौबलः ।
हृष्टसेनाः सुसंरब्धा रथानीकैः प्रहारिणः  ॥ ०१६  ॥

कोसलैः काशिमत्स्यैश्च कारूषैः केकयैरपि ।
शूरसेनैः शूरवीरैर्युयुधुर्युद्धदुर्मदाः  ॥ ०१७  ॥

तेषामन्तकरं युद्धं देहपाप्मप्रणाशनम् ।

शूद्रविङ्क्षत्रवीराणां धर्म्यं स्वर्ग्यं यशस्करम् ॥ ०१८ ॥

दुर्योधनोऽपि सहितो भ्रातृभिर्भरतर्षभ ।
गुप्तः कुरुप्रवीरैश्च मद्राणां च महारथैः ॥ ०१९ ॥

पाण्डवैः सहपाञ्चालैश्चेदिभिः सात्यकेन च ।
युध्यमानं रणे कर्णं कुरुवीरोऽभ्यपालयत् ॥ ०२० ॥

कर्णोऽपि निशितैर्बाणैर्विनिहत्य महाचमूम् ।
प्रमृद्य च रथश्रेष्ठान्युधिष्ठिरमपीडयत् ॥ ०२१ ॥

विपत्रायुधदेहासून्कृत्वा शत्रून्सहस्रशः ।
युक्त्वा स्वर्गयशोभ्यां च स्वेभ्यो मुदमुदावहत् ॥ ०२२ ॥

धृतराष्ट्र उवाच ॥

यत्तत्प्रविश्य पार्थानां सेनां कुर्वञ्जनक्षयम् ।
कर्णो राजानमभ्यर्च्छत्तन्ममाचक्ष्व सञ्जय ॥ ०२३ ॥

के च प्रवीराः पार्थानां युधि कर्णमवारयन् ।
कांश्च प्रमथ्याधिरथिर्युधिष्ठिरमपीडयत् ॥ ०२४ ॥

सञ्जय उवाच ॥

धृष्टद्युम्नमुखान्पार्थान्दृष्ट्वा कर्णो व्यवस्थितान् ।
समभ्यधावत्त्वरितः पाञ्चालाञ्शत्रुकर्शनः ॥ ०२५ ॥

तं तूर्णमभिधावन्तं पाञ्चाला जितकाशिनः ।
प्रत्युद्ययुर्महाराज हंसा इव महार्णवम् ॥ ०२६ ॥

ततः शङ्खसहस्राणां निस्वनो हृदयङ्गमः ।

प्रादुरासीदुभयतो भेरीशब्दश्च दारुणः ॥ ०२७ ॥

नानावादित्रनादश्च द्विपाश्वरथनिस्वनः ।
सिंहनादश्च वीराणामभवद्दारुणस्तदा ॥ ०२८ ॥

साद्रिद्रुमार्णवा भूमिः सवाताम्बुदमम्बरम् ।
सार्केन्दुग्रहनक्षत्रा द्यौश्च व्यक्तं व्यघूर्णत ॥ ०२९ ॥

अति भूतानि तं शब्दं मेनिरेऽति च विव्यथुः ।
यानि चाप्लवसत्त्वानि प्रायस्तानि मृतानि च ॥ ०३० ॥

अथ कर्णो भृशं क्रुद्धः शीघ्रमस्त्रमुदीरयन् ।
जघान पाण्डवीं सेनामासुरीं मघवानिव ॥ ०३१ ॥

स पाण्डवरथांस्तूर्णं प्रविश्य विसृजञ्शरान् ।
प्रभद्रकाणां प्रवरानहनत्सप्तसप्ततिम् ॥ ०३२ ॥

ततः सुपुङ्खैर्निशितै रथश्रेष्ठो रथेषुभिः ।
अवधीत्पञ्चविंशत्या पाञ्चालान्पञ्चविंशतिम् ॥ ०३३ ॥

सुवर्णपुङ्खैर्नाराचैः परकायविदारणैः ।
चेदिकानवधीद्वीरः शतशोऽथ सहस्रशः ॥ ०३४ ॥

तं तथा समरे कर्म कुर्वाणमतिमानुषम् ।
परिवव्रुर्महाराज पाञ्चालानां रथव्रजाः ॥ ०३५ ॥

ततः संधाय विशिखान्पञ्च भारत दुःसहान् ।
पाञ्चालानवधीत्पञ्च कर्णो वैकर्तनो वृषः ॥ ०३६ ॥

भानुदेवं चित्रसेनं सेनाबिन्दुं च भारत ।
तपनं शूरसेनं च पाञ्चालानवधीद्रणे ॥ ०३७ ॥

पाञ्चालेषु च शूरेषु वध्यमानेषु सायकैः ।
हाहाकारो महानासीत्पाञ्चालानां महाहवे ॥ ०३८ ॥

तेषां सङ्कीर्यमाणानां हाहाकारकृता दिशः ।
पुनरेव च तान्कर्णो जघानाशु पतत्रिभिः ॥ ०३९ ॥

चक्ररक्षौ तु कर्णस्य पुत्रौ मारिष दुर्जयौ ।
सुषेणः सत्यसेनश्च त्यक्त्वा प्राणानयुध्यताम् ॥ ०४० ॥

पृष्ठगोपस्तु कर्णस्य ज्येष्ठः पुत्रो महारथः ।
वृषसेनः स्वयं कर्णं पृष्ठतः पर्यपालयत् ॥ ०४१ ॥

धृष्टद्युम्नः सात्यकिश्च द्रौपदेया वृकोदरः ।
जनमेजयः शिखण्डी च प्रवीराश्च प्रभद्रकाः ॥ ०४२ ॥

चेदिकेकयपाञ्चाला यमौ मत्स्याश्च दंशिताः ।
समभ्यधावन्राधेयं जिघांसन्तः प्रहारिणः ॥ ०४३ ॥

त एनं विविधैः शस्त्रैः शरधाराभिरेव च ।
अभ्यवर्षन्विमृद्नन्तः प्रावृषीवाम्बुदा गिरिम् ॥ ०४४ ॥

पितरं तु परीप्सन्तः कर्णपुत्राः प्रहारिणः ।
त्वदीयाश्चापरे राजन्वीरा वीरानवारयन् ॥ ०४५ ॥

सुषेणो भीमसेनस्य छित्त्वा भल्लेन कार्मुकम् ।
नाराचैः सप्तभिर्विद्ध्वा हृदि भीमं ननाद ह ॥ ०४६ ॥

अथान्यद्धनुरादाय सुदृढं भीमविक्रमः ।
सज्यं वृकोदरः कृत्वा सुषेणस्याच्छिनद्धनुः ॥ ०४७ ॥

विव्याध चैनं नवभिः क्रुद्धो नृत्यन्निवेषुभिः ।
कर्णं च तूर्णं विव्याध त्रिसप्तत्या शितैः शरैः ॥ ०४८ ॥

सत्यसेनं च दशभिः साश्वसूतध्वजायुधम् ।
पश्यतां सुहृदां मध्ये कर्णपुत्रमपातयत् ॥ ०४९ ॥

क्षुरप्रणुन्नं तत्तस्य शिरश्चन्द्रनिभाननम् ।
शुभदर्शनमेवासीन्नालभ्रष्टमिवाम्बुजम् ॥ ०५० ॥

हत्वा कर्णसुतं भीमस्तावकान्पुनरार्दयत् ।
कृपहार्दिक्ययोश्छित्त्वा चापे तावप्यथार्दयत् ॥ ०५१ ॥

दुःशासनं त्रिभिर्विद्ध्वा शकुनिं षड्भिरायसैः ।
उलूकं च पतत्रिं च चकार विरथावुभौ ॥ ०५२ ॥

हे सुषेण हतोऽसीति ब्रुवन्नादत्त सायकम् ।
तमस्य कर्णश्चिच्छेद त्रिभिश्चैनमताडयत् ॥ ०५३ ॥

अथान्यमपि जग्राह सुपर्वाणं सुतेजनम् ।
सुषेणायासृजद्भीमस्तमप्यस्याच्छिनद्वृषः ॥ ०५४ ॥

पुनः कर्णस्त्रिसप्तत्या भीमसेनं रथेषुभिः ।
पुत्रं परीप्सन्विव्याध क्रूरं क्रूरैर्जिघांसया ॥ ०५५ ॥

सुषेणस्तु धनुर्गृह्य भारसाधनमुत्तमम् ।
नकुलं पञ्चभिर्बाणैर्बाह्वोरुरसि चार्दयत् ॥ ०५६ ॥

नकुलस्तं तु विंशत्या विद्ध्वा भारसहैर्दृढैः ।
ननाद बलवन्नादं कर्णस्य भयमादधत् ॥ ०५७ ॥

तं सुषेणो महाराज विद्ध्वा दशभिराशुगैः ।

चिच्छेद च धनुः शीघ्रं क्षुरप्रेण महारथः ॥ ०५८ ॥

अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः ।
सुषेणं बहुभिर्बाणैर्वारयामास संयुगे ॥ ०५९ ॥

स तु बाणैर्दिशो राजन्नाच्छाद्य परवीरहा ।
आजघ्ने सारथिं चास्य सुषेणं च ततस्त्रिभिः ॥ ०६० ॥

चिच्छेद चास्य सुदृढं धनुर्भल्लैस्त्रिभिस्त्रिधा ॥ ०६० ॥

अथान्यद्धनुरादाय सुषेणः क्रोधमूर्छितः ।
अविध्यन्नकुलं षष्ट्या सहदेवं च सप्तभिः ॥ ०६१ ॥

तद्युद्धं सुमहद्घोरमासीद्देवासुरोपमम् ।
निघ्नतां सायकैस्तूर्णमन्योन्यस्य वधं प्रति ॥ ०६२ ॥

सात्यकिर्वृषसेनस्य हत्वा सूतं त्रिभिः शरैः ।
धनुश्चिच्छेद भल्लेन जघानाश्वांश्च सप्तभिः ॥ ०६३ ॥

ध्वजमेकेषुणोन्मथ्य त्रिभिस्तं हृद्यताडयत् ॥ ०६३ ॥

अथावसन्नः स्वरथे मुहूर्तात्पुनरुत्थितः ।
अथो जिघांसुः शैनेयं खड्गचर्मभृदभ्ययात् ॥ ०६४ ॥

तस्य चाप्लवतः शीघ्रं वृषसेनस्य सात्यकिः ।
वराहकर्णैर्दशभिरविध्यदसिचर्मणी ॥ ०६५ ॥

दुःशासनस्तु तं दृष्ट्वा विरथं व्यायुधं कृतम् ।
आरोप्य स्वरथे तूर्णमपोवाह रथान्तरम् ॥ ०६६ ॥

अथान्यं रथमास्थाय वृषसेनो महारथः ।

कर्णस्य युधि दुर्धर्षः पुनः पृष्ठमपालयत् ॥ ०६७ ॥

दुःशासनं तु शैनेयो नवैर्नवभिराशुगैः ।
विसूताश्वरथं कृत्वा ललाटे त्रिभिरार्पयत् ॥ ०६८ ॥

स त्वन्यं रथमास्थाय विधिवत्कल्पितं पुनः ।
युयुधे पाण्डुभिः सार्धं कर्णस्याप्याययन्बलम् ॥ ०६९ ॥

धृष्टद्युम्नस्ततः कर्णमविध्यद्दशभिः शरैः ।
द्रौपदेयास्त्रिसप्तत्या युयुधानस्तु सप्तभिः ॥ ०७० ॥

भीमसेनश्चतुःषष्ट्या सहदेवश्च पञ्चभिः ।
नकुलस्त्रिंशता बाणैः शतानीकश्च सप्तभिः ॥ ०७१ ॥

शिखण्डी दशभिर्वीरो धर्मराजः शतेन तु ॥ ०७१ ॥

एते चान्ये च राजेन्द्र प्रवीरा जयगृद्धिनः ।
अभ्यर्दयन्महेष्वासं सूतपुत्रं महामृधे ॥ ०७२ ॥

तान्सूतपुत्रो विशिखैर्दशभिर्दशभिः शितैः ।
रथे चारु चरन्वीरः प्रत्यविध्यदरिंदमः ॥ ०७३ ॥

तत्रास्त्रवीर्यं कर्णस्य लाघवं च महात्मनः ।
अपश्याम महाराज तदद्भुतमिवाभवत् ॥ ०७४ ॥

न ह्याददानं ददृशुः संदधानं च सायकान् ।
विमुञ्चन्तं च संरम्भाद्ददृशुस्ते महारथम् ॥ ०७५ ॥

द्यौर्वियद्भूर्दिशश्चाशु प्रणुन्ना निशितैः शरैः ।
अरुणाभ्रावृताकारं तस्मिन्देशे बभौ वियत् ॥ ०७६ ॥

नृत्यन्निव हि राधेयश्चापहस्तः प्रतापवान् ।
यैर्विद्धः प्रत्यविध्यत्तानेकैकं त्रिगुणैः शरैः ॥ ०७७ ॥

दशभिर्दशभिश्चैनान्पुनर्विद्ध्वा ननाद ह ।
साश्वसूतध्वजच्छत्रास्ततस्ते विवरं ददुः ॥ ०७८ ॥

तान्प्रमृद्नन्महेष्वासान्राधेयः शरवृष्टिभिः ।
राजानीकमसंबाधं प्राविशच्छत्रुकर्शनः ॥ ०७९ ॥

स रथांस्त्रिशतान्हत्वा चेदीनामनिवर्तिनाम् ।
राधेयो निशितैर्बाणैस्ततोऽभ्यार्च्छद्युधिष्ठिरम् ॥ ०८० ॥

ततस्ते पाण्डवा राजञ्शिखण्डी च ससात्यकिः ।
राधेयात्परिरक्षन्तो राजानं पर्यवारयन् ॥ ०८१ ॥

तथैव तावकाः सर्वे कर्णं दुर्वारणं रणे ।
यत्ताः सेनामहेष्वासाः पर्यरक्षन्त सर्वशः ॥ ०८२ ॥

नानावादित्रघोषाश्च प्रादुरासन्विशां पते ।
सिंहनादश्च सञ्जज्ञे शूराणामनिवर्तिनाम् ॥ ०८३ ॥

ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः ।
युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयम् ॥ ०८४ ॥

---

# अध्याय ०३३

सञ्जय उवाच ॥

विदार्य कर्णस्तां सेनां धर्मराजमुपाद्रवत् ।
रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितः ॥ ००१ ॥

नानायुधसहस्राणि प्रेषितान्यरिभिर्वृषः ।
छित्त्वा बाणशतैरुग्रैस्तानविध्यदसंभ्रमः ॥ ००२ ॥

निचकर्त शिरांस्येषां बाहूनूरूंश्च सर्वशः ।
ते हता वसुधां पेतुर्भग्नाश्चान्ये विदुद्रुवुः ॥ ००३ ॥

द्रविडान्ध्रनिषादास्तु पुनः सात्यकिचोदिताः ।
अभ्यर्दयञ्जिघांसन्तः पत्तयः कर्णमाहवे ॥ ००४ ॥

ते विबाहुशिरस्त्राणाः प्रहताः कर्णसायकैः ।
पेतुः पृथिव्यां युगपच्छिन्नं शालवनं यथा ॥ ००५ ॥

एवं योधशतान्याजौ सहस्राण्ययुतानि च ।
हतानीयुर्महीं देहैर्यशसापूरयन्दिशः ॥ ००६ ॥

अथ वैकर्तनं कर्णं रणे क्रुद्धमिवान्तकम् ।
रुरुधुः पाण्डुपाञ्चाला व्याधिं मन्त्रौषधैरिव ॥ ००७ ॥

स तान्प्रमृद्याभ्यपतत्पुनरेव युधिष्ठिरम् ।
मन्त्रौषधिक्रियातीतो व्याधिरत्युल्बणो यथा ॥ ००८ ॥

स राजगृद्धिभी रुद्धः पाण्डुपाञ्चालकेकयैः ।
नाशकत्तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा ॥ ००९ ॥

ततो युधिष्ठिरः कर्णमदूरस्थं निवारितम् ।
अब्रवीत्परवीरघ्नः क्रोधसंरक्तलोचनः ॥ ०१० ॥

कर्ण कर्ण वृथादृष्टे सूतपुत्र वचः शृणु ।
सदा स्पर्धसि सङ्ग्रामे फल्गुनेन यशस्विना ॥ ०११ ॥

तथास्मान्बाधसे नित्यं धार्तराष्ट्रमते स्थितः ॥ ०११ ॥

यद्बलं यच्च ते वीर्यं प्रद्वेषो यश्च पाण्डुषु ।
तत्सर्वं दर्शयस्वाद्य पौरुषं महदास्थितः ॥ ०१२ ॥

युद्धश्रद्धां स तेऽद्याहं विनेष्यामि महाहवे ॥ ०१२ ॥

एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्तदा ।
सुवर्णपुङ्खैर्दशभिर्विव्याधायस्मयैः शितैः ॥ ०१३ ॥

तं सूतपुत्रो नवभिः प्रत्यविध्यदरिंदमः ।
वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत ॥ ०१४ ॥

ततः क्षुराभ्यां पाञ्चाल्यौ चक्ररक्षौ महात्मनः ।
जघान समरे शूरः शरैः संनतपर्वभिः ॥ ०१५ ॥

तावुभौ धर्मराजस्य प्रवीरौ परिपार्श्वतः ।
रथाभ्याशे चकाशेते चन्द्रस्येव पुनर्वसू ॥ ०१६ ॥

युधिष्ठिरः पुनः कर्णमविध्यत्त्रिंशता शरैः ।
सुषेणं सत्यसेनं च त्रिभिस्त्रिभिरताडयत् ॥ ०१७ ॥

शल्यं नवत्या विव्याध त्रिसप्तत्या च सूतजम् ।
तांश्चास्य गोप्तॄन्विव्याध त्रिभिस्त्रिभिरजिह्मगैः ॥ ०१८ ॥

ततः प्रहस्याधिरथिर्विधुन्वानः स कार्मुकम् ।
भित्त्वा भल्लेन राजानं विद्ध्वा षष्ट्यानदन्मुदा ॥ ०१९ ॥

ततः प्रवीराः पाण्डूनामभ्यधावन्युधिष्ठिरम् ।
सूतपुत्रात्परीप्सन्तः कर्णमभ्यर्दयञ्शरैः ॥ ०२० ॥

सात्यकिश्चेकितानश्च युयुत्सुः पाण्ड्य एव च ।
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ ०२१ ॥

यमौ च भीमसेनश्च शिशुपालस्य चात्मजः ।
कारूषा मत्स्यशेषाश्च केकयाः काशिकोसलाः ॥ ०२२ ॥

एते च त्वरिता वीरा वसुषेणमवारयन् ॥ ०२२ ॥

जनमेजयश्च पाञ्चाल्यः कर्णं विव्याध सायकैः ।
वराहकर्णैर्नाराचैर्नालीकैर्निशितैः शरैः ॥ ०२३ ॥

वत्सदन्तैर्विपाठैश्च क्षुरप्रैश्चटकामुखैः ॥ ०२३ ॥

नानाप्रहरणैश्चोग्रै रथहस्त्यश्वसादिनः ।
सर्वतोऽभ्याद्रवन्कर्णं परिवार्य जिघांसया ॥ ०२४ ॥

स पाण्डवानां प्रवरैः सर्वतः समभिद्रुतः ।
उदैरयद्ब्राह्ममस्त्रं शरैः संपूरयन्दिशः ॥ ०२५ ॥

ततः शरमहाज्वालो वीर्योष्मा कर्णपावकः ।
निर्दहन्पाण्डववनं चारु पर्यचरद्रणे ॥ ०२६ ॥

स संवार्य महास्त्राणि महेष्वासो महात्मनाम् ।
प्रहस्य पुरुषेन्द्रस्य शरैश्चिच्छेद कार्मुकम् ॥ ०२७ ॥

ततः संधाय नवतिं निमेषान्नतपर्वणाम् ।
बिभेद कवचं राज्ञो रणे कर्णः शितैः शरैः ॥ ०२८ ॥

तद्वर्म हेमविकृतं रराज निपतत्तदा ।
सविद्युदभ्रं सवितुः शिष्टं वातहतं यथा ॥ ०२९ ॥

तदङ्गं पुरुषेन्द्रस्य भ्रष्टवर्म व्यरोचत ।
रत्नैरलङ्कृतं दिव्यैर्व्यभ्रं निशि यथा नभः ॥ ०३० ॥

स विवर्मा शरैः पार्थो रुधिरेण समुक्षितः ।
क्रुद्धः सर्वायसीं शक्तिं चिक्षेपाधिरथिं प्रति ॥ ०३१ ॥

तां ज्वलन्तीमिवाकाशे शरैश्चिच्छेद सप्तभिः ।
सा छिन्ना भूमिमपतन्महेष्वासस्य सायकैः ॥ ०३२ ॥

ततो बाह्वोर्ललाटे च हृदि चैव युधिष्ठिरः ।
चतुर्भिस्तोमरैः कर्णं ताडयित्वा मुदानदत् ॥ ०३३ ॥

उद्भिन्नरुधिरः कर्णः क्रुद्धः सर्प इव श्वसन् ।
ध्वजं चिच्छेद भल्लेन त्रिभिर्विव्याध पाण्डवम् ॥ ०३४ ॥

इषुधी चास्य चिच्छेद रथं च तिलशोऽच्छिनत् ॥ ०३४ ॥

एवं पार्थो व्यपायात्स निहतप्रार्ष्टिसारथिः ।
अशक्नुवन्प्रमुखतः स्थातुं कर्णस्य दुर्मनाः ॥ ०३५ ॥

तमभिद्रुत्य राधेयः स्कन्धं संस्पृश्य पाणिना ।
अब्रवीत्प्रहसन्राजन्कुत्सयन्निव पाण्डवम् ॥ ०३६ ॥

कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः ।
प्रजह्यात्समरे शत्रून्प्राणान्रक्षन्महाहवे ॥ ०३७ ॥

न भवान्क्षत्रधर्मेषु कुशलोऽसीति मे मतिः ।
ब्राह्मे बले भवान्युक्तः स्वाध्याये यज्ञकर्मणि ॥ ०३८ ॥

मा स्म युध्यस्व कौन्तेय मा च वीरान्समासदः ।
मा चैनानप्रियं ब्रूहि मा च व्रज महारणम्  ॥ ०३९  ॥

एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः ।
न्यहनत्पाण्डवीं सेनां वज्रहस्त इवासुरीम्  ॥ ०४०  ॥

ततः प्रायाद्द्रुतं राजन्क्रीडन्निव जनेश्वरः  ॥ ०४०  ॥

अथ प्रयान्तं राजानमन्वयुस्ते तदाच्युतम् ।
चेदिपाण्डवपाञ्चालाः सात्यकिश्च महारथः  ॥ ०४१  ॥

द्रौपदेयास्तथा शूरा माद्रीपुत्रौ च पाण्डवौ  ॥ ०४१  ॥

ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखम् ।
कुरुभिः सहितो वीरैः पृष्ठगैः पृष्ठमन्वयात्  ॥ ०४२  ॥

शङ्खभेरीनिनादैश्च कार्मुकाणां च निस्वनैः ।
बभूव धार्तराष्ट्राणां सिंहनादरवस्तदा  ॥ ०४३  ॥

युधिष्ठिरस्तु कौरव्य रथमारुह्य सत्वरः ।
श्रुतकीर्तेर्महाराज दृष्टवान्कर्णविक्रमम्  ॥ ०४४  ॥

काल्यमानं बलं दृष्ट्वा धर्मराजो युधिष्ठिरः ।
तान्योधानब्रवीत्क्रुद्धो हतैनं वै सहस्रशः  ॥ ०४५  ॥

ततो राज्ञाभ्यनुज्ञाताः पाण्डवानां महारथाः ।
भीमसेनमुखाः सर्वे पुत्रांस्ते प्रत्युपाद्रवन्  ॥ ०४६  ॥

अभवत्तुमुलः शब्दो योधानां तत्र भारत ।
हस्त्यश्वरथपत्तीनां शस्त्राणां च ततस्ततः  ॥ ०४७  ॥

उत्तिष्ठत प्रहरत प्रैताभिपततेति च ।
इति ब्रुवाणा अन्योन्यं जघ्नुर्योधा रणाजिरे ॥ ०४८ ॥

अभ्रच्छायेव तत्रासीच्छरवृष्टिभिरम्बरे ।
समावृत्तैर्नरवरैर्निघ्नद्भिरितरेतरम् ॥ ०४९ ॥

विपताकाध्वजच्छत्रा व्यश्वसूतायुधा रणे ।
व्यङ्गाङ्गावयवाः पेतुः क्षितौ क्षीणा हतेश्वराः ॥ ०५० ॥

प्रवराणीव शैलानां शिखराणि द्विपोत्तमाः ।
सारोहा निहताः पेतुर्वज्रभिन्ना इवाद्रयः ॥ ०५१ ॥

छिन्नभिन्नविपर्यस्तैर्वर्मालङ्कारविग्रहैः ।
सारोहास्तुरगाः पेतुर्हतवीराः सहस्रशः ॥ ०५२ ॥

विप्रविद्धायुधाङ्गाश्च द्विरदाश्वरथैर्हताः ।
प्रतिवीरैश्च संमर्दे पत्तिसंघाः सहस्रशः ॥ ०५३ ॥

विशालायतताम्राक्षैः पद्मेन्दुसदृशाननैः ।
शिरोभिर्युद्धशौण्डानां सर्वतः संस्तृता मही ॥ ०५४ ॥

तथा तु वितते व्योम्नि निस्वनं शुश्रुवुर्जनाः ।
विमानैरप्सरःसंघैर्गीतवादित्रनिस्वनैः ॥ ०५५ ॥

हतान्कृत्तानभिमुखान्वीरान्वीरैः सहस्रशः ।
आरोप्यारोप्य गच्छन्ति विमानेष्वप्सरोगणाः ॥ ०५६ ॥

तद्दृष्ट्वा महदाश्चर्यं प्रत्यक्षं स्वर्गलिप्सया ।
प्रहृष्टमनसः शूराः क्षिप्रं जग्मुः परस्परम् ॥ ०५७ ॥

रथिनो रथिभिः सार्धं चित्रं युयुधुराहवे ।
पत्तयः पत्तिभिर्नागा नागैः सह हयैर्हयाः ॥ ०५८ ॥

एवं प्रवृत्ते सङ्ग्रामे गजवाजिजनक्षये ।
सैन्ये च रजसा व्याप्ते स्वे स्वाञ्जघ्नुः परे परान् ॥ ०५९ ॥

कचाकचि बभौ युद्धं दन्तादन्ति नखानखि ।
मुष्टियुद्धं नियुद्धं च देहपाप्मविनाशनम् ॥ ०६० ॥

तथा वर्तति सङ्ग्रामे गजवाजिजनक्षये ।
नराश्वगजदेहेभ्यः प्रसृता लोहितापगा ॥ ०६१ ॥

नराश्वगजदेहान्सा व्युवाह पतितान्बहून् ॥ ०६१ ॥

नराश्वगजसंबाधे नराश्वगजसादिनाम् ।
लोहितोदा महाघोरा नदी लोहितकर्दमा ॥ ०६२ ॥

नराश्वगजदेहान्सा वहन्ती भीरुभीषणी ॥ ०६२ ॥

तस्याः परमपारं च व्रजन्ति विजयैषिणः ।
गाधेन च प्लवन्तश्च निमज्ज्योन्मज्ज्य चापरे ॥ ०६३ ॥

ते तु लोहितदिग्धाङ्गा रक्तवर्मायुधाम्बराः ।
सस्नुस्तस्यां पपुश्चासृङ्मम्लुश्च भरतर्षभ ॥ ०६४ ॥

रथानश्वान्नरान्नागानायुधाभरणानि च ।
वसनान्यथ वर्माणि हन्यमानान्हतानपि ॥ ०६५ ॥

भूमिं खं द्यां दिशश्चैव प्रायः पश्याम लोहितम् ॥ ०६५ ॥

लोहितस्य तु गन्धेन स्पर्शेन च रसेन च ।

रूपेण चातिरिक्तेन शब्देन च विसर्पता ॥ ०६६ ॥

विषादः सुमहानासीत्प्रायः सैन्यस्य भारत ॥ ०६६ ॥

तत्तु विप्रहतं सैन्यं भीमसेनमुखैस्तव ।
भूयः समाद्रवन्वीराः सात्यकिप्रमुखा रथाः ॥ ०६७ ॥

तेषामापततां वेगमविषह्य महात्मनाम् ।
पुत्राणां ते महत्सैन्यमासीद्राजन्पराङ्मुखम् ॥ ०६८ ॥

तत्प्रकीर्णरथाश्वेभं नरवाजिसमाकुलम् ।
विध्वस्तचर्मकवचं प्रविद्धायुधकार्मुकम् ॥ ०६९ ॥

व्यद्रवत्तावकं सैन्यं लोड्यमानं समन्ततः ।
सिंहार्दितं महारण्ये यथा गजकुलं तथा ॥ ०७० ॥

---

# अध्याय ०३४

सञ्जय उवाच ॥

तानभिद्रवतो दृष्ट्वा पाण्डवांस्तावकं बलम् ।
क्रोशतस्तव पुत्रस्य न स्म राजन्न्यवर्तत ॥ ००१ ॥

ततः पक्षात्प्रपक्षाच्च प्रपक्षैश्चापि दक्षिणात् ।
उदस्तशस्त्राः कुरवो भीममभ्यद्रवन्रणे ॥ ००२ ॥

कर्णोऽपि दृष्ट्वा द्रवतो धार्तराष्ट्रान्पराङ्मुखान् ।
हंसवर्णान्हयाग्र्यांस्तान्प्रैषीद्यत्र वृकोदरम् ॥ ००३ ॥

ते प्रेषिता महाराज शल्येनाहवशोभिना ।
भीमसेनरथं प्राप्य समसज्जन्त वाजिनः ॥ ००४ ॥

दृष्ट्वा कर्णं समायान्तं भीमः क्रोधसमन्वितः ।
मतिं दध्रे विनाशाय कर्णस्य भरतर्षभ ॥ ००५ ॥

सोऽब्रवीत्सात्यकिं वीरं धृष्टद्युम्नं च पार्षतम् ।
एनं रक्षत राजानं धर्मात्मानं युधिष्ठिरम् ॥ ००६ ॥

संशयान्महतो मुक्तं कथञ्चित्प्रेक्षतो मम ॥ ००६ ॥

अग्रतो मे कृतो राजा छिन्नसर्वपरिच्छदः ।
दुर्योधनस्य प्रीत्यर्थं राधेयेन दुरात्मना ॥ ००७ ॥

अन्तमद्य करिष्यामि तस्य दुःखस्य पार्षत ।
हन्ता वास्मि रणे कर्णं स वा मां निहनिष्यति ॥ ००८ ॥

सङ्ग्रामेण सुघोरेण सत्यमेतद्ब्रवीमि वः ॥ ००८ ॥

राजानमद्य भवतां न्यासभूतं ददामि वै ।
अस्य संरक्षणे सर्वे यतध्वं विगतज्वराः ॥ ००९ ॥

एवमुक्त्वा महाबाहुः प्रायादाधिरथिं प्रति ।
सिंहनादेन महता सर्वाः संनादयन्दिशः ॥ ०१० ॥

दृष्ट्वा त्वरितमायान्तं भीमं युद्धाभिनन्दिनम् ।
सूतपुत्रमथोवाच मद्राणामीश्वरो विभुः ॥ ०११ ॥

पश्य कर्ण महाबाहुं क्रुद्धं पाण्डवनन्दनम् ।
दीर्घकालार्जितं क्रोधं मोक्तुकामं त्वयि ध्रुवम् ॥ ०१२ ॥

ईदृशं नास्य रूपं मे दृष्टपूर्वं कदाचन ।
अभिमन्यौ हते कर्ण राक्षसे वा घटोत्कचे  ॥ ०१३  ॥

त्रैलोक्यस्य समस्तस्य शक्तः क्रुद्धो निवारणे ।
बिभर्ति यादृशं रूपं कालाग्निसदृशं शुभम्  ॥ ०१४  ॥

इति ब्रुवति राधेयं मद्राणामीश्वरे नृप ।
अभ्यवर्तत वै कर्णं क्रोधदीप्तो वृकोदरः  ॥ ०१५  ॥

तथागतं तु संप्रेक्ष्य भीमं युद्धाभिनन्दिनम् ।
अब्रवीद्वचनं शल्यं राधेयः प्रहसन्निव  ॥ ०१६  ॥

यदुक्तं वचनं मेऽद्य त्वया मद्रजनेश्वर ।
भीमसेनं प्रति विभो तत्सत्यं नात्र संशयः  ॥ ०१७  ॥

एष शूरश्च वीरश्च क्रोधनश्च वृकोदरः ।
निरपेक्षः शरीरे च प्राणतश्च बलाधिकः  ॥ ०१८  ॥

अज्ञातवासं वसता विराटनगरे तदा ।
द्रौपद्याः प्रियकामेन केवलं बाहुसंश्रयात्  ॥ ०१९  ॥

गूढभावं समाश्रित्य कीचकः सगणो हतः  ॥ ०१९  ॥

सोऽद्य सङ्ग्रामशिरसि संनद्धः क्रोधमूर्च्छितः ।
किङ्करोद्यतदण्डेन मृत्युनापि व्रजेद्रणम्  ॥ ०२०  ॥

चिरकालाभिलषितो ममायं तु मनोरथः ।
अर्जुनं समरे हन्यां मां वा हन्याद्धनञ्जयः  ॥ ०२१  ॥

स मे कदाचिदद्यैव भवेद्भीमसमागमात्  ॥ ०२१  ॥

निहते भीमसेने तु यदि वा विरथीकृते ।
अभियास्यति मां पार्थस्तन्मे साधु भविष्यति ॥ ०२२ ॥

अत्र यन्मन्यसे प्राप्तं तच्छीघ्रं संप्रधारय ॥ ०२२ ॥

एतच्छ्रुत्वा तु वचनं राधेयस्य महात्मनः ।
उवाच वचनं शल्यः सूतपुत्रं तथागतम् ॥ ०२३ ॥

अभियासि महाबाहो भीमसेनं महाबलम् ।
निरस्य भीमसेनं तु ततः प्राप्स्यसि फल्गुनम् ॥ ०२४ ॥

यस्ते कामोऽभिलषितश्चिरात्प्रभृति हृद्गतः ।
स वै संपत्स्यते कर्ण सत्यमेतद्ब्रवीमि ते ॥ ०२५ ॥

एवमुक्ते ततः कर्णः शल्यं पुनरभाषत ।
हन्ताहमर्जुनं संख्ये मां वा हन्ता धनञ्जयः ॥ ०२६ ॥

युद्धे मनः समाधाय याहि याहीत्यचोदयत् ॥ ०२६ ॥

ततः प्रायाद्रथेनाशु शल्यस्तत्र विशां पते ।
यत्र भीमो महेष्वासो व्यद्रावयत वाहिनीम् ॥ ०२७ ॥

ततस्तूर्यनिनादश्च भेरीणां च महास्वनः ।
उदतिष्ठत राजेन्द्र कर्णभीमसमागमे ॥ ०२८ ॥

भीमसेनोऽथ सङ्क्रुद्धस्तव सैन्यं दुरासदम् ।
नाराचैर्विमलैस्तीक्ष्णैर्दिशः प्राद्रावयद्बली ॥ ०२९ ॥

स संनिपातस्तुमुलो भीमरूपो विशां पते ।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ ०३० ॥

ततो मुहूर्ताद्राजेन्द्र पाण्डवः कर्णमाद्रवत् ॥ ०३० ॥

तमापतन्तं संप्रेक्ष्य कर्णो वैकर्तनो वृषः ।
आजघानोरसि क्रुद्धो नाराचेन स्तनान्तरे ॥ ०३१ ॥

पुनश्चैनममेयात्मा शरवर्षैरवाकिरत् ॥ ०३१ ॥

स विद्धः सूतपुत्रेण छादयामास पत्रिभिः ।
विव्याध निशितैः कर्ण नवभिर्नतपर्वभिः ॥ ०३२ ॥

तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिणा ।
अथ तं छिन्नधन्वानमभ्यविध्यत्स्तनान्तरे ॥ ०३३ ॥

नाराचेन सुतीक्ष्णेन सर्वावरणभेदिना ॥ ०३३ ॥

सोऽन्यत्कार्मुकमादाय सूतपुत्रं वृकोदरः ।
राजन्मर्मसु मर्मज्ञो विद्ध्वा सुनिशितैः शरैः ॥ ०३४ ॥

ननाद बलवन्नादं कम्पयन्निव रोदसी ॥ ०३४ ॥

तं कर्णः पञ्चविंशत्या नाराचानां समार्दयत् ।
मदोत्कटं वने दृप्तमुल्काभिरिव कुञ्जरम् ॥ ०३५ ॥

ततः सायकभिन्नाङ्गः पाण्डवः क्रोधमूर्च्छितः ।
संरम्भामर्षताम्राक्षः सूतपुत्रवधेच्छया ॥ ०३६ ॥

स कार्मुके महावेगं भारसाधनमुत्तमम् ।
गिरीणामपि भेत्तारं सायकं समयोजयत् ॥ ०३७ ॥

विकृष्य बलवच्चापमा कर्णादतिमारुतिः ।

तं मुमोच महेष्वासः क्रुद्धः कर्णजिघांसया ॥ ०३८ ॥

स विसृष्टो बलवता बाणो वज्राशनिस्वनः ।
अदारयद्रणे कर्णं वज्रवेग इवाचलम् ॥ ०३९ ॥

स भीमसेनाभिहतो सूतपुत्रः कुरूद्वह ।
निषसाद रथोपस्थे विसञ्ज्ञः पृतनापतिः ॥ ०४० ॥

ततो मद्राधिपो दृष्ट्वा विसञ्ज्ञं सूतनन्दनम् ।
अपोवाह रथेनाजौ कर्णमाहवशोभिनम् ॥ ०४१ ॥

ततः पराजिते कर्णे धार्तराष्ट्रीं महाचमूम् ।
व्यद्रावयद्भीमसेनो यथेन्द्रो दानवीं चमूम् ॥ ०४२ ॥

---

# अध्याय ०३५

धृतराष्ट्र उवाच ॥

सुदुष्करमिदं कर्म कृतं भीमेन सञ्जय ।
येन कर्णो महाबाहू रथोपस्थे निपातितः ॥ ००१ ॥

कर्णो ह्येको रणे हन्ता सृञ्जयान्पाण्डवैः सह ।
इति दुर्योधनः सूत प्राब्रवीन्मां मुहुर्मुहुः ॥ ००२ ॥

पराजितं तु राधेयं दृष्ट्वा भीमेन संयुगे ।
ततः परं किमकरोत्पुत्रो दुर्योधनो मम ॥ ००३ ॥

सञ्जय उवाच ॥

विभ्रान्तं प्रेक्ष्य राधेयं सूतपुत्रं महाहवे ।
महत्या सेनया राजन्सोदर्यान्समभाषत ॥ ००४ ॥

शीघ्रं गच्छत भद्रं वो राधेयं परिरक्षत ।
भीमसेनभयागाधे मज्जन्तं व्यसनार्णवे ॥ ००५ ॥

ते तु राज्ञा समादिष्टा भीमसेनजिघांसवः ।
अभ्यवर्तन्त सङ्क्रुद्धाः पतङ्गा इव पावकम् ॥ ००६ ॥

श्रुतायुर्दुर्धरः क्राथो विवित्सुर्विकटः समः ।
निषङ्गी कवची पाशी तथा नन्दोपनन्दकौ ॥ ००७ ॥

दुष्प्रधर्षः सुबाहुश्च वातवेगसुवर्चसौ ।
धनुर्ग्राहो दुर्मदश्च तथा सत्त्वसमः सहः ॥ ००८ ॥

एते रथैः परिवृता वीर्यवन्तो महाबलाः ।
भीमसेनं समासाद्य समन्तात्पर्यवारयन् ॥ ००९ ॥

ते व्यमुञ्चञ्शरव्रातान्नानालिङ्गान्समन्ततः ॥ ००९ ॥

स तैरभ्यर्द्यमानस्तु भीमसेनो महाबलः ।
तेषामापततां क्षिप्रं सुतानां ते नराधिप ॥ ०१० ॥

रथैः पञ्चाशता सार्धं पञ्चाशन्न्यहनद्रथान् ॥ ०१० ॥

विवित्सोस्तु ततः क्रुद्धो भल्लेनापाहरच्छिरः ।
सकुण्डलशिरस्त्राणं पूर्णचन्द्रोपमं तदा ॥ ०११ ॥

भीमेन च महाराज स पपात हतो भुवि ॥ ०११ ॥

तं दृष्ट्वा निहतं शूरं भ्रातरः सर्वतः प्रभो ।
अभ्यद्रवन्त समरे भीमं भीमपराक्रमम् ॥ ०१२ ॥

ततोऽपराभ्यां भल्लाभ्यां पुत्रयोस्ते महाहवे ।
जहार समरे प्राणान्भीमो भीमपराक्रमः ॥ ०१३ ॥

तौ धरामन्वपद्येतां वातरुग्णाविव द्रुमौ ।
विकटश्च समश्चोभौ देवगर्भसमौ नृप ॥ ०१४ ॥

ततस्तु त्वरितो भीमः क्राथं निन्ये यमक्षयम् ।
नाराचेन सुतीक्ष्णेन स हतो न्यपतद्भुवि ॥ ०१५ ॥

हाहाकारस्ततस्तीव्रः संबभूव जनेश्वर ।
वध्यमानेषु ते राजंस्तदा पुत्रेषु धन्विषु ॥ ०१६ ॥

तेषां संलुलिते सैन्ये भीमसेनो महाबलः ।
नन्दोपनन्दौ समरे प्रापयद्यमसादनम् ॥ ०१७ ॥

ततस्ते प्राद्रवन्भीताः पुत्रास्ते विह्वलीकृताः ।
भीमसेनं रणे दृष्ट्वा कालान्तकयमोपमम् ॥ ०१८ ॥

पुत्रांस्ते निहतान्दृष्ट्वा सूतपुत्रो महामनाः ।
हंसवर्णान्हयान्भूयः प्राहिणोद्यत्र पाण्डवः ॥ ०१९ ॥

ते प्रेषिता महाराज मद्रराजेन वाजिनः ।
भीमसेनरथं प्राप्य समसज्जन्त वेगिताः ॥ ०२० ॥

स संनिपातस्तुमुलो घोररूपो विशां पते ।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ ०२१ ॥

दृष्ट्वा मम महाराज तौ समेतौ महारथौ ।
आसीद्बुद्धिः कथं नूनमेतदद्य भविष्यति ॥ ०२२ ॥

ततो मुहूर्ताद्राजेन्द्र नातिकृच्छ्राद्धसन्निव ।
विरथं भीमकर्माणं भीमं कर्णश्चकार ह ॥ ०२३ ॥

विरथो भरतश्रेष्ठः प्रहसन्ननिलोपमः ।
गदाहस्तो महाबाहुरपतत्स्यन्दनोत्तमात् ॥ ०२४ ॥

नागान्सप्तशतान्राजन्नीषादन्तान्प्रहारिणः ।
व्यधमत्सहसा भीमः क्रुद्धरूपः परंतपः ॥ ०२५ ॥

दन्तवेष्टेषु नेत्रेषु कम्भेषु स कटेषु च ।
मर्मस्वपि च मर्मज्ञो निनदन्व्यधमद्भृशम् ॥ ०२६ ॥

ततस्ते प्राद्रवन्भीताः प्रतीपं प्रहिताः पुनः ।
महामात्रैस्तमावव्रुर्मेघा इव दिवाकरम् ॥ ०२७ ॥

तान्स सप्तशतान्नागान्सारोहायुधकेतनान् ।
भूमिष्ठो गदया जघ्ने शरन्मेघानिवानिलः ॥ ०२८ ॥

ततः सुबलपुत्रस्य नागानतिबलान्पुनः ।
पोथयामास कौन्तेयो द्वापञ्चाशतमाहवे ॥ ०२९ ॥

तथा रथशतं साग्रं पत्तींश्च शतशोऽपरान् ।
न्यहनत्पाण्डवो युद्धे तापयंस्तव वाहिनीम् ॥ ०३० ॥

प्रताप्यमानं सूर्येण भीमेन च महात्मना ।
तव सैन्यं सञ्चुकोच चर्म वह्निगतं यथा ॥ ०३१ ॥

ते भीमभयसंत्रस्तास्तावका भरतर्षभ ।

विहाय समरे भीमं दुद्रुवुर्वै दिशो दश ॥ ०३२ ॥

रथाः पञ्चशताश्चान्ये ह्रादिनश्चर्मवर्मिणः ।
भीममभ्यद्रवंस्तूर्णं शरपूगैः समन्ततः ॥ ०३३ ॥

तान्ससूतरथान्सर्वान्सपताकाध्वजायुधान् ।
पोथयामास गदया भीमो विष्णुरिवासुरान् ॥ ०३४ ॥

ततः शकुनिनिर्दिष्टाः सादिनः शूरसंमताः ।
त्रिसाहस्रा ययुर्भीमं शक्त्यृष्टिप्रासपाणयः ॥ ०३५ ॥

तान्प्रत्युद्गम्य यवनानश्वारोहान्वरारिहा ।
विचरन्विविधान्मार्गान्घातयामास पोथयन् ॥ ०३६ ॥

तेषामासीन्महाञ्शब्दस्ताडितानां च सार्वशः ।
असिभिश्छिद्यमानानां नडानामिव भारत ॥ ०३७ ॥

एवं सुबलपुत्रस्य त्रिसाहस्रान्हयोत्तमान् ।
हत्वान्यं रथमास्थाय क्रुद्धो राधेयमभ्ययात् ॥ ०३८ ॥

कर्णोऽपि समरे राजन्धर्मपुत्रमरिंदमम् ।
शरैः प्रच्छादयामास सारथिं चाप्यपातयत् ॥ ०३९ ॥

ततः संप्रद्रुतं संख्ये रथं दृष्ट्वा महारथः ।
अन्वधावत्किरन्बाणैः कङ्कपत्रैरजिह्मगैः ॥ ०४० ॥

राजानमभि धावन्तं शरैरावृत्य रोदसी ।
क्रुद्धः प्रच्छादयामास शरजालेन मारुतिः ॥ ०४१ ॥

संनिवृत्तस्ततस्तूर्णं राधेयः शत्रुकर्शनः ।
भीमं प्रच्छादयामास समन्तान्निशितैः शरैः ॥ ०४२ ॥

भीमसेनरथव्यग्रं कर्णं भारत सात्यकिः ।
अभ्यर्दयदमेयात्मा पार्ष्णिग्रहणकारणात् ॥ ०४३ ॥

अभ्यवर्तत कर्णस्तमर्दितोऽपि शरैर्भृशम् ॥ ०४३ ॥

तावन्योन्यं समासाद्य वृषभौ सर्वधन्विनाम् ।
विसृजन्तौ शरांश्चित्रान्विभ्राजेतां मनस्विनौ ॥ ०४४ ॥

ताभ्यां वियति राजेन्द्र विततं भीमदर्शनम् ।
क्रौञ्चपृष्ठारुणं रौद्रं बाणजालं व्यदृश्यत ॥ ०४५ ॥

नैव सूर्यप्रभां खं वा न दिशः प्रदिशः कुतः ।
प्राज्ञासिष्म वयं ताभ्यां शरैर्मुक्तैः सहस्रशः ॥ ०४६ ॥

मध्याह्ने तपतो राजन्भास्करस्य महाप्रभाः ।
हृताः सर्वाः शरौघैस्तैः कर्णमाधवयोस्तदा ॥ ०४७ ॥

सौबलं कृतवर्माणं द्रौणिमाधिरथिं कृपम् ।
संसक्तान्पाण्डवैर्दृष्ट्वा निवृत्ताः कुरवः पुनः ॥ ०४८ ॥

तेषामापततां शब्दस्तीव्र आसीद्विशां पते ।
उद्धूतानां यथा वृष्ट्या सागराणां भयावहः ॥ ०४९ ॥

ते सेने भृशसंविग्ने दृष्ट्वान्योन्यं महारणे ।
हर्षेण महता युक्ते परिगृह्य परस्परम् ॥ ०५० ॥

ततः प्रववृते युद्धं मध्यं प्राप्ते दिवाकरे ।
यादृशं न कदाचिद्धि दृष्टपूर्वं न च श्रुतम् ॥ ०५१ ॥

बलौघस्तु समासाद्य बलौघं सहसा रणे ।

उपासर्पत वेगेन जलौघ इव सागरम् ॥ ०५२ ॥

आसीन्निनादः सुमहान्बलौघानां परस्परम् ।
गर्जतां सागरौघाणां यथा स्यान्निस्वनो महान् ॥ ०५३ ॥

ते तु सेने समासाद्य वेगवत्यौ परस्परम् ।
एकीभावमनुप्राप्ते नद्याविव समागमे ॥ ०५४ ॥

ततः प्रववृते युद्धं घोररूपं विशां पते ।
कुरूणां पाण्डवानां च लिप्सतां सुमहद्यशः ॥ ०५५ ॥

कुरूणां गर्जतां तत्र अविच्छेदकृता गिरः ।
श्रूयन्ते विविधा राजन्नामान्युद्दिश्य भारत ॥ ०५६ ॥

यस्य यद्धि रणे न्यङ्गं पितृतो मातृतोऽपि वा ।
कर्मतः शीलतो वापि स तच्छ्रावयते युधि ॥ ०५७ ॥

तान्दृष्ट्वा समरे शूरांस्तर्जयानान्परस्परम् ।
अभवन्मे मती राजन्नैषामस्तीति जीवितम् ॥ ०५८ ॥

तेषां दृष्ट्वा तु क्रुद्धानां वपूंष्यमिततेजसाम् ।
अभवन्मे भयं तीव्रं कथमेतद्भविष्यति ॥ ०५९ ॥

ततस्ते पाण्डवा राजन्कौरवाश्च महारथाः ।
ततक्षुः सायकैस्तीक्ष्णैर्निघ्नन्तो हि परस्परम् ॥ ०६० ॥

# अध्याय ०३६

सञ्जय उवाच ॥

क्षत्रियास्ते महाराज परस्परवधैषिणः ।
अन्योन्यं समरे जघ्नुः कृतवैराः परस्परम् ॥ ००१ ॥

रथौघाश्च हयौघाश्च नरौघाश्च समन्ततः ।
गजौघाश्च महाराज संसक्ताः स्म परस्परम् ॥ ००२ ॥

गदानां परिघाणां च कणपानां च सर्पताम् ।
प्रासानां भिण्डिपालानां भुशुण्डीनां च सर्वशः ॥ ००३ ॥

संपातं चान्वपश्याम सङ्ग्रामे भृशदारुणे ।
शलभा इव संपेतुः समन्ताच्छरवृष्टयः ॥ ००४ ॥

नागा नागान्समासाद्य व्यधमन्त परस्परम् ।
हया हयांश्च समरे रथिनो रथिनस्तथा ॥ ००५ ॥

पत्तयः पत्तिसंघैश्च हयसंघैर्हयास्तथा ॥ ००५ ॥

पत्तयो रथमातङ्गान्रथा हस्त्यश्वमेव च ।
नागाश्च समरे त्र्यङ्गं ममृदुः शीघ्रगा नृप ॥ ००६ ॥

पततां तत्र शूराणां क्रोशतां च परस्परम् ।
घोरमायोधनं जज्ञे पशूनां वैशसं यथा ॥ ००७ ॥

रुधिरेण समास्तीर्णा भाति भारत मेदिनी ।
शक्रगोपगणाकीर्णा प्रावृषीव यथा धरा ॥ ००८ ॥

यथा वा वाससी शुक्ले महारजनरञ्जिते ।
बिभृयाद्युवतिः श्यामा तद्वदासीद्वसुंधरा ॥ ००९ ॥

मांसशोणितचित्रेव शातकौम्भमयीव च ॥ ००९ ॥

छिन्नानां चोत्तमाङ्गानां बाहूनां चोरुभिः सह ।
कुण्डलानां प्रविद्धानां भूषणानां च भारत ॥ ०१० ॥

निष्काणामधिसूत्राणां शरीराणां च धन्विनाम् ।
वर्मणां सपताकानां संघास्तत्रापतन्भुवि ॥ ०११ ॥

गजान्गजाः समासाद्य विषाणाग्रैरदारयन् ।
विषाणाभिहतास्ते च भ्राजन्ते द्विरदा यथा ॥ ०१२ ॥

रुधिरेणावसिक्ताङ्गा गैरिकप्रस्रवा इव ।
यथा भ्राजन्ति स्यन्दन्तः पर्वता धातुमण्डिताः ॥ ०१३ ॥

तोमरान्गजिभिर्मुक्तान्प्रतीपानास्थितान्बहून् ।
हस्तैर्विचेरुस्ते नागा बभञ्जुश्चापरे तथा ॥ ०१४ ॥

नाराचैश्छिन्नवर्माणो भ्राजन्ते स्म गजोत्तमाः ।
हिमागमे महाराज व्यभ्रा इव महीधराः ॥ ०१५ ॥

शरैः कनकपुङ्खैस्तु चिता रेजुर्गजोत्तमाः ।
उल्काभिः संप्रदीप्ताग्राः पर्वता इव मारिष ॥ ०१६ ॥

केचिदभ्याहता नागा नागैर्नगनिभा भुवि ।
निपेतुः समरे तस्मिन्पक्षवन्त इवाद्रयः ॥ ०१७ ॥

अपरे प्राद्रवन्नागाः शल्यार्ता व्रणपीडिताः ।
प्रतिमानैश्च कुम्भैश्च पेतुरुर्व्यां महाहवे ॥ ०१८ ॥

निषेदुः सिंहवच्चान्ये नदन्तो भैरवान्रवान् ।

मम्लुश्च बहवो राजंश्चुकूजुश्चापरे तथा ॥ ०१९ ॥

हयाश्च निहता बाणैः स्वर्णभाण्डपरिच्छदाः ।
निषेदुश्चैव मम्लुश्च बभ्रमुश्च दिशो दश ॥ ०२० ॥

अपरे कृष्यमाणाश्च विवेष्टन्तो महीतले ।
भावान्बहुविधांश्चक्रुस्ताडिताः शरतोमरैः ॥ ०२१ ॥

नरास्तु निहता भूमौ कूजन्तस्तत्र मारिष ।
दृष्ट्वा च बान्धवानन्ये पितृनन्ये पितामहान् ॥ ०२२ ॥

धावमानान्परांश्चैव दृष्ट्वान्ये तत्र भारत ।
गोत्रनामानि ख्यातानि शशंसुरितरेतरम् ॥ ०२३ ॥

तेषां छिन्ना महाराज भुजाः कनकभूषणाः ।
उद्वेष्टन्ते विवेष्टन्ते पतन्ते चोत्पतन्ति च ॥ ०२४ ॥

निपतन्ति तथा भूमौ स्फुरन्ति च सहस्रशः ।
वेगांश्चान्ये रणे चक्रुः स्फुरन्त इव पन्नगाः ॥ ०२५ ॥

ते भुजा भोगिभोगाभाश्चन्दनाक्ता विशां पते ।
लोहितार्द्रा भृशं रेजुस्तपनीयध्वजा इव ॥ ०२६ ॥

वर्तमाने तथा घोरे सङ्कुले सर्वतोदिशम् ।
अविज्ञाताः स्म युध्यन्ते विनिघ्नन्तः परस्परम् ॥ ०२७ ॥

भौमेन रजसा कीर्णे शस्त्रसंपातसङ्कुले ।
नैव स्वे न परे राजन्व्यज्ञायन्त तमोवृते ॥ ०२८ ॥

तथा तदभवद्युद्धं घोररूपं भयानकम् ।
शोणितोदा महानद्यः प्रसस्रुस्तत्र चासकृत् ॥ ०२९ ॥

शीर्षपाषाणसंछन्नाः केशशैवलशाद्वलाः ।
अस्थिसंघातसङ्कीर्णा धनुःशरवरोत्तमाः ॥ ०३० ॥

मांसकर्दमपङ्काश्च शोणितौघाः सुदारुणाः ।
नदीः प्रवर्तयामासुर्यमराष्ट्रविवर्धनीः ॥ ०३१ ॥

ता नद्यो घोररूपाश्च नयन्त्यो यमसादनम् ।
अवगाढा मज्जयन्त्यः क्षत्रस्याजनयन्भयम् ॥ ०३२ ॥

क्रव्यादानां नरव्याघ्र नर्दतां तत्र तत्र ह ।
घोरमायोधनं जज्ञे प्रेतराजपुरोपमम् ॥ ०३३ ॥

उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
नृत्यन्ति वै भूतगणाः संतृप्ता मांसशोणितैः ॥ ०३४ ॥

पीत्वा च शोणितं तत्र वसां पीत्वा च भारत ।
मेदोमज्जावसातृप्तास्तृप्ता मांसस्य चैव हि ॥ ०३५ ॥

धावमानाश्च दृश्यन्ते काकगृध्रबलास्तथा ॥ ०३५ ॥

शूरास्तु समरे राजन्भयं त्यक्त्वा सुदुस्त्यजम् ।
योधव्रतसमाख्याताश्चक्रुः कर्माण्यभीतवत् ॥ ०३६ ॥

शरशक्तिसमाकीर्णे क्रव्यादगणसङ्कुले ।
व्यचरन्त गणैः शूराः ख्यापयन्तः स्वपौरुषम् ॥ ०३७ ॥

अन्योन्यं श्रावयन्ति स्म नामगोत्राणि भारत ।
पितृनामानि च रणे गोत्रनामानि चाभितः ॥ ०३८ ॥

श्रावयन्तो हि बहवस्तत्र योधा विशां पते ।

अन्योन्यमवमृद्नन्तः शक्तितोमरपट्टिशैः ॥ ०३९ ॥

वर्तमाने तदा युद्धे घोररूपे सुदारुणे ।
व्यषीदत्कौरवी सेना भिन्ना नौरिव सागरे ॥ ०४० ॥

---

# अध्याय ०३७

सञ्जय उवाच ॥

वर्तमाने तदा युद्धे क्षत्रियाणां निमज्जने ।
गाण्डीवस्य महान्घोषः शुश्रुवे युधि मारिष ॥ ००१ ॥

संशप्तकानां कदनमकरोद्यत्र पाण्डवः ।
कोसलानां तथा राजन्नारायणबलस्य च ॥ ००२ ॥

संशप्तकास्तु समरे शरवृष्टिं समन्ततः ।
अपातयन्पार्थमूर्ध्नि जयगृद्धाः प्रमन्यवः ॥ ००३ ॥

तां वृष्टिं सहसा राजंस्तरसा धारयन्प्रभुः ।
व्यगाहत रणे पार्थो विनिघ्नन्रथिनां वरः ॥ ००४ ॥

निगृह्य तु रथानीकं कङ्कपत्रैः शिलाशितैः ।
आससाद रणे पार्थः सुशर्माणं महारथम् ॥ ००५ ॥

स तस्य शरवर्षाणि ववर्ष रथिनां वरः ।
तथा संशप्तकाश्चैव पार्थस्य समरे स्थिताः ॥ ००६ ॥

सुशर्मा तु ततः पार्थं विद्ध्वा नवभिराशुगैः ।

जनार्दनं त्रिभिर्बाणैरभ्यहन्दक्षिणे भुजे ॥ ००७ ॥

ततोऽपरेण भल्लेन केतुं विव्याध मारिष ॥ ००७ ॥

स वानरवरो राजन्विश्वकर्मकृतो महान् ।
ननाद सुमहन्नादं भीषयन्वै ननर्द च ॥ ००८ ॥

कपेस्तु निनदं श्रुत्वा संत्रस्ता तव वाहिनी ।
भयं विपुलमादाय निश्चेष्टा समपद्यत ॥ ००९ ॥

ततः सा शुशुभे सेना निश्चेष्टावस्थिता नृप ।
नानापुष्पसमाकीर्णं यथा चैत्ररथं वनम् ॥ ०१० ॥

प्रतिलभ्य ततः सञ्ज्ञां योधास्ते कुरुसत्तम ।
अर्जुनं सिषिचुर्बाणैः पर्वतं जलदा इव ॥ ०११ ॥

परिवव्रुस्तदा सर्वे पाण्डवस्य महारथम् ॥ ०११ ॥

ते हयान्रथचक्रे च रथेषाश्चापि भारत ।
निगृह्य बलवत्तूर्णं सिंहनादमथानदन् ॥ ०१२ ॥

अपरे जगृहुश्चैव केशवस्य महाभुजौ ।
पार्थमन्ये महाराज रथस्थं जगृहुर्मुदा ॥ ०१३ ॥

केशवस्तु तदा बाहू विधुन्वन्रणमूर्धनि ।
पातयामास तान्सर्वान्दुष्टहस्तीव हस्तिनः ॥ ०१४ ॥

ततः क्रुद्धो रणे पार्थः संवृतस्तैर्महारथैः ।
निगृहीतं रथं दृष्ट्वा केशवं चाप्यभिद्रुतम् ॥ ०१५ ॥

रथारूढांश्च सुबहून्पदातींश्चाप्यपातयत् ॥ ०१५ ॥

आसन्नांश्च ततो योधाञ्शरैरासन्नयोधिभिः ।
च्यावयामास समरे केशवं चेदमब्रवीत् ॥ ०१६ ॥

पश्य कृष्ण महाबाहो संशप्तकगणान्मया ।
कुर्वाणान्दारुणं कर्म वध्यमानान्सहस्रशः ॥ ०१७ ॥

रथबन्धमिमं घोरं पृथिव्यां नास्ति कश्चन ।
यः सहेत पुमा.ण्ल्लोके मदन्यो यदुपुङ्गव ॥ ०१८ ॥

इत्येवमुक्त्वा बीभत्सुर्देवदत्तमथाधमत् ।
पाञ्चजन्यं च कृष्णोऽपि पूरयन्निव रोदसी ॥ ०१९ ॥

तं तु शङ्खस्वनं श्रुत्वा संशप्तकवरूथिनी ।
सञ्चचाल महाराज वित्रस्ता चाभवद्भृशम् ॥ ०२० ॥

पदबन्धं ततश्चक्रे पाण्डवः परवीरहा ।
नागमस्त्रं महाराज संप्रोदीर्य मुहुर्मुहुः ॥ ०२१ ॥

यानुद्दिश्य रणे पार्थः पदबन्धं चकार ह ।
ते बद्धाः पदबन्धेन पाण्डवेन महात्मना ॥ ०२२ ॥

निश्चेष्टा अभवन्राजन्नश्मसारमया इव ॥ ०२२ ॥

निश्चेष्टांस्तु ततो योधानवधीत्पाण्डुनन्दनः ।
यथेन्द्रः समरे दैत्यांस्तारकस्य वधे पुरा ॥ ०२३ ॥

ते वध्यमानाः समरे मुमुचुस्तं रथोत्तमम् ।
आयुधानि च सर्वाणि विस्रष्टुमुपचक्रमुः ॥ ०२४ ॥

ततः सुशर्मा राजेन्द्र गृहीतां वीक्ष्य वाहिनीम् ।

सौपर्णमस्त्रं त्वरितः प्रादुश्चक्रे महारथः ॥ ०२५ ॥

ततः सुपर्णाः संपेतुर्भक्षयन्तो भुजङ्गमान् ।
ते वै विदुद्रुवुर्नागा दृष्ट्वा तान्खचरान्नृप ॥ ०२६ ॥

बभौ बलं तद्विमुक्तं पदबन्धाद्विशां पते ।
मेघवृन्दाद्यथा मुक्तो भास्करस्तापयन्प्रजाः ॥ ०२७ ॥

विप्रमुक्तास्तु ते योधाः फल्गुनस्य रथं प्रति ।
ससृजुर्बाणसंघांश्च शस्त्रसंघांश्च मारिष ॥ ०२८ ॥

तां महास्त्रमयीं वृष्टिं संछिद्य शरवृष्टिभिः ।
व्यवातिष्ठत्ततो योधान्वासविः परवीरहा ॥ ०२९ ॥

सुशर्मा तु ततो राजन्बाणेनानतपर्वणा ।
अर्जुनं हृदये विद्ध्वा विव्याधान्यैस्त्रिभिः शरैः ॥ ०३० ॥

स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ॥ ०३० ॥

प्रतिलभ्य ततः सञ्ज्ञां श्वेताश्वः कृष्णसारथिः ।
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे त्वरान्वितः ॥ ०३१ ॥

ततो बाणसहस्राणि समुत्पन्नानि मारिष ॥ ०३१ ॥

सर्वदिक्षु व्यदृश्यन्त सूदयन्तो नृप द्विपान् ।
हयान्रथांश्च समरे शस्त्रैः शतसहस्रशः ॥ ०३२ ॥

वध्यमाने ततः सैन्ये विपुला भीः समाविशत् ।
संशप्तकगणानां च गोपालानां च भारत ॥ ०३३ ॥

न हि कश्चित्पुमांस्तत्र योऽर्जुनं प्रत्ययुध्यत ॥ ०३३ ॥

पश्यतां तत्र वीराणामहन्यत महद्बलम् ।
हन्यमानमपश्यंश्च निश्चेष्टाः स्म पराक्रमे ॥ ०३४ ॥

अयुतं तत्र योधानां हत्वा पाण्डुसुतो रणे ।
व्यभ्राजत रणे राजन्विधूमोऽग्निरिव ज्वलन् ॥ ०३५ ॥

चतुर्दश सहस्राणि यानि शिष्टानि भारत ।
रथानामयुतं चैव त्रिसाहस्राश्च दन्तिनः ॥ ०३६ ॥

ततः संशप्तका भूयः परिवव्रुर्धनञ्जयम् ।
मर्तव्यमिति निश्चित्य जयं वापि निवर्तनम् ॥ ०३७ ॥

तत्र युद्धं महच्चासीत्तावकानां विशां पते ।
शूरेण बलिना सार्धं पाण्डवेन किरीटिना ॥ ०३८ ॥

---

# अध्याय ०३८

सञ्जय उवाच ॥

कृतवर्मा कृपो द्रौणिः सूतपुत्रश्च मारिष ।
उलूकः सौबलश्चैव राजा च सह सोदरैः ॥ ००१ ॥

सीदमानां चमूं दृष्ट्वा पाण्डुपुत्रभयार्दिताम् ।
समुज्जिहीर्षुर्वेगेन भिन्नां नावमिवार्णवे ॥ ००२ ॥

ततो युद्धमतीवासीन्मुहूर्तमिव भारत ।

भीरूणां त्रासजननं शूराणां हर्षवर्धनम्  ॥ ००३  ॥

कृपेण शरवर्षाणि विप्रमुक्तानि संयुगे ।
सृञ्जयाः शातयामासुः शलभानां व्रजा इव  ॥ ००४  ॥

शिखण्डी तु ततः क्रुद्धो गौतमं त्वरितो ययौ ।
ववर्ष शरवर्षाणि समन्तादेव ब्राह्मणे  ॥ ००५  ॥

कृपस्तु शरवर्षं तद्विनिहत्य महास्त्रवित् ।
शिखण्डिनं रणे क्रुद्धो विव्याध दशभिः शरैः  ॥ ००६  ॥

ततः शिखण्डी कुपीतः शरैः सप्तभिराहवे ।
कृपं विव्याध सुभृशं कङ्कपत्रैरजिह्मगैः  ॥ ००७  ॥

ततः कृपः शरैस्तीक्ष्णैः सोऽतिविद्धो महारथः ।
व्यश्वसूतरथं चक्रे पार्षतं तु द्विजोत्तमः  ॥ ००८  ॥

हताश्वात्तु ततो यानादवप्लुत्य महारथः ।
चर्मखड्गे च सङ्गृह्य सत्वरं ब्राह्मणं ययौ  ॥ ००९  ॥

तमापतन्तं सहसा शरैः संनतपर्वभिः ।
छादयामास समरे तदद्भुतमिवाभवत्  ॥ ०१०  ॥

तत्राद्भुतमपश्याम शिलानां प्लवनं यथा ।
निश्चेष्टो यद्रणे राजञ्शिखण्डी समतिष्ठत  ॥ ०११  ॥

कृपेण छादितं दृष्ट्वा नृपोत्तम शिखण्डिनम् ।
प्रत्युद्ययौ कृपं तूर्णं धृष्टद्युम्नो महारथः  ॥ ०१२  ॥

धृष्टद्युम्नं ततो यान्तं शारद्वतरथं प्रति ।
प्रतिजग्राह वेगेन कृतवर्मा महारथः  ॥ ०१३  ॥

युधिष्ठिरमथायान्तं शारद्वतरथं प्रति ।
सपुत्रं सहसेनं च द्रोणपुत्रो न्यवारयत् ॥ ०१४ ॥

नकुलं सहदेवं च त्वरमाणौ महारथौ ।
प्रतिजग्राह ते पुत्रः शरवर्षेण वारयन् ॥ ०१५ ॥

भीमसेनं करूषांश्च केकयान्सहसृञ्जयान् ।
कर्णो वैकर्तनो युद्धे वारयामास भारत ॥ ०१६ ॥

शिखण्डिनस्ततो बाणान्कृपः शारद्वतो युधि ।
प्राहिणोत्त्वरया युक्तो दिधक्षुरिव मारिष ॥ ०१७ ॥

ताञ्शरान्प्रेषितांस्तेन समन्ताद्धेमभूषणान् ।
चिच्छेद खड्गमाविध्य भ्रामयंश्च पुनः पुनः ॥ ०१८ ॥

शतचन्द्रं ततश्चर्म गौतमः पार्षतस्य ह ।
व्यधमत्सायकैस्तूर्णं तत उच्चुक्रुशुर्जनाः ॥ ०१९ ॥

स विचर्मा महाराज खड्गपाणिरुपाद्रवत् ।
कृपस्य वशमापन्नो मृत्योरास्यमिवातुरः ॥ ०२० ॥

शारद्वतशरैर्ग्रस्तं क्लिश्यमानं महाबलम् ।
चित्रकेतुसुतो राजन्सुकेतुस्त्वरितो ययौ ॥ ०२१ ॥

विकिरन्ब्राह्मणं युद्धे बहुभिर्निशितैः शरैः ।
अभ्यापतदमेयात्मा गौतमस्य रथं प्रति ॥ ०२२ ॥

दृष्ट्वाविषह्यं तं युद्धे ब्राह्मणं चरितव्रतम् ।
अपयातस्ततस्तूर्णं शिखण्डी राजसत्तम ॥ ०२३ ॥

सुकेतुस्तु ततो राजन्गौतमं नवभिः शरैः ।
विद्धा विव्याध सप्तत्या पुनश्चैनं त्रिभिः शरैः ॥ ०२४ ॥

अथास्य सशरं चापं पुनश्चिच्छेद मारिष ।
सारथिं च शरेणास्य भृशं मर्मण्यताडयत् ॥ ०२५ ॥

गौतमस्तु ततः क्रुद्धो धनुर्गृह्य नवं दृढम् ।
सुकेतुं त्रिंशता बाणैः सर्वमर्मस्वताडयत् ॥ ०२६ ॥

स विह्वलितसर्वाङ्गः प्रचचाल रथोत्तमे ।
भूमिचाले यथा वृक्षश्चलत्याकम्पितो भृशम् ॥ ०२७ ॥

चलतस्तस्य कायात्तु शिरो ज्वलितकुण्डलम् ।
सोष्णीषं सशिरस्त्राणं क्षुरप्रेणान्वपातयत् ॥ ०२८ ॥

तच्छिरः प्रापतद्भूमौ श्येनाहृतमिवामिषम् ।
ततोऽस्य कायो वसुधां पश्चात्प्राप तदा च्युतः ॥ ०२९ ॥

तस्मिन्हते महाराज त्रस्तास्तस्य पदानुगाः ।
गौतमं समरे त्यक्त्वा दुद्रुवुस्ते दिशो दश ॥ ०३० ॥

धृष्टद्युम्नं तु समरे संनिवार्य महाबलः ।
कृतवर्माब्रवीद्धृष्टस्तिष्ठ तिष्ठेति पार्षतम् ॥ ०३१ ॥

तदभूत्तुमुलं युद्धं वृष्णिपार्षतयो रणे ।
आमिषार्थे यथा युद्धं श्येनयोर्गृद्धयोर्नृप ॥ ०३२ ॥

धृष्टद्युम्नस्तु समरे हार्दिक्यं नवभिः शरैः ।
आजघानोरसि क्रुद्धः पीडयन्हृदिकात्मजम् ॥ ०३३ ॥

कृतवर्मा तु समरे पार्षतेन दृढाहतः ।

पार्षतं सरथं साश्वं छादयामास सायकैः ॥ ०३४ ॥

सरथश्छादितो राजन्धृष्टद्युम्नो न दृश्यते ।
मेघैरिव परिच्छन्नो भास्करो जलदागमे ॥ ०३५ ॥

विधूय तं बाणगणं शरैः कनकभूषणैः ।
व्यरोचत रणे राजन्धृष्टद्युम्नः कृतव्रणः ॥ ०३६ ॥

ततस्तु पार्षतः क्रुद्धः शस्त्रवृष्टिं सुदारुणाम् ।
कृतवर्माणमासाद्य व्यसृजत्पृतनापतिः ॥ ०३७ ॥

तामापतन्तीं सहसा शस्त्रवृष्टिं निरन्तराम् ।
शरैरनेकसाहस्रैर्हार्दिक्यो व्यधमद्युधि ॥ ०३८ ॥

दृष्ट्वा तु दारितां युद्धे शस्त्रवृष्टिं दुरुत्तराम् ।
कृतवर्माणमभ्येत्य वारयामास पार्षतः ॥ ०३९ ॥

सारथिं चास्य तरसा प्राहिणोद्यमसादनम् ।
भल्लेन शितधारेण स हतः प्रापतद्रथात् ॥ ०४० ॥

धृष्टद्युम्नस्तु बलवाञ्जित्वा शत्रुं महारथम् ।
कौरवान्समरे तूर्णं वारयामास सायकैः ॥ ०४१ ॥

ततस्ते तावका योधा धृष्टद्युम्नमुपाद्रवन् ।
सिंहनादरवं कृत्वा ततो युद्धमवर्तत ॥ ०४२ ॥

# अध्याय ०३९

सञ्जय उवाच ॥

द्रौणिर्युधिष्ठिरं दृष्ट्वा शैनेयेनाभिरक्षितम् ।
द्रौपदेयैस्तथा शूरैरभ्यवर्तत हृष्टवत् ॥ ००१ ॥

किरन्निषुगणान्घोरान्स्वर्णपुङ्खाञ्शिलाशितान् ।
दर्शयन्विविधान्मार्गाञ्शिक्षार्थं लघुहस्तवत् ॥ ००२ ॥

ततः खं पूरयामास शरैर्दिव्यास्त्रमन्त्रितैः ।
युधिष्ठिरं च समरे पर्यवारयदस्त्रवित् ॥ ००३ ॥

द्रौणायनिशरच्छन्नं न प्राज्ञायत किञ्चन ।
बाणभूतमभूत्सर्वमायोधनशिरो हि तत् ॥ ००४ ॥

बाणजालं दिविष्ठं तत्स्वर्णजालविभूषितम् ।
शुशुभे भरतश्रेष्ठ वितानमिव विष्ठितम् ॥ ००५ ॥

तेन छन्ने रणे राजन्बाणजालेन भास्वता ।
अभ्रच्छायेव सञ्जज्ञे बाणरुद्धे नभस्तले ॥ ००६ ॥

तत्राश्चर्यमपश्याम बाणभूते तथाविधे ।
न स्म संपतते भूमौ दृष्ट्वा द्रौणेः पराक्रमम् ॥ ००७ ॥

लाघवं द्रोणपुत्रस्य दृष्ट्वा तत्र महारथाः ।
व्यस्मयन्त महाराज न चैनं प्रतिवीक्षितुम् ॥ ००८ ॥

शेकुस्ते सर्वराजानस्तपन्तमिव भास्करम् ॥ ००८ ॥

सात्यकिर्यतमानस्तु धर्मराजश्च पाण्डवः ।

तथेतराणि सैन्यानि न स्म चक्रुः पराक्रमम्  ॥ ००९  ॥

वध्यमाने ततः सैन्ये द्रौपदेया महारथाः ।
सात्यकिर्धर्मराजश्च पाञ्चालाश्चापि सङ्गताः  ॥ ०१०  ॥

त्यक्त्वा मृत्युभयं घोरं द्रौणायनिमुपाद्रवन्  ॥ ०१०  ॥

सात्यकिः पञ्चविंशत्या द्रौणिं विद्धा शिलामुखैः ।
पुनर्विव्याध नाराचैः सप्तभिः स्वर्णभूषितैः  ॥ ०११  ॥

युधिष्ठिरस्त्रिसप्तत्या प्रतिविन्ध्यश्च सप्तभिः ।
श्रुतकर्मा त्रिभिर्बाणैः श्रुतकीर्तिस्तु सप्तभिः  ॥ ०१२  ॥

सुतसोमश्च नवभिः शतानीकश्च सप्तभिः ।
अन्ये च बहवः शूरा विव्यधुस्तं समन्ततः  ॥ ०१३  ॥

सोऽतिक्रुद्धस्ततो राजन्नाशीविष इव श्वसन् ।
सात्यकिं पञ्चविंशत्या प्राविध्यत शिलाशितैः  ॥ ०१४  ॥

श्रुतकीर्तिं च नवभिः सुतसोमं च पञ्चभिः ।
अष्टभिः श्रुतकर्माणं प्रतिविन्ध्यं त्रिभिः शरैः  ॥ ०१५  ॥

शतानीकं च नवभिर्धर्मपुत्रं च सप्तभिः  ॥ ०१५  ॥

अथेतरांस्ततः शूरान्द्वाभ्यां द्वाभ्यामताडयत् ।
श्रुतकीर्तेस्तथा चापं चिच्छेद निशितैः शरैः  ॥ ०१६  ॥

अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः ।
द्रौणायनिं त्रिभिर्विद्धा विव्याधान्यैः शितैः शरैः  ॥ ०१७  ॥

ततो द्रौणिर्महाराज शरवर्षेण भारत ।

छादयामास तत्सैन्यं समन्ताच्च शरैर्नृपान्  ॥ ०१८  ॥

ततः पुनरमेयात्मा धर्मराजस्य कार्मुकम् ।
द्रौणिश्चिच्छेद विहसन्विव्याध च शरैस्त्रिभिः  ॥ ०१९  ॥

ततो धर्मसुतो राजन्प्रगृह्यान्यन्महद्धनुः ।
द्रौणिं विव्याध सप्तत्या बाह्वोरुरसि चार्दयत्  ॥ ०२०  ॥

सात्यकिस्तु ततः क्रुद्धो द्रौणेः प्रहरतो रणे ।
अर्धचन्द्रेण तीक्ष्णेन धनुश्छित्त्वानदद्भृशम्  ॥ ०२१  ॥

छिन्नधन्वा ततो द्रौणिः शक्त्या शक्तिमतां वरः ।
सारथिं पातयामास शैनेयस्य रथाद्द्रुतम्  ॥ ०२२  ॥

अथान्यद्धनुरादाय द्रोणपुत्रः प्रतापवान् ।
शैनेयं शरवर्षेण छादयामास भारत  ॥ ०२३  ॥

तस्याश्वाः प्रद्रुताः संख्ये पतिते रथसारथौ ।
तत्र तत्रैव धावन्तः समदृश्यन्त भारत  ॥ ०२४  ॥

युधिष्ठिरपुरोगास्ते द्रौणिं शस्त्रभृतां वरम् ।
अभ्यवर्षन्त वेगेन विसृजन्तः शिताञ्शरान्  ॥ ०२५  ॥

आगच्छमानांस्तान्दृष्ट्वा रौद्ररूपान्परंतपः ।
प्रहसन्प्रतिजग्राह द्रोणपुत्रो महारणे  ॥ ०२६  ॥

ततः शरशतज्वालः सेनाकक्षं महारथः ।
द्रौणिर्ददाह समरे कक्षमग्निर्यथा वने  ॥ ०२७  ॥

तद्बलं पाण्डुपुत्रस्य द्रोणपुत्रप्रतापितम् ।
चुक्षुभे भरतश्रेष्ठ तिमिनेव नदीमुखम्  ॥ ०२८  ॥

दृष्ट्वा ते च महाराज द्रोणपुत्रपराक्रमम् ।
निहतान्मेनिरे सर्वान्पाण्डून्द्रोणसुतेन वै ॥ ०२९ ॥

युधिष्ठिरस्तु त्वरितो द्रौणिं श्लिष्य महारथम् ।
अब्रवीद्द्रोणपुत्रं तु रोषामर्षसमन्वितः ॥ ०३० ॥

नैव नाम तव प्रीतिर्नैव नाम कृतज्ञता ।
यतस्त्वं पुरुषव्याघ्र मामेवाद्य जिघांससि ॥ ०३१ ॥

ब्राह्मणेन तपः कार्यं दानमध्ययनं तथा ।
क्षत्रियेण धनुर्नाम्यं स भवान्ब्राह्मणब्रुवः ॥ ०३२ ॥

मिषतस्ते महाबाहो जेष्यामि युधि कौरवान् ।
कुरुष्व समरे कर्म ब्रह्मबन्धुरसि ध्रुवम् ॥ ०३३ ॥

एवमुक्तो महाराज द्रोणपुत्रः स्मयन्निव ।
युक्तत्वं तच्च सञ्चिन्त्य नोत्तरं किञ्चिदब्रवीत् ॥ ०३४ ॥

अनुक्त्वा च ततः किञ्चिच्छरवर्षेण पाण्डवम् ।
छादयामास समरे क्रुद्धोऽन्तक इव प्रजाः ॥ ०३५ ॥

संछाद्यमानस्तु तदा द्रोणपुत्रेण मारिष ।
पार्थोऽपयातः शीघ्रं वै विहाय महतीं चमूम् ॥ ०३६ ॥

अपयाते ततस्तस्मिन्धर्मपुत्रे युधिष्ठिरे ।
द्रोणपुत्रः स्थितो राजन्प्रत्यादेशान्महात्मनः ॥ ०३७ ॥

ततो युधिष्ठिरो राजा त्यक्त्वा द्रौणिं महाहवे ।
प्रययौ तावकं सैन्यं युक्तः क्रूराय कर्मणे ॥ ०३८ ॥

# अध्याय ०४०

सञ्जय उवाच ॥

भीमसेनं सपाञ्चाल्यं चेदिकेकयसंवृतम् ।
वैकर्तनः स्वयं रुद्ध्वा वारयामास सायकैः ॥ ००१ ॥

ततस्तु चेदिकारूषान्सृञ्जयांश्च महारथान् ।
कर्णो जघान सङ्क्रुद्धो भीमसेनस्य पश्यतः ॥ ००२ ॥

भीमसेनस्ततः कर्णं विहाय रथसत्तमम् ।
प्रययौ कौरवं सैन्यं कक्षमग्निरिव ज्वलन् ॥ ००३ ॥

सूतपुत्रोऽपि समरे पाञ्चालान्केकयांस्तथा ।
सृञ्जयांश्च महेष्वासान्निजघान सहस्रशः ॥ ००४ ॥

संशप्तकेषु पार्थश्च कौरवेषु वृकोदरः ।
पाञ्चालेषु तथा कर्णः क्षयं चक्रुर्महारथाः ॥ ००५ ॥

ते क्षत्रिया दह्यमानास्त्रिभिस्तैः पावकोपमैः ।
जग्मुर्विनाशं समरे राजन्दुर्मन्त्रिते तव ॥ ००६ ॥

ततो दुर्योधनः क्रुद्धो नकुलं नवभिः शरैः ।
विव्याध भरतश्रेष्ठ चतुरश्चास्य वाजिनः ॥ ००७ ॥

ततः पुनरमेयात्मा तव पुत्रो जनाधिपः ।
क्षुरेण सहदेवस्य ध्वजं चिच्छेद काञ्चनम् ॥ ००८ ॥

नकुलस्तु ततः क्रुद्धस्तव पुत्रं त्रिसप्तभिः ।
जघान समरे राजन्सहदेवश्च पञ्चभिः ॥ ००९ ॥

तावुभौ भरतश्रेष्ठौ श्रेष्ठौ सर्वधनुष्मताम् ।
विव्याधोरसि सङ्क्रुद्धः पञ्चभिः पञ्चभिः शरैः ॥ ०१० ॥

ततोऽपराभ्यां भल्लाभ्यां धनुषी समकृन्तत ।
यमयोः प्रहसन्राजन्विव्याधैव च सप्तभिः ॥ ०११ ॥

तावन्ये धनुषी श्रेष्ठे शक्रचापनिभे शुभे ।
प्रगृह्य रेजतुः शूरौ देवपुत्रसमौ युधि ॥ ०१२ ॥

ततस्तौ रभसौ युद्धे भ्रातरौ भ्रातरं नृप ।
शरैर्ववर्षतुर्घोरैर्महामेघौ यथाचलम् ॥ ०१३ ॥

ततः क्रुद्धो महाराज तव पुत्रो महारथः ।
पाण्डुपुत्रौ महेष्वासौ वारयामास पत्रिभिः ॥ ०१४ ॥

धनुर्मण्डलमेवास्य दृश्यते युधि भारत ।
सायकाश्चैव दृश्यन्ते निश्चरन्तः समन्ततः ॥ ०१५ ॥

तस्य सायकसंछन्नौ चकाशेतां च पाण्डवौ ।
मेघच्छन्नौ यथा व्योम्नि चन्द्रसूर्यौ हतप्रभौ ॥ ०१६ ॥

ते तु बाणा महाराज हेमपुङ्खाः शिलाशिताः ।
आच्छादयन्दिशः सर्वाः सूर्यस्येवांशवस्तदा ॥ ०१७ ॥

बाणभूते ततस्तस्मिन्संछन्ने च नभस्तले ।
यमाभ्यां ददृशे रूपं कालान्तकयमोपमम् ॥ ०१८ ॥

पराक्रमं तु तं दृष्ट्वा तव सूनोर्महारथाः ।

मृत्योरुपान्तिकं प्राप्तौ माद्रीपुत्रौ स्म मेनिरे ॥ ०१९ ॥

ततः सेनापती राजन्पाण्डवस्य महात्मनः ।
पार्षतः प्रययौ तत्र यत्र राजा सुयोधनः ॥ ०२० ॥

माद्रीपुत्रौ ततः शूरौ व्यतिक्रम्य महारथौ ।
धृष्टद्युम्नस्तव सुतं ताडयामास सायकैः ॥ ०२१ ॥

तमविध्यदमेयात्मा तव पुत्रोऽत्यमर्षणः ।
पाञ्चाल्यं पञ्चविंशत्या प्रहस्य पुरुषर्षभ ॥ ०२२ ॥

ततः पुनरमेयात्मा पुत्रस्ते पृथिवीपते ।
विद्ध्वा ननाद पाञ्चाल्यं षष्ट्या पञ्चभिरेव च ॥ ०२३ ॥

अथास्य सशरं चापं हस्तावापं च मारिष ।
क्षुरप्रेण सुतीक्ष्णेन राजा चिच्छेद संयुगे ॥ ०२४ ॥

तदपास्य धनुश्छिन्नं पाञ्चाल्यः शत्रुकर्शनः ।
अन्यदादत्त वेगेन धनुर्भारसहं नवम् ॥ ०२५ ॥

प्रज्वलन्निव वेगेन संरम्भाद्रुधिरेक्षणः ।
अशोभत महेष्वासो धृष्टद्युम्नः कृतव्रणः ॥ ०२६ ॥

स पञ्चदश नाराचाञ्श्वसतः पन्नगानिव ।
जिघांसुर्भरतश्रेष्ठं धृष्टद्युम्नो व्यवासृजत् ॥ ०२७ ॥

ते वर्म हेमविकृतं भित्त्वा राज्ञः शिलाशिताः ।
विविशुर्वसुधां वेगात्कङ्कबर्हिणवाससः ॥ ०२८ ॥

सोऽतिविद्धो महाराज पुत्रस्तेऽतिव्यराजत ।
वसन्ते पुष्पशबलः सपुष्प इव किंशुकः ॥ ०२९ ॥

स छिन्नवर्मा नाराचैः प्रहारैर्जर्जरच्छविः ।
धृष्टद्युम्नस्य भल्लेन क्रुद्धश्चिच्छेद कार्मुकम् ॥ ०३० ॥

अथैनं छिन्नधन्वानं त्वरमाणो महीपतिः ।
सायकैर्दशभी राजन्भ्रुवोर्मध्ये समार्दयत् ॥ ०३१ ॥

तस्य तेऽशोभयन्वक्त्रं कर्मारपरिमार्जिताः ।
प्रफुल्लं चम्पकं यद्वद्भ्रमरा मधुलिप्सवः ॥ ०३२ ॥

तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महामनाः ।
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश ॥ ०३३ ॥

ततो दुर्योधनस्याश्वान्हत्वा सूतं च पञ्चभिः ।
धनुश्चिच्छेद भल्लेन जातरूपपरिष्कृतम् ॥ ०३४ ॥

रथं सोपस्करं छत्रं शक्तिं खड्गं गदां ध्वजम् ।
भल्लैश्चिच्छेद नवभिः पुत्रस्य तव पार्षतः ॥ ०३५ ॥

तपनीयाङ्गदं चित्रं नागं मणिमयं शुभम् ।
ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्वपार्थिवाः ॥ ०३६ ॥

दुर्योधनं तु विरथं छिन्नसर्वायुधं रणे ।
भ्रातरः पर्यरक्षन्त सोदर्या भरतर्षभ ॥ ०३७ ॥

तमारोप्य रथे राजन्दण्डधारो जनाधिपम् ।
अपोवाह च संभ्रान्तो धृष्टद्युम्नस्य पश्यतः ॥ ०३८ ॥

कर्णस्तु सात्यकिं जित्वा राजगृद्धी महाबलः ।
द्रोणहन्तारमुग्रेषुं ससाराभिमुखं रणे ॥ ०३९ ॥

तं पृष्ठतोऽभ्ययात्तूर्णं शैनेयो वितुदञ्शरैः ।
वारणं जघनोपान्ते विषाणाभ्यामिव द्विपः ॥ ०४० ॥

स भारत महानासीद्योधानां सुमहात्मनाम् ।
कर्णपार्षतयोर्मध्ये त्वदीयानां महारणः ॥ ०४१ ॥

न पाण्डवानां नास्माकं योधः कश्चित्पराङ्मुखः ।
प्रत्यदृश्यत यत्कर्णः पाञ्चालांस्त्वरितो ययौ ॥ ०४२ ॥

तस्मिन्क्षणे नरश्रेष्ठ गजवाजिनरक्षयः ।
प्रादुरासीदुभयतो राजन्मध्यङ्गतेऽहनि ॥ ०४३ ॥

पाञ्चालास्तु महाराज त्वरिता विजिगीषवः ।
सर्वतोऽभ्यद्रवन्कर्णं पतत्रिण इव द्रुमम् ॥ ०४४ ॥

तेषामाधिरथिः क्रुद्धो यतमानान्मनस्विनः ।
विचिन्वन्नेव बाणाग्रैः समासादयदग्रतः ॥ ०४५ ॥

व्याघ्रकेतुं सुशर्माणं शङ्कुं चोग्रं धनञ्जयम् ।
शुक्लं च रोचमानं च सिंहसेनं च दुर्जयम् ॥ ०४६ ॥

ते वीरा रथवेगेन परिवव्रुर्नरोत्तमम् ।
सृजन्तं सायकान्क्रुद्धं कर्णमाहवशोभिनम् ॥ ०४७ ॥

युध्यमानांस्तु ताञ्शूरान्मनुजेन्द्रः प्रतापवान् ।
अष्टाभिरष्टौ राधेयो न्यहनन्निशितैः शरैः ॥ ०४८ ॥

अथापरान्महाराज सूतपुत्रः प्रतापवान् ।
जघान बहुसाहस्रान्योधान्युद्धविशारदः ॥ ०४९ ॥

विष्णुं च विष्णुकर्माणं देवापिं भद्रमेव च ।

दण्डं च समरे राजंश्चित्रं चित्रायुधं हरिम् ॥ ०५० ॥

सिंहकेतुं रोचमानं शलभं च महारथम् ।
निजघान सुसङ्क्रुद्धश्चेदीनां च महारथान् ॥ ०५१ ॥

तेषामाददतः प्राणानासीदाधिरथेर्वपुः ।
शोणिताभ्युक्षिताङ्गस्य रुद्रस्येवोर्जितं महत् ॥ ०५२ ॥

तत्र भारत कर्णेन मातङ्गास्ताडिताः शरैः ।
सर्वतोऽभ्यद्रवन्भीताः कुर्वन्तो महदाकुलम् ॥ ०५३ ॥

निपेतुरुर्व्यां समरे कर्णसायकपीडिताः ।
कुर्वन्तो विविधान्नादान्वज्रनुन्ना इवाचलाः ॥ ०५४ ॥

गजवाजिमनुष्यैश्च निपतद्भिः समन्ततः ।
रथैश्चावगतैर्मार्गे पर्यस्तीर्यत मेदिनी ॥ ०५५ ॥

नैव भीष्मो न च द्रोणो नाप्यन्ये युधि तावकाः ।
चक्रुः स्म तादृशं कर्म यादृशं वै कृतं रणे ॥ ०५६ ॥

सूतपुत्रेण नागेषु रथेषु च हयेषु च ।
नरेषु च नरव्याघ्र कृतं स्म कदनं महत् ॥ ०५७ ॥

मृगमध्ये यथा सिंहो दृश्यते निर्भयश्चरन् ।
पाञ्चालानां तथा मध्ये कर्णोऽचरदभीतवत् ॥ ०५८ ॥

यथा मृगगणांस्त्रस्तान्सिंहो द्रावयते दिशः ।
पाञ्चालानां रथव्रातान्कर्णो द्रावयते तथा ॥ ०५९ ॥

सिंहास्यं च यथा प्राप्य न जीवन्ति मृगाः क्वचित् ।
तथा कर्णमनुप्राप्य न जीवन्ति महारथाः ॥ ०६० ॥

वैश्वानरं यथा दीप्तं दह्यन्ते प्राप्य वै जनाः ।
कर्णाग्निना रणे तद्वद्दग्धा भारत सृञ्जयाः ॥ ०६१ ॥

कर्णेन चेदिष्वेकेन पाञ्चालेषु च भारत ।
विश्राव्य नाम निहता बहवः शूरसंमताः ॥ ०६२ ॥

मम चासीन्मनुष्येन्द्र दृष्ट्वा कर्णस्य विक्रमम् ।
नैकोऽप्याधिरथेर्जीवन्पाञ्चाल्यो मोक्ष्यते युधि ॥ ०६३ ॥

पाञ्चालान्विधमन्संख्ये सूतपुत्रः प्रतापवान् ।
अभ्यधावत सङ्क्रुद्धो धर्मपुत्रं युधिष्ठिरम् ॥ ०६४ ॥

धृष्टद्युम्नश्च राजानं द्रौपदेयाश्च मारिष ।
परिवव्रुरमित्रघ्नं शतशश्चापरे जनाः ॥ ०६५ ॥

शिखण्डी सहदेवश्च नकुलो नाकुलिस्तथा ।
जनमेजयः शिनेर्नप्ता बहवश्च प्रभद्रकाः ॥ ०६६ ॥

एते पुरोगमा भूत्वा धृष्टद्युम्नस्य संयुगे ।
कर्णमस्यन्तमिष्वस्त्रैर्विचेरुरमितौजसः ॥ ०६७ ॥

तांस्तत्राधिरथिः संख्ये चेदिपाञ्चालपाण्डवान् ।
एको बहूनभ्यपतद्गरुत्मन्पन्नगानिव ॥ ०६८ ॥

भीमसेनस्तु सङ्क्रुद्धः कुरून्मद्रान्सकेकयान् ।
एकः संख्ये महेष्वासो योधयन्बह्वशोभत ॥ ०६९ ॥

तत्र मर्मसु भीमेन नाराचैस्ताडिता गजाः ।
प्रपतन्तो हतारोहाः कम्पयन्ति स्म मेदिनीम् ॥ ०७० ॥

वाजिनश्च हतारोहाः पत्तयश्च गतासवः ।
शेरते युधि निर्भिन्ना वमन्तो रुधिरं बहु ॥ ०७१ ॥

सहस्रशश्च रथिनः पतिताः पतितायुधाः ।
अक्षताः समदृश्यन्त भीमाद्भीता गतासवः ॥ ०७२ ॥

रथिभिर्वाजिभिः सूतैः पत्तिभिश्च तथा गजैः ।
भीमसेनशरच्छिन्नैरास्तीर्णा वसुधाभवत् ॥ ०७३ ॥

ततस्तम्भितमिवातिष्ठद्भीमसेनबलार्दितम् ।
दुर्योधनबलं राजन्निरुत्साहं कृतव्रणम् ॥ ०७४ ॥

निश्चेष्टं तुमुले दीनं बभौ तस्मिन्महारणे ।
प्रसन्नसलिलः काले यथा स्यात्सागरो नृप ॥ ०७५ ॥

मन्युवीर्यबलोपेतं बलात्पर्यवरोपितम् ।
अभवत्तव पुत्रस्य तत्सैन्यमिषुभिस्तदा ॥ ०७६ ॥

रुधिरौघपरिक्लिन्नं रुधिरार्द्रं बभूव ह ॥ ०७६ ॥

सूतपुत्रो रणे क्रुद्धः पाण्डवानामनीकिनीम् ।
भीमसेनः कुरूंश्चापि द्रावयन्बह्वशोभत ॥ ०७७ ॥

वर्तमाने तथा रौद्रे सङ्ग्रामेऽद्भुतदर्शने ।
निहत्य पृतनामध्ये संशप्तकगणान्बहून् ॥ ०७८ ॥

अर्जुनो जयतां श्रेष्ठो वासुदेवमथाब्रवीत् ।
प्रभग्नं बलमेतद्धि योत्स्यमानं जनार्दन ॥ ०७९ ॥

एते धावन्ति सगणाः संशप्तकमहारथाः ।
अपारयन्तो मद्बाणान्सिंहशब्दान्मृगा इव ॥ ०८० ॥

दीर्यते च महत्सैन्यं सृञ्जयानां महारणे ।
हस्तिकक्ष्यो ह्यसौ कृष्ण केतुः कर्णस्य धीमतः ॥ ०८१ ॥

दृश्यते राजसैन्यस्य मध्ये विचरतो मुहुः ॥ ०८१ ॥

न च कर्णं रणे शक्ता जेतुमन्ये महारथाः ।
जानीते हि भवान्कर्णं वीर्यवन्तं पराक्रमे ॥ ०८२ ॥

तत्र याहि यतः कर्णो द्रावयत्येष नो बलम् ।
वर्जयित्वा रणे याहि सूतपुत्रं महारथम् ।
श्रमो मा बाधते कृष्ण यथा वा तव रोचते ॥ ०८४ ॥

एतच्छ्रुत्वा महाराज गोविन्दः प्रहसन्निव ।
अब्रवीदर्जुनं तूर्णं कौरवाञ्जहि पाण्डव ॥ ०८५ ॥

ततस्तव महत्सैन्यं गोविन्दप्रेरिता हयाः ।
हंसवर्णाः प्रविविशुर्वहन्तः कृष्णपाण्डवौ ॥ ०८६ ॥

केशवप्रहितैरश्वैः श्वेतैः काञ्चनभूषणैः ।
प्रविशद्भिस्तव बलं चतुर्दिशमभिद्यत ॥ ०८७ ॥

तौ विदार्य महासेनां प्रविष्टौ केशवार्जुनौ ।
क्रुद्धौ संरम्भरक्ताक्षौ व्यभ्राजेतां महाद्युती ॥ ०८८ ॥

युद्धशौण्डौ समाहूतावरिभिस्तौ रणाध्वरम् ।
यज्वभिर्विधिनाहूतौ मखे देवाविवाश्विनौ ॥ ०८९ ॥

क्रुद्धौ तौ तु नरव्याघ्रौ वेगवन्तौ बभूवतुः ।
तलशब्देन रुषितौ यथा नागौ महाहवे ॥ ०९० ॥

विगाहन्स रथानीकमश्वसंघांश्च फल्गुनः ।
व्यचरत्पृतनामध्ये पाशहस्त इवान्तकः ॥ ०९१ ॥

तं दृष्ट्वा युधि विक्रान्तं सेनायां तव भारत ।
संशप्तकगणान्भूयः पुत्रस्ते समचोदयत् ॥ ०९२ ॥

ततो रथसहस्रेण द्विरदानां त्रिभिः शतैः ।
चतुर्दशसहस्रैश्च तुरगाणां महाहवे ॥ ०९३ ॥

द्वाभ्यां शतसहस्राभ्यां पदातीनां च धन्विनाम् ।
शूराणां नामलब्धानां विदितानां समन्ततः ॥ ०९४ ॥

अभ्यवर्तन्त तौ वीरौ छादयन्तो महारथाः ॥ ०९४ ॥

स छाद्यमानः समरे शरैः परबलार्दनः ।
दर्शयन्रौद्रमात्मानं पाशहस्त इवान्तकः ॥ ०९५ ॥

निघ्नन्संशप्तकान्पार्थः प्रेक्षणीयतरोऽभवत् ॥ ०९५ ॥

ततो विद्युत्प्रभैर्बाणैः कार्तस्वरविभूषितैः ।
निरन्तरमिवाकाशमासीन्नुन्नैः किरीटिना ॥ ०९६ ॥

किरीटिभुजनिर्मुक्तैः संपतद्भिर्महाशरैः ।
समाच्छन्नं बभौ सर्वं काद्रवेयैरिव प्रभो ॥ ०९७ ॥

रुक्मपुङ्खान्प्रसन्नाग्राञ्शरान्संनतपर्वणः ।
अदर्शयदमेयात्मा दिक्षु सर्वासु पाण्डवः ॥ ०९८ ॥

हत्वा दश सहस्राणि पार्थिवानां महारथः ।
संशप्तकानां कौन्तेयः प्रपक्षं त्वरितोऽभ्ययात् ॥ ०९९ ॥

प्रपक्षं स समासाद्य पार्थः काम्बोजरक्षितम् ।
प्रममाथ बलाद्बाणैर्दानवानिव वासवः ॥ १०० ॥

प्रचिच्छेदाशु भल्लैश्च द्विषतामाततायिनाम् ।
शस्त्रपाणींस्तथा बाहूंस्तथापि च शिरांस्युत ॥ १०१ ॥

अङ्गाङ्गावयवैश्छिन्नैर्व्यायुधास्तेऽपतन्क्षितौ ।
विष्वग्वाताभिसंभग्ना बहुशाखा इव द्रुमाः ॥ १०२ ॥

हस्त्यश्वरथपत्तीनां व्रातान्निघ्नन्तमर्जुनम् ।
सुदक्षिणादवरजः शरवृष्ट्याभ्यवीवृषत् ॥ १०३ ॥

अस्यास्यतोऽर्धचन्द्राभ्यां स बाहू परिघोपमौ ।
पूर्णचन्द्राभवक्त्रं च क्षुरेणाभ्यहनच्छिरः ॥ १०४ ॥

स पपात ततो वाहात्स्वलोहितपरिस्रवः ।
मनःशिलागिरेः शृङ्गं वज्रेणेवावदारितम् ॥ १०५ ॥

सुदक्षिणादवरजं काम्बोजं ददृशुर्हतम् ।
प्रांशुं कमलपत्राक्षमत्यर्थं प्रियदर्शनम् ॥ १०६ ॥

काञ्चनस्तम्भसङ्काशं भिन्नं हेमगिरिं यथा ॥ १०६ ॥

ततोऽभवत्पुनर्युद्धं घोरमद्भुतदर्शनम् ।
नानावस्थाश्च योधानां बभूवुस्तत्र युध्यताम् ॥ १०७ ॥

एतेष्वावर्जितैरश्वैः काम्बोजैर्यवनैः शकैः ।
शोणिताक्तैस्तदा रक्तं सर्वमासीद्विशां पते ॥ १०८ ॥

रथै रथाश्वसूतैश्च हतारोहैश्च वाजिभिः ।
द्विरदैश्च हतारोहैर्महामात्रैर्हतद्विपैः ॥ १०९ ॥

अन्योन्येन महाराज कृतो घोरो जनक्षयः ॥ १०९ ॥

तस्मिन्प्रपक्षे पक्षे च वध्यमाने महात्मना ।
अर्जुनं जयतां श्रेष्ठं त्वरितो द्रौणिराययौ ॥ ११० ॥

विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ।
आददानः शरान्घोरान्स्वरश्मीनिव भास्करः ॥ १११ ॥

तैः पतद्भिर्महाराज द्रौणिमुक्तैः समन्ततः ।
संछादितौ रथस्थौ तावुभौ कृष्णधनञ्जयौ ॥ ११२ ॥

ततः शरशतैस्तीक्ष्णैर्भारद्वाजः प्रतापवान् ।
निश्चेष्टौ तावुभौ चक्रे युद्धे माधवपाण्डवौ ॥ ११३ ॥

हाहाकृतमभूत्सर्वं जङ्गमं स्थावरं तथा ।
चराचरस्य गोप्तारौ दृष्ट्वा संछादितौ शरैः ॥ ११४ ॥

सिद्धचारणसंघाश्च संपेतुर्वै समन्ततः ।
चिन्तयन्तो भवेदद्य लोकानां स्वस्त्यपीत्यह ॥ ११५ ॥

न मया तादृशो राजन्दृष्टपूर्वः पराक्रमः ।
सञ्जज्ञे यादृशो द्रौणेः कृष्णौ संछादयिष्यतः ॥ ११६ ॥

द्रौणेस्तु धनुषः शब्दमहितत्रासनं रणे ।
अश्रौषं बहुशो राजन्सिंहस्य नदतो यथा ॥ ११७ ॥

ज्या चास्य चरतो युद्धे सव्यदक्षिणमस्यतः ।
विद्युदम्बुदमध्यस्था भ्राजमानेव साभवत् ॥ ११८ ॥

स तथा क्षिप्रकारी च दृढहस्तश्च पाण्डवः ।

संमोहं परमं गत्वा प्रैक्षत द्रोणजं ततः ॥ ११९ ॥

स विक्रमं हृतं मेने आत्मनः सुमहात्मना ।
तथास्य समरे राजन्वपुरासीत्सुदुर्दृशम् ॥ १२० ॥

द्रौणिपाण्डवयोरेवं वर्तमाने महारणे ।
वर्धमाने च राजेन्द्र द्रोणपुत्रे महाबले ॥ १२१ ॥

हीयमाने च कौन्तेये कृष्णं रोषः समभ्ययात् ॥ १२१ ॥

स रोषान्निःश्वसन्राजन्निर्दहन्निव चक्षुषा ।
द्रौणिं ह्यपश्यत्सङ्ग्रामे फल्गुनं च मुहुर्मुहुः ॥ १२२ ॥

ततः क्रुद्धोऽब्रवीत्कृष्णः पार्थं सप्रणयं तदा ।
अत्यद्भुतमिदं पार्थ तव पश्यामि संयुगे ॥ १२३ ॥

अतिशेते हि यत्र त्वा द्रोणपुत्रोऽद्य भारत ॥ १२३ ॥

कच्चित्ते गाण्डिवं हस्ते रथे तिष्ठसि चार्जुन ।
कच्चित्कुशलिनौ बाहू कच्चिद्वीर्यं तदेव ते ॥ १२४ ॥

एवमुक्तस्तु कृष्णेन क्षिप्त्वा भल्लांश्चतुर्दश ।
त्वरमाणस्त्वराकाले द्रौणेर्धनुरथाच्छिनत् ॥ १२५ ॥

ध्वजं छत्रं पताकां च रथं शक्तिं गदां तथा ॥ १२५ ॥

जत्रुदेशे च सुभृशं वत्सदन्तैरताडयत् ।
स मूर्च्छां परमां गत्वा ध्वजयष्टिं समाश्रितः ॥ १२६ ॥

तं विसञ्ज्ञं महाराज किरीटिभयपीडितम् ।
अपोवाह रणात्सूतो रक्षमाणो धनञ्जयात् ॥ १२७ ॥

एतस्मिन्नेव काले तु विजयः शत्रुतापनः ।
न्यवधीत्तावकं सैन्यं शतशोऽथ सहस्रशः ॥ १२८ ॥

पश्यतस्तव पुत्रस्य तस्य वीरस्य भारत ॥ १२८ ॥

एवमेष क्षयो वृत्तस्तावकानां परैः सह ।
क्रूरो विशसनो घोरो राजन्दुर्मन्त्रिते तव ॥ १२९ ॥

संशप्तकांश्च कौन्तेयः कुरूंश्चापि वृकोदरः ।
वसुषेणं च पाञ्चालः कृत्स्नेन व्यधमद्रणे ॥ १३० ॥

---

# अध्याय ०४१

सञ्जय उवाच ॥

त्वरमाणः पुनः कृष्णः पार्थमभ्यवदच्छनैः ।
पश्य कौरव्य राजानमपयातांश्च पाण्डवान् ॥ ००१ ॥

कर्णं पश्य महारङ्गे ज्वलन्तमिव पावकम् ।
असौ भीमो महेष्वासः संनिवृत्तो रणं प्रति ॥ ००२ ॥

तमेतेऽनु निवर्तन्ते धृष्टद्युम्नपुरोगमाः ।
पाञ्चालानां सृञ्जयानां पाण्डवानां च यन्मुखम् ॥ ००३ ॥

निवृत्तैश्च तथा पार्थैर्भग्नं शत्रुबलं महत् ॥ ००३ ॥

कौरवान्द्रवतो ह्येष कर्णो धारयतेऽर्जुन ।

अन्तकप्रतिमो वेगे शक्रतुल्यपराक्रमः ॥ ००४ ॥

असौ गच्छति कौरव्य द्रौणिरस्त्रभृतां वरः ।
तमेष प्रद्रुतः संख्ये धृष्टद्युम्नो महारथः ॥ ००५ ॥

सर्वं व्याचष्ट दुर्धर्षो वासुदेवः किरीटिने ।
ततो राजन्प्रादुरासीन्महाघोरो महारणः ॥ ००६ ॥

सिंहनादरवाश्चात्र प्रादुरासन्समागमे ।
उभयोः सेनयो राजन्मृत्युं कृत्वा निवर्तनम् ॥ ००७ ॥

---

# अध्याय ०४२

सञ्जय उवाच ॥

ततः पुनः समाजग्मुरभीताः कुरुसृञ्जयाः ।
युधिष्ठिरमुखाः पार्था वैकर्तनमुखा वयम् ॥ ००१ ॥

ततः प्रववृते भीमः सङ्ग्रामो लोमहर्षणः ।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः ॥ ००२ ॥

तस्मिन्प्रवृत्ते सङ्ग्रामे तुमुले शोणितोदके ।
संशप्तकेषु शूरेषु किञ्चिच्छिष्टेषु भारत ॥ ००३ ॥

धृष्टद्युम्नो महाराज सहितः सर्वराजभिः ।
कर्णमेवाभिदुद्राव पाण्डवाश्च महारथाः ॥ ००४ ॥

आगच्छमानांस्तान्संख्ये प्रहृष्टान्विजयैषिणः ।

दधारैको रणे कर्णो जलौघानिव पर्वतः ॥ ००५ ॥

तमासाद्य तु ते कर्णं व्यशीर्यन्त महारथाः ।
यथाचलं समासाद्य जलौघाः सर्वतोदिशम् ॥ ००६ ॥

तयोरासीन्महाराज सङ्ग्रामो लोमहर्षणः ॥ ००६ ॥

धृष्टद्युम्नस्तु राधेयं शरेण नतपर्वणा ।
ताडयामास सङ्क्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ ००७ ॥

विजयं तु धनुःश्रेष्ठं विधुन्वानो महारथः ।
पार्षतस्य धनुश्छित्त्वा शरानाशीविषोपमान् ॥ ००८ ॥

ताडयामास सङ्क्रुद्धः पार्षतं नवभिः शरैः ॥ ००८ ॥

ते वर्म हेमविकृतं भित्त्वा तस्य महात्मनः ।
शोणिताक्ता व्यराजन्त शक्रगोपा इवानघ ॥ ००९ ॥

तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महारथः ।
अन्यद्धनुरुपादाय शरांश्चाशीविषोपमान् ॥ ०१० ॥

कर्णं विव्याध सप्तत्या शरैः संनतपर्वभिः ॥ ०१० ॥

तथैव राजन्कर्णोऽपि पार्षतं शत्रुतापनम् ।
द्रोणशत्रुं महेष्वासो विव्याध निशितैः शरैः ॥ ०११ ॥

तस्य कर्णो महाराज शरं कनकभूषणम् ।
प्रेषयामास सङ्क्रुद्धो मृत्युदण्डमिवापरम् ॥ ०१२ ॥

तमापतन्तं सहसा घोररूपं विशां पते ।
चिच्छेद सप्तधा राजञ्शैनेयः कृतहस्तवत् ॥ ०१३ ॥

दृष्ट्वा विनिहितं बाणं शरैः कर्णो विशां पते ।
सात्यकिं शरवर्षेण समन्तात्पर्यवारयत् ॥ ०१४ ॥

विव्याध चैनं समरे नाराचैस्तत्र सप्तभिः ।
तं प्रत्यविध्यच्छैनेयः शरैर्हेमविभूषितैः ॥ ०१५ ॥

ततो युद्धमतीवासीच्चक्षुःश्रोत्रभयावहम् ।
राजन्घोरं च चित्रं च प्रेक्षणीयं समन्ततः ॥ ०१६ ॥

सर्वेषां तत्र भूतानां लोमहर्षो व्यजायत ।
तद्दृष्ट्वा समरे कर्म कर्णशैनेययोर्नृप ॥ ०१७ ॥

एतस्मिन्नन्तरे द्रौणिरभ्ययात्सुमहाबलम् ।
पार्षतं शत्रुदमनं शत्रुवीर्यासुनाशनम् ॥ ०१८ ॥

अभ्यभाषत सङ्क्रुद्धो द्रौणिर्दूरे धनञ्जये ।
तिष्ठ तिष्ठाद्य ब्रह्मघ्न न मे जीवन्विमोक्ष्यसे ॥ ०१९ ॥

इत्युक्त्वा सुभृशं वीरः शीघ्रकृन्निशितैः शरैः ।
पार्षतं छादयामास घोररूपैः सुतेजनैः ॥ ०२० ॥

यतमानं परं शक्त्या यतमानो महारथः ॥ ०२० ॥

यथा हि समरे द्रौणिः पार्षतं वीक्ष्य मारिष ।
तथा द्रौणिं रणे दृष्ट्वा पार्षतः परवीरहा ॥ ०२१ ॥

नातिहृष्टमना भूत्वा मन्यते मृत्युमात्मनः ॥ ०२१ ॥

द्रौणिस्तु दृष्ट्वा राजेन्द्र धृष्टद्युम्नं रणे स्थितम् ।
क्रोधेन निःश्वसन्वीरः पार्षतं समुपाद्रवत् ॥ ०२२ ॥

तावन्योन्यं तु दृष्ट्वैव संरम्भं जग्मतुः परम्  ॥ ०२२  ॥

अथाब्रवीन्महाराज द्रोणपुत्रः प्रतापवान् ।
धृष्टद्युम्नं समीपस्थं त्वरमाणो विशां पते  ॥ ०२३  ॥

पाञ्चालापसदाद्य त्वां प्रेषयिष्यामि मृत्यवे  ॥ ०२३  ॥

पापं हि यत्त्वया कर्म घ्नता द्रोणं पुरा कृतम् ।
अद्य त्वा पत्स्यते तद्वै यथा ह्यकुशलं तथा  ॥ ०२४  ॥

अरक्ष्यमाणः पार्थेन यदि तिष्ठसि संयुगे ।
नापक्रमसि वा मूढ सत्यमेतद्ब्रवीमि ते  ॥ ०२५  ॥

एवमुक्तः प्रत्युवाच धृष्टद्युम्नः प्रतापवान् ।
प्रतिवाक्यं स एवासिर्मामको दास्यते तव  ॥ ०२६  ॥

येनैव ते पितुर्दत्तं यतमानस्य संयुगे  ॥ ०२६  ॥

यदि तावन्मया द्रोणो निहतो ब्राह्मणब्रुवः ।
त्वामिदानीं कथं युद्धे न हनिष्यामि विक्रमात्  ॥ ०२७  ॥

एवमुक्त्वा महाराज सेनापतिरमर्षणः ।
निशितेनाथ बाणेन द्रौणिं विव्याध पार्षतः  ॥ ०२८  ॥

ततो द्रोणिः सुसङ्क्रुद्धः शरैः संनतपर्वभिः ।
प्राच्छादयद्दिशो राजन्धृष्टद्युम्नस्य संयुगे  ॥ ०२९  ॥

नैवान्तरिक्षं न दिशो नैव योधाः समन्ततः ।
दृश्यन्ते वै महाराज शरैश्छन्नाः सहस्रशः  ॥ ०३०  ॥

तथैव पार्षतो राजन्द्रौणिमाहवशोभिनम् ।
शरैः संछादयामास सूतपुत्रस्य पश्यतः ॥ ०३१ ॥

राधेयोऽपि महाराज पाञ्चालान्सह पाण्डवैः ।
द्रौपदेयान्युधामन्युं सात्यकिं च महारथम् ॥ ०३२ ॥

एकः स वारयामास प्रेक्षणीयः समन्ततः ॥ ०३२ ॥

धृष्टद्युम्नोऽपि समरे द्रौणेश्चिच्छेद कार्मुकम् ।
तदपास्य धनुश्छिन्नमन्यदादत्त कार्मुकम् ॥ ०३३ ॥

वेगवत्समरे घोरं शरांश्चाशीविषोपमान् ॥ ०३३ ॥

स पार्षतस्य राजेन्द्र धनुः शक्तिं गदां ध्वजम् ।
हयान्सूतं रथं चैव निमेषाद्व्यधमच्छरैः ॥ ०३४ ॥

स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
खड्गमादत्त विपुलं शतचन्द्रं च भानुमत् ॥ ०३५ ॥

द्रौणिस्तदपि राजेन्द्र भल्लैः क्षिप्रं महारथः ।
चिच्छेद समरे वीरः क्षिप्रहस्तो दृढायुधः ॥ ०३६ ॥

रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ ०३६ ॥

धृष्टद्युम्नं तु विरथं हताश्वं छिन्नकार्मुकम् ।
शरैश्च बहुधा विद्धमस्त्रैश्च शकलीकृतम् ॥ ०३७ ॥

नातरद्भरतश्रेष्ठ यतमानो महारथः ॥ ०३७ ॥

तस्यान्तमिषुभी राजन्यदा द्रौणिर्न जग्मिवान् ।
अथ त्यक्त्वा धनुर्वीरः पार्षतं त्वरितोऽन्वगात् ॥ ०३८ ॥

आसीदाद्रवतो राजन्वेगस्तस्य महात्मनः ।
गरुडस्येव पततो जिघृक्षोः पन्नगोत्तमम्  ॥ ०३९  ॥

एतस्मिन्नेव काले तु माधवोऽर्जुनमब्रवीत् ।
पश्य पार्थ यथा द्रौणिः पार्षतस्य वधं प्रति  ॥ ०४०  ॥

यत्नं करोति विपुलं हन्याच्चैनमसंशयम्  ॥ ०४०  ॥

तं मोचय महाबाहो पार्षतं शत्रुतापनम् ।
द्रौणेरास्यमनुप्राप्तं मृत्योरास्यगतं यथा  ॥ ०४१  ॥

एवमुक्त्वा महाराज वासुदेवः प्रतापवान् ।
प्रैषयत्तत्र तुरगान्यत्र द्रौणिर्व्यवस्थितः  ॥ ०४२  ॥

ते हयाश्चन्द्रसङ्काशाः केशवेन प्रचोदिताः ।
पिबन्त इव तद्व्योम जग्मुर्द्रौणिरथं प्रति  ॥ ०४३  ॥

दृष्ट्वायान्तौ महावीर्यावुभौ कृष्णधनञ्जयौ ।
धृष्टद्युम्नवधे राजंश्चक्रे यत्नं महाबलः  ॥ ०४४  ॥

विकृष्यमाणं दृष्ट्वैव धृष्टद्युम्नं जनेश्वर ।
शरांश्चिक्षेप वै पार्थो द्रौणिं प्रति महाबलः  ॥ ०४५  ॥

ते शरा हेमविकृता गाण्डीवप्रेषिता भृशम् ।
द्रौणिमासाद्य विविशुर्वल्मीकमिव पन्नगाः  ॥ ०४६  ॥

स विध्वस्तैः शरैर्घोरैर्द्रोणपुत्रः प्रतापवान् ।
रथमारुरुहे वीरो धनञ्जयशरार्दितः  ॥ ०४७  ॥

प्रगृह्य च धनुः श्रेष्ठं पार्थं विव्याध सायकैः  ॥ ०४७  ॥

एतस्मिन्नन्तरे वीरः सहदेवो जनाधिप ।
अपोवाह रथेनाजौ पार्षतं शत्रुतापनम् ॥ ०४८ ॥

अर्जुनोऽपि महाराज द्रौणिं विव्याध पत्रिभिः ।
तं द्रोणपुत्रः सङ्क्रुद्धो बाह्वोरुरसि चार्दयत् ॥ ०४९ ॥

क्रोधितस्तु रणे पार्थो नाराचं कालसंमितम् ।
द्रोणपुत्राय चिक्षेप कालदण्डमिवापरम् ॥ ०५० ॥

स ब्राह्मणस्यांसदेशे निपपात महाद्युतिः ॥ ०५० ॥

स विह्वलो महाराज शरवेगेन संयुगे ।
निषसाद रथोपस्थे वैक्लव्यं च परं ययौ ॥ ०५१ ॥

ततः कर्णो महाराज व्याक्षिपद्विजयं धनुः ।
अर्जुनं समरे क्रुद्धः प्रेक्षमाणो मुहुर्मुहुः ॥ ०५२ ॥

द्वैरथं चापि पार्थेन कामयानो महारणे ॥ ०५२ ॥

तं तु हित्वा हतं वीरं सारथिः शत्रुकर्शनम् ।
अपोवाह रथेनाजौ त्वरमाणो रणाजिरात् ॥ ०५३ ॥

अथोत्क्रुष्टं महाराज पाञ्चालैर्जितकाशिभिः ।
मोक्षितं पार्षतं दृष्ट्वा द्रोणपुत्रं च पीडितम् ॥ ०५४ ॥

वादित्राणि च दिव्यानि प्रावाद्यन्त सहस्रशः ।
सिंहनादश्च सञ्जज्ञे दृष्ट्वा घोरं महाद्भुतम् ॥ ०५५ ॥

एवं कृत्वाब्रवीत्पार्थो वासुदेवं धनञ्जयः ।
याहि संशप्तकान्कृष्ण कार्यमेतत्परं मम ॥ ०५६ ॥

ततः प्रयातो दाशार्हः श्रुत्वा पाण्डवभाषितम् ।
रथेनातिपताकेन मनोमारुतरंहसा ॥ ०५७ ॥

---

# अध्याय ०४३

सञ्जय उवाच ॥

एतस्मिन्नन्तरे कृष्णः पार्थं वचनमब्रवीत् ।
दर्शयन्निव कौन्तेयं धर्मराजं युधिष्ठिरम् ॥ ००१ ॥

एष पाण्डव ते भ्राता धार्तराष्ट्रैर्महाबलैः ।
जिघांसुभिर्महेष्वासैर्द्रुतं पार्थानुसर्यते ॥ ००२ ॥

तथानुयान्ति संरब्धाः पाञ्चाला युद्धदुर्मदाः ।
युधिष्ठिरं महात्मानं परीप्सन्तो महाजवाः ॥ ००३ ॥

एष दुर्योधनः पार्थ रथानीकेन दंशितः ।
राजा सर्वस्य लोकस्य राजानमनुधावति ॥ ००४ ॥

जिघांसुः पुरुषव्याघ्रं भ्रातृभिः सहितो बली ।
आशीविषसमस्पर्शैः सर्वयुद्धविशारदैः ॥ ००५ ॥

एते जिघृक्षवो यान्ति द्विपाश्वरथपत्तयः ।
युधिष्ठिरं धार्तराष्ट्रा रत्नोत्तममिवार्थिनः ॥ ००६ ॥

पश्य सात्वतभीमाभ्यां निरुद्धाधिष्ठितः प्रभुः ।

जिहीर्षवोऽमृतं दैत्याः शक्राग्निभ्यामिवावशाः ॥ ००७ ॥

एते बहुत्वात्त्वरिताः पुनर्गच्छन्ति पाण्डवम् ।
समुद्रमिव वार्योघाः प्रावृट्काले महारथाः ॥ ००८ ॥

नदन्तः सिंहनादांश्च धमन्तश्चापि वारिजान् ।
बलवन्तो महेष्वासा विधुन्वन्तो धनूंषि च ॥ ००९ ॥

मृत्योर्मुखगतं मन्ये कुन्तीपुत्रं युधिष्ठिरम् ।
हुतमग्नौ च भद्रं ते दुर्योधनवशं गतम् ॥ ०१० ॥

यथायुक्तमनीकं हि धार्तराष्ट्रस्य पाण्डव ।
नास्य शक्रोऽपि मुच्येत संप्राप्तो बाणगोचरम् ॥ ०११ ॥

दुर्योधनस्य शूरस्य द्रौणेः शारद्वतस्य च ।
कर्णस्य चेषुवेगो वै पर्वतानपि दारयेत् ॥ ०१२ ॥

दुर्योधनस्य शूरस्य शरौघाञ्शीघ्रमस्यतः ।
सङ्क्रुद्धस्यान्तकस्येव को वेगं संसहेद्रणे ॥ ०१३ ॥

कर्णेन च कृतो राजा विमुखः शत्रुतापनः ।
बलवा.ण्ल्लघुहस्तश्च कृती युद्धविशारदः ॥ ०१४ ॥

राधेयः पाण्डवश्रेष्ठं शक्तः पीडयितुं रणे ।
सहितो धृतराष्ट्रस्य पुत्रैः शूरो महात्मभिः ॥ ०१५ ॥

तस्यैवं युध्यमानस्य सङ्ग्रामे संयतात्मनः ।
अन्यैरपि च पार्थस्य हृतं वर्म महारथैः ॥ ०१६ ॥

उपवासकृशो राजा भृशं भरतसत्तम ।
ब्राह्मे बले स्थितो ह्येष न क्षत्रेऽतिबले विभो ॥ ०१७ ॥

न जीवति महाराजो मन्ये पार्थ युधिष्ठिरः ।
यद्भीमसेनः सहते सिंहनादममर्षणः ॥ ०१८ ॥

नर्दतां धार्तराष्ट्राणां पुनः पुनररिंदम ।
धमतां च महाशङ्खान्सङ्ग्रामे जितकाशिनाम् ॥ ०१९ ॥

युधिष्ठिरं पाण्डवेयं हतेति भरतर्षभ ।
सञ्चोदयत्यसौ कर्णो धार्तराष्ट्रान्महाबलान् ॥ ०२० ॥

स्थूणाकर्णेन्द्रजालेन पार्थ पाशुपतेन च ।
प्रच्छादयन्तो राजानमनुयान्ति महारथाः ॥ ०२१ ॥

आतुरो मे मतो राजा संनिषेव्यश्च भारत ॥ ०२१ ॥

यथैनमनुवर्तन्ते पाञ्चालाः सह पाण्डवैः ।
त्वरमाणास्त्वराकाले सर्वशस्त्रभृतां वराः ॥ ०२२ ॥

मज्जन्तमिव पाताले बलिनोऽप्युज्जिहीर्षवः ॥ ०२२ ॥

न केतुर्दृश्यते राज्ञः कर्णेन निहतः शरैः ।
पश्यतोर्यमयोः पार्थ सात्यकेश्च शिखण्डिनः ॥ ०२३ ॥

धृष्टद्युम्नस्य भीमस्य शतानीकस्य वा विभो ।
पाञ्चालानां च सर्वेषां चेदीनां चैव भारत ॥ ०२४ ॥

एष कर्णो रणे पार्थ पाण्डवानामनीकिनीम् ।
शरैर्विध्वंसयति वै नलिनीमिव कुञ्जरः ॥ ०२५ ॥

एते द्रवन्ति रथिनस्त्वदीयाः पाण्डुनन्दन ।
पश्य पश्य यथा पार्थ गच्छन्त्येते महारथाः ॥ ०२६ ॥

एते भारत मातङ्गाः कर्णेनाभिहता रणे ।
आर्तनादान्विकुर्वाणा विद्रवन्ति दिशो दश  ॥ ०२७  ॥

रथानां द्रवतां वृन्दं पश्य पार्थ समन्ततः ।
द्राव्यमाणं रणे चैव कर्णेनामित्रकर्शिना  ॥ ०२८  ॥

हस्तिकक्ष्यां रणे पश्य चरन्तीं तत्र तत्र ह ।
रथस्थं सूतपुत्रस्य केतुं केतुमतां वर  ॥ ०२९  ॥

असौ धावति राधेयो भीमसेनरथं प्रति ।
किरञ्शरशतानीव विनिघ्नंस्तव वाहिनीम्  ॥ ०३०  ॥

एतान्पश्य च पाञ्चालान्द्राव्यमाणान्महात्मना ।
शक्रेणेव यथा दैत्यान्हन्यमानान्महाहवे  ॥ ०३१  ॥

एष कर्णो रणे जित्वा पाञ्चालान्पाण्डुसृञ्जयान् ।
दिशो विप्रेक्षते सर्वास्त्वदर्थमिति मे मतिः  ॥ ०३२  ॥

पश्य पार्थ धनुः श्रेष्ठं विकर्षन्साधु शोभते ।
शत्रूञ्जित्वा यथा शक्रो देवसंघैः समावृतः  ॥ ०३३  ॥

एते नदन्ति कौरव्या दृष्ट्वा कर्णस्य विक्रमम् ।
त्रासयन्तो रणे पार्थान्सृञ्जयांश्च सहस्रशः  ॥ ०३४  ॥

एष सर्वात्मना पाण्डूंस्त्रासयित्वा महारणे ।
अभिभाषति राधेयः सर्वसैन्यानि मानदः  ॥ ०३५  ॥

अभिद्रवत गच्छध्वं द्रुतं द्रवत कौरवाः ।
यथा जीवन्न वः कश्चिन्मुच्यते युधि सृञ्जयः  ॥ ०३६  ॥

तथा कुरुत संयत्ता वयं यास्याम पृष्ठतः ।
एवमुक्त्वा ययावेष पृष्ठतो विकिरञ्शरैः ॥ ०३७ ॥

पश्य कर्णं रणे पार्थ श्वेतच्छविविराजितम् ।
उदयं पर्वतं यद्वच्छोभयन्वै दिवाकरः ॥ ०३८ ॥

पूर्णचन्द्रनिकाशेन मूर्ध्नि छत्रेण भारत ।
ध्रियमाणेन समरे तथा शतशलाकिना ॥ ०३९ ॥

एष त्वां प्रेक्षते कर्णः सकटाक्षो विशां पते ।
उत्तमं यत्नमास्थाय ध्रुवमेष्यति संयुगे ॥ ०४० ॥

पश्य ह्येनं महाबाहो विधुन्वानं महद्धनुः ।
शरांश्चाशीविषाकारान्विसृजन्तं महाबलम् ॥ ०४१ ॥

असौ निवृत्तो राधेयो दृश्यते वानरध्वज ।
वधाय चात्मनोऽभ्येति दीपस्य शलभो यथा ॥ ०४२ ॥

कर्णमेकाकिनं दृष्ट्वा रथानीकेन भारत ।
रिरक्षिषुः सुसंयत्तो धार्तराष्ट्रोऽभिवर्तते ॥ ०४३ ॥

सार्वैः सहैभिर्दुष्टात्मा वध्य एष प्रयत्नतः ।
त्वया यशश्च राज्यं च सुखं चोत्तममिच्छता ॥ ०४४ ॥

आत्मानं च कृतात्मानं समीक्ष्य भरतर्षभ ।
कृतागसं च राधेयं धर्मात्मनि युधिष्ठिरे ॥ ०४५ ॥

प्रतिपद्यस्व राधेयं प्राप्तकालमनन्तरम् ।
आर्यां युद्धे मतिं कृत्वा प्रत्येहि रथयूथपम् ॥ ०४६ ॥

पञ्च ह्येतानि मुख्यानां रथानां रथसत्तम ।

शतान्यायान्ति वेगेन बलिनां भीमतेजसाम्  ॥ ०४७  ॥

पञ्च नागसहस्राणि द्विगुणा वाजिनस्तथा ।
अभिसंहत्य कौन्तेय पदातिप्रयुतानि च  ॥ ०४८  ॥

अन्योन्यरक्षितं वीर बलं त्वामभिवर्तते  ॥ ०४८  ॥

सूतपुत्रे महेष्वासे दर्शयात्मानमात्मना ।
उत्तमं यत्नमास्थाय प्रत्येहि भरतर्षभ  ॥ ०४९  ॥

असौ कर्णः सुसंरब्धः पाञ्चालानभिधावति ।
केतुमस्य हि पश्यामि धृष्टद्युम्नरथं प्रति  ॥ ०५०  ॥

समुच्छेत्स्यति पाञ्चालानिति मन्ये परंतप  ॥ ०५०  ॥

आचक्षे ते प्रियं पार्थ तदेवं भरतर्षभ ।
राजा जीवति कौरव्यो धर्मपुत्रो युधिष्ठिरः  ॥ ०५१  ॥

असौ भिमो महाबाहुः संनिवृत्तश्चमूमुखे ।
वृतः सृञ्जयसैन्येन सात्यकेन च भारत  ॥ ०५२  ॥

वध्यन्त एते समरे कौरवा निशितैः शरैः ।
भीमसेनेन कौन्तेय पाञ्चालैश्च महात्मभिः  ॥ ०५३  ॥

सेना हि धार्तराष्ट्रस्य विमुखा चाभवद्रणात् ।
विप्रधावति वेगेन भीमस्य निहता शरैः  ॥ ०५४  ॥

विपन्नसस्येव मही रुधिरेण समुक्षिता ।
भारती भरतश्रेष्ठ सेना कृपणदर्शना  ॥ ०५५  ॥

निवृत्तं पश्य कौन्तेय भीमसेनं युधां पतिम् ।

आशीविषमिव क्रुद्धं तस्माद्द्रवति वाहिनी ॥ ०५६ ॥

पीतरक्तासितसितास्ताराचन्द्रार्कमण्डिताः ।
पताका विप्रकीर्यन्ते छत्राण्येतानि चार्जुन ॥ ०५७ ॥

सौवर्णा राजताश्चैव तैजसाश्च पृथग्विधाः ।
केतवो विनिपात्यन्ते हस्त्यश्वं विप्रकीर्यते ॥ ०५८ ॥

रथेभ्यः प्रपतन्त्येते रथिनो विगतासवः ।
नानावर्णैर्हता बाणैः पाञ्चालैरपलायिभिः ॥ ०५९ ॥

निर्मनुष्यान्गजानश्वान्रथांश्चैव धनञ्जय ।
समाद्रवन्ति पाञ्चाला धार्तराष्ट्रांस्तरस्विनः ॥ ०६० ॥

मृद्नन्ति च नरव्याघ्रा भीमसेनव्यपाश्रयात् ।
बलं परेषां दुर्धर्षं त्यक्त्वा प्राणानरिंदम ॥ ०६१ ॥

एते नदन्ति पाञ्चाला धमन्त्यपि च वारिजान् ।
अभिद्रवन्ति च रणे निघ्नन्तः सायकैः परान् ॥ ०६२ ॥

पश्य स्वर्गस्य माहात्म्यं पाञ्चाला हि परंतप ।
धार्तराष्ट्रान्विनिघ्नन्ति क्रुद्धाः सिंहा इव द्विपान् ॥ ०६३ ॥

सर्वतश्चाभिपन्नैषा धार्तराष्ट्री महाचमूः ।
पाञ्चालैर्मानसादेत्य हंसैर्गङ्गेव वेगितैः ॥ ०६४ ॥

सुभृशं च पराक्रान्ताः पाञ्चालानां निवारणे ।
कृपकर्णादयो वीरा ऋषभाणामिवर्षभाः ॥ ०६५ ॥

सुनिमग्नांश्च भीमास्त्रैर्धार्तराष्ट्रान्महारथान् ।
धृष्टद्युम्नमुखा वीरा घ्नन्ति शत्रून्सहस्रशः ॥ ०६६ ॥

विषण्णभूयिष्ठरथा धार्तराष्ट्री महाचमूः ॥ ०६६ ॥

पश्य भीमेन नाराचैश्छिन्ना नागाः पतन्त्यमी ।
वज्रिवज्राहतानीव शिखराणि महीभृताम् ॥ ०६७ ॥

भीमसेनस्य निर्विद्धा बाणैः संनतपर्वभिः ।
स्वान्यनीकानि मृद्नन्तो द्रवन्त्येते महागजाः ॥ ०६८ ॥

नाभिजानासि भीमस्य सिंहनादं दुरुत्सहम् ।
नदतोऽर्जुन सङ्ग्रामे वीरस्य जितकाशिनः ॥ ०६९ ॥

एष नैषादिरभ्येति द्विपमुख्येन पाण्डवम् ।
जिघांसुस्तोमरैः क्रुद्धो दण्डपाणिरिवान्तकः ॥ ०७० ॥

सतोमरावस्य भुजौ छिन्नौ भीमेन गर्जतः ।
तीक्ष्णैरग्निशिखाप्रख्यैर्नाराचैर्दशभिर्हतः ॥ ०७१ ॥

हत्वैनं पुनरायाति नागानन्यान्प्रहारिणः ।
पश्य नीलाम्बुदनिभान्महामात्रैरधिष्ठितान् ॥ ०७२ ॥

शक्तितोमरसङ्काशैर्विनिघ्नन्तं वृकोदरम् ॥ ०७२ ॥

सप्त सप्त च नागांस्तान्वैजयन्तीश्च सध्वजाः ।
निहत्य निशितैर्बाणैश्छिन्नाः पार्थाग्रजेन ते ॥ ०७३ ॥

दशभिर्दशभिश्चैको नाराचैर्निहतो गजः ॥ ०७३ ॥

न चासौ धार्तराष्ट्राणां श्रूयते निनदस्तथा ।
पुरंदरसमे क्रुद्धे निवृत्ते भरतर्षभे ॥ ०७४ ॥

अक्षौहिण्यस्तथा तिस्रो धार्तराष्ट्रस्य संहताः ।
क्रुद्धेन नरसिंहेन भीमसेनेन वारिताः ॥ ०७५ ॥

सञ्जय उवाच ॥

भीमसेनेन तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ।
अर्जुनो व्यधमच्छिष्टानहितान्निशितैः शरैः ॥ ०७६ ॥

ते वध्यमानाः समरे संशप्तकगणाः प्रभो ।
शक्रस्यातिथितां गत्वा विशोका ह्यभवन्मुदा ॥ ०७७ ॥

पार्थश्च पुरुषव्याघ्रः शरैः संनतपर्वभिः ।
जघान धार्तराष्ट्रस्य चतुर्विधबलां चमूम् ॥ ०७८ ॥

---

# अध्याय ०४४

धृतराष्ट्र उवाच ॥

निवृत्ते भीमसेने च पाण्डवे च युधिष्ठिरे ।
वध्यमाने बले चापि मामके पाण्डुसृञ्जयैः ॥ ००१ ॥

द्रवमाणे बलौघे च निराक्रन्दे मुहुर्मुहुः ।
किमकुर्वन्त कुरवस्तन्ममाचक्ष्व सञ्जय ॥ ००२ ॥

सञ्जय उवाच ॥

दृष्ट्वा भीमं महाबाहुं सूतपुत्रः प्रतापवान् ।

क्रोधरक्तेक्षणो राजन्भीमसेनमुपाद्रवत् ॥ ००३ ॥

तावकं च बलं दृष्ट्वा भीमसेनात्पराङ्मुखम् ।
यत्नेन महता राजन्पर्यवस्थापयद्बली ॥ ००४ ॥

व्यवस्थाप्य महाबाहुस्तव पुत्रस्य वाहिनीम् ।
प्रत्युद्ययौ तदा कर्णः पाण्डवान्युद्धदुर्मदान् ॥ ००५ ॥

प्रत्युद्ययुस्तु राधेयं पाण्डवानां महारथाः ।
धुन्वानाः कार्मुकाण्याजौ विक्षिपन्तश्च सायकान् ॥ ००६ ॥

भीमसेनः शिनेर्नप्ता शिखण्डी जनमेजयः ।
धृष्टद्युम्नश्च बलवान्सर्वे चापि प्रभद्रकाः ॥ ००७ ॥

पाञ्चालाश्च नरव्याघ्राः समन्तात्तव वाहिनीम् ।
अभ्यद्रवन्त सङ्क्रुद्धाः समरे जितकाशिनः ॥ ००८ ॥

तथैव तावका राजन्पाण्डवानामनीकिनीम् ।
अभ्यद्रवन्त त्वरिता जिघांसन्तो महारथाः ॥ ००९ ॥

रथनागाश्वकलिलं पत्तिध्वजसमाकुलम् ।
बभूव पुरुषव्याघ्र सैन्यमद्भुतदर्शनम् ॥ ०१० ॥

शिखण्डी च ययौ कर्णं धृष्टद्युम्नः सुतं तव ।
दुःशासनं महाराज महत्या सेनया वृतम् ॥ ०११ ॥

नकुलो वृषसेनं च चित्रसेनं युधिष्ठिरः ।
उलूकं समरे राजन्सहदेवः समभ्ययात् ॥ ०१२ ॥

सात्यकिः शकुनिं चापि भीमसेनश्च कौरवान् ।
अर्जुनं च रणे यत्तं द्रोणपुत्रो महारथः ॥ ०१३ ॥

युधामन्युं महेष्वासं गौतमोऽभ्यपतद्रणे ।
कृतवर्मा च बलवानुत्तमौजसमाद्रवत् ॥ ०१४ ॥

भीमसेनः कुरून्सर्वान्पुत्रांश्च तव मारिष ।
सहानीकान्महाबाहुरेक एवाभ्यवारयत् ॥ ०१५ ॥

शिखण्डी च ततः कर्णं विचरन्तमभीतवत् ।
भीष्महन्ता महाराज वारयामास पत्रिभिः ॥ ०१६ ॥

प्रतिरब्धस्ततः कर्णो रोषात्प्रस्फुरिताधरः ।
शिखण्डिनं त्रिभिर्बाणैर्भ्रुवोर्मध्ये व्यताडयत् ॥ ०१७ ॥

धारयंस्तु स तान्बाणाञ्शिखण्डी बह्वशोभत ।
राजतः पर्वतो यद्वत्त्रिभिः शृङ्गैः समन्वितः ॥ ०१८ ॥

सोऽतिविद्धो महेष्वासः सूतपुत्रेण संयुगे ।
कर्णं विव्याध समरे नवत्या निशितैः शरैः ॥ ०१९ ॥

तस्य कर्णो हयान्हत्वा सारथिं च त्रिभिः शरैः ।
उन्ममाथ ध्वजं चास्य क्षुरप्रेण महारथः ॥ ०२० ॥

हताश्वात्तु ततो यानादवप्लुत्य महारथः ।
शक्तिं चिक्षेप कर्णाय सङ्क्रुद्धः शत्रुतापनः ॥ ०२१ ॥

तां छित्त्वा समरे कर्णस्त्रिभिर्भारत सायकैः ।
शिखण्डिनमथाविध्यन्नवभिर्निशितैः शरैः ॥ ०२२ ॥

कर्णचापच्युतान्बाणान्वर्जयंस्तु नरोत्तमः ।
अपयातस्ततस्तूर्णं शिखण्डी जयतां वरः ॥ ०२३ ॥

ततः कर्णो महाराज पाण्डुसैन्यान्यशातयत् ।
तूलराशिं समासाद्य यथा वायुर्महाजवः ॥ ०२४ ॥

धृष्टद्युम्नो महाराज तव पुत्रेण पीडितः ।
दुःशासनं त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे ॥ ०२५ ॥

तस्य दुःशासनो बाहुं सव्यं विव्याध मारिष ।
शितेन रुक्मपुङ्खेन भल्लेन नतपर्वणा ॥ ०२६ ॥

धृष्टद्युम्नस्तु निर्विद्धः शरं घोरममर्षणः ।
दुःशासनाय सङ्क्रुद्धः प्रेषयामास भारत ॥ ०२७ ॥

आपतन्तं महावेगं धृष्टद्युम्नसमीरितम् ।
शरैश्चिच्छेद पुत्रस्ते त्रिभिरेव विशां पते ॥ ०२८ ॥

अथापरैः सप्तदशैर्भल्लैः कनकभूषणैः ।
धृष्टद्युम्नं समासाद्य बाह्वोरुरसि चार्दयत् ॥ ०२९ ॥

ततः स पार्षतः क्रुद्धो धनुश्चिच्छेद मारिष ।
क्षुरप्रेण सुतीक्ष्णेन तत उच्चुक्रुशुर्जनाः ॥ ०३० ॥

अथान्यद्धनुरादाय पुत्रस्ते भरतर्षभ ।
धृष्टद्युम्नं शरव्रातैः समन्तात्पर्यवारयत् ॥ ०३१ ॥

तव पुत्रस्य ते दृष्ट्वा विक्रमं तं महात्मनः ।
व्यहसन्त रणे योधाः सिद्धाश्चाप्सरसां गणाः ॥ ०३२ ॥

ततः प्रववृते युद्धं तावकानां परैः सह ।
घोरं प्राणभृतां काले घोररूपं परंतप ॥ ०३३ ॥

नकुलं वृषसेनस्तु विद्ध्वा पञ्चभिरायसैः ।

पितुः समीपे तिष्ठन्तं त्रिभिरन्यैरविध्यत ॥ ०३४ ॥

नकुलस्तु ततः क्रुद्धो वृषसेनं स्मयन्निव ।
नाराचेन सुतीक्ष्णेन विव्याध हृदये दृढम् ॥ ०३५ ॥

सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ।
शत्रुं विव्याध विंशत्या स च तं पञ्चभिः शरैः ॥ ०३६ ॥

ततः शरसहस्रेण तावुभौ पुरुषर्षभौ ।
अन्योन्यमाच्छादयतामथाभज्यत वाहिनी ॥ ०३७ ॥

दृष्ट्वा तु प्रद्रुतां सेनां धार्तराष्ट्रस्य सूतजः ।
निवारयामास बलादनुपत्य विशां पते ॥ ०३८ ॥

निवृत्ते तु ततः कर्णे नकुलः कौरवान्ययौ ॥ ०३८ ॥

कर्णपुत्रस्तु समरे हित्वा नकुलमेव तु ।
जुगोप चक्रं त्वरितं राधेयस्यैव मारिष ॥ ०३९ ॥

उलूकस्तु रणे क्रुद्धः सहदेवेन वारितः ।
तस्याश्वांश्चतुरो हत्वा सहदेवः प्रतापवान् ॥ ०४० ॥

सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ ०४० ॥

उलूकस्तु ततो यानादवप्लुत्य विशां पते ।
त्रिगर्तानां बलं पूर्णं जगाम पितृनन्दनः ॥ ०४१ ॥

सात्यकिः शकुनिं विद्ध्वा विंशत्या निशितैः शरैः ।
ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ॥ ०४२ ॥

सौबलस्तस्य समरे क्रुद्धो राजन्प्रतापवान् ।

विदार्य कवचं भूयो ध्वजं चिच्छेद काञ्चनम्  ॥ ०४३  ॥

अथैनं निशितैर्बाणैः सात्यकिः प्रत्यविध्यत ।
सारथिं च महाराज त्रिभिरेव समार्दयत्  ॥ ०४४  ॥

अथास्य वाहांस्त्वरितः शरैर्निन्ये यमक्षयम्  ॥ ०४४  ॥

ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ ।
आरुरोह रथं तूर्णमुलूकस्य महारथः  ॥ ०४५  ॥

अपोवाहाथ शीघ्रं स शैनेयाद्युद्धशालिनः  ॥ ०४५  ॥

सात्यकिस्तु रणे राजंस्तावकानामनीकिनीम् ।
अभिदुद्राव वेगेन ततोऽनीकमभिद्यत  ॥ ०४६  ॥

शैनेयशरनुन्नं तु ततः सैन्यं विशां पते ।
भेजे दश दिशस्तूर्णं न्यपतच्च गतासुवत्  ॥ ०४७  ॥

भीमसेनं तव सुतो वारयामास संयुगे ।
तं तु भीमो मुहूर्तेन व्यश्वसूतरथध्वजम्  ॥ ०४८  ॥

चक्रे लोकेश्वरं तत्र तेनातुष्यन्त चारणाः  ॥ ०४८  ॥

ततोऽपायान्नृपस्तत्र भीमसेनस्य गोचरात् ।
कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत्  ॥ ०४९  ॥

तत्र रावो महानासीद्भीममेकं जिघांसताम्  ॥ ०४९  ॥

युधामन्युः कृपं विद्ध्वा धनुरस्याशु चिच्छिदे ।
अथान्यद्धनुरादाय कृपः शस्त्रभृतां वरः  ॥ ०५०  ॥

युधामन्योर्ध्वजं सूतं छत्रं चापातयत्क्षितौ ।
ततोऽपायाद्रथेनैव युधामन्युर्महारथः ॥ ०५१ ॥

उत्तमौजास्तु हार्दिक्यं शरैर्भीमपराक्रमम् ।
छादयामास सहसा मेघो वृष्ट्या यथाचलम् ॥ ०५२ ॥

तद्युद्धं सुमहच्चासीद्घोररूपं परंतप ।
यादृशं न मया युद्धं दृष्टपूर्वं विशां पते ॥ ०५३ ॥

कृतवर्मा ततो राजन्नुत्तमौजसमाहवे ।
हृदि विव्याध स तदा रथोपस्थ उपाविशत् ॥ ०५४ ॥

सारथिस्तमपोवाह रथेन रथिनां वरम् ।
ततस्तु सत्वरं राजन्पाण्डुसैन्यमुपाद्रवत् ॥ ०५५ ॥

---

# अध्याय ०४५

सञ्जय उवाच ॥

द्रौणिस्तु रथवंशेन महता परिवारितः ।
आपतत्सहसा राजन्यत्र राजा व्यवस्थितः ॥ ००१ ॥

तमापतन्तं सहसा शूरः शौरिसहायवान् ।
दधार सहसा पार्थो वेलेव मकरालयम् ॥ ००२ ॥

ततः क्रुद्धो महाराज द्रोणपुत्रः प्रतापवान् ।
अर्जुनं वासुदेवं च छादयामास पत्रिभिः ॥ ००३ ॥

अवच्छन्नौ ततः कृष्णौ दृष्ट्वा तत्र महारथाः ।
विस्मयं परमं गत्वा प्रैक्षन्त कुरवस्तदा ॥ ००४ ॥

अर्जुनस्तु ततो दिव्यमस्त्रं चक्रे हसन्निव ।
तदस्त्रं ब्राह्मणो युद्धे वारयामास भारत ॥ ००५ ॥

यद्यद्धि व्याक्षिपद्युद्धे पाण्डवोऽस्त्रं जिघांसया ।
तत्तदस्त्रं महेष्वासो द्रोणपुत्रो व्यशातयत् ॥ ००६ ॥

अस्त्रयुद्धे ततो राजन्वर्तमाने भयावहे ।
अपश्याम रणे द्रौणिं व्यात्ताननमिवान्तकम् ॥ ००७ ॥

स दिशो विदिशश्चैव छादयित्वा विजिह्मगैः ।
वासुदेवं त्रिभिर्बाणैरविध्यद्दक्षिणे भुजे ॥ ००८ ॥

ततोऽर्जुनो हयान्हत्वा सर्वांस्तस्य महात्मनः ।
चकार समरे भूमिं शोणितौघतरङ्गिणीम् ॥ ००९ ॥

निहता रथिनः पेतुः पार्थचापच्युतैः शरैः ।
हयाश्च पर्यधावन्त मुक्तयोक्त्रास्ततस्ततः ॥ ०१० ॥

तद्दृष्ट्वा कर्म पार्थस्य द्रौणिराहवशोभिनः ।
अवाकिरद्रणे कृष्णं समन्तान्निशितैः शरैः ॥ ०११ ॥

ततोऽर्जुनं महाराज द्रौणिरायम्य पत्रिणा ।
वक्षोदेशे समासाद्य ताडयामास संयुगे ॥ ०१२ ॥

सोऽतिविद्धो रणे तेन द्रोणपुत्रेण भारत ।
आदत्त परिघं घोरं द्रौणेश्चैनमवाक्षिपत् ॥ ०१३ ॥

तमापतन्तं परिघं कार्तस्वरविभूषितम् ।
द्रौणिश्चिच्छेद सहसा तत उच्चुक्रुशुर्जनाः ॥ ०१४ ॥

सोऽनेकधापतद्भूमौ भारद्वाजस्य सायकैः ।
विशीर्णः पर्वतो राजन्यथा स्यान्मातरिश्वना ॥ ०१५ ॥

ततोऽर्जुनो रणे द्रौणिं विव्याध दशभिः शरैः ।
सारथिं चास्य भल्लेन रथनीडादपाहरत् ॥ ०१६ ॥

स सङ्गृह्य स्वयं वाहान्कृष्णौ प्राच्छादयच्छरैः ।
तत्राद्भुतमपश्याम द्रौणेराशु पराक्रमम् ॥ ०१७ ॥

अयच्छत्तुरगान्यच्च फल्गुनं चाप्ययोधयत् ।
तदस्य समरे राजन्सर्वे योधा अपूजयन् ॥ ०१८ ॥

यदा त्वग्रस्यत रणे द्रोणपुत्रेण फल्गुनः ।
ततो रश्मीन्रथाश्वानां क्षुरप्रैश्चिच्छिदे जयः ॥ ०१९ ॥

प्राद्रवंस्तुरगास्ते तु शरवेगप्रबाधिताः ।
ततोऽभून्निनदो भूयस्तव सैन्यस्य भारत ॥ ०२० ॥

पाण्डवास्तु जयं लब्ध्वा तव सैन्यमुपाद्रवन् ।
समन्तान्निशितान्बाणान्विमुञ्चन्तो जयैषिणः ॥ ०२१ ॥

पाण्डवैस्तु महाराज धार्तराष्ट्री महाचमूः ।
पुनः पुनरथो वीरैरभज्यत जयोद्धतैः ॥ ०२२ ॥

पश्यतां ते महाराज पुत्राणां चित्रयोधिनाम् ।
शकुनेः सौबलेयस्य कर्णस्य च महात्मनः ॥ ०२३ ॥

वार्यमाणा महासेना पुत्रैस्तव जनेश्वर ।
नावतिष्ठत सङ्ग्रामे ताड्यमाना समन्ततः ॥ ०२४ ॥

ततो योधैर्महाराज पलायद्भिस्ततस्ततः ।
अभवद्व्याकुलं भीतैः पुत्राणां ते महद्बलम् ॥ ०२५ ॥

तिष्ठ तिष्ठेति सततं सूतपुत्रस्य जल्पतः ।
नावतिष्ठत सा सेना वध्यमाना महात्मभिः ॥ ०२६ ॥

अथोत्क्रुष्टं महाराज पाण्डवैर्जितकाशिभिः ।
धार्तराष्ट्रबलं दृष्ट्वा द्रवमाणं समन्ततः ॥ ०२७ ॥

ततो दुर्योधनः कर्णमब्रवीत्प्रणयादिव ।
पश्य कर्ण यथा सेना पाण्डवैरर्दिता भृशम् ॥ ०२८ ॥

त्वयि तिष्ठति संत्रासात्पलायति समन्ततः ।
एतज्ज्ञात्वा महाबाहो कुरु प्राप्तमरिंदम ॥ ०२९ ॥

सहस्राणि च योधानां त्वामेव पुरुषर्षभ ।
क्रोशन्ति समरे वीर द्राव्यमाणानि पाण्डवैः ॥ ०३० ॥

एतच्छ्रुत्वा तु राधेयो दुर्योधनवचो महत् ।
मद्रराजमिदं वाक्यमब्रवीत्सूतनन्दनः ॥ ०३१ ॥

पश्य मे भुजयोर्वीर्यमस्त्राणां च जनेश्वर ।
अद्य हन्मि रणे सर्वान्पाञ्चालान्पाण्डुभिः सह ॥ ०३२ ॥

वाहयाश्वान्नरव्याघ्र भद्रेणैव जनेश्वर ॥ ०३२ ॥

एवमुक्त्वा महाराज सूतपुत्रः प्रतापवान् ।
प्रगृह्य विजयं वीरो धनुःश्रेष्ठं पुरातनम् ॥ ०३३ ॥

सज्यं कृत्वा महाराज संमृज्य च पुनः पुनः ॥ ०३३ ॥

संनिवार्य च योधान्स्वान्सत्येन शपथेन च ।
प्रायोजयदमेयात्मा भार्गवास्त्रं महाबलः ॥ ०३४ ॥

ततो राजन्सहस्राणि प्रयुतान्यर्बुदानि च ।
कोटिशश्च शरास्तीक्ष्णा निरगच्छन्महामृधे ॥ ०३५ ॥

ज्वलितैस्तैर्महाघोरैः कङ्कबर्हिणवाजितैः ।
संछन्ना पाण्डवी सेना न प्राज्ञायत किञ्चन ॥ ०३६ ॥

हाहाकारो महानासीत्पाञ्चालानां विशां पते ।
पीडितानां बलवता भार्गवास्त्रेण संयुगे ॥ ०३७ ॥

निपतद्भिर्गजै राजन्नरैश्चापि सहस्रशः ।
रथैश्चापि नरव्याघ्र हयैश्चापि समन्ततः ॥ ०३८ ॥

प्राकम्पत मही राजन्निहतैस्तैस्ततस्ततः ।
व्याकुलं सर्वमभवत्पाण्डवानां महद्बलम् ॥ ०३९ ॥

कर्णस्त्वेको युधां श्रेष्ठो विधूम इव पावकः ।
दहञ्शत्रून्नरव्याघ्र शुशुभे स परंतपः ॥ ०४० ॥

ते वध्यमानाः कर्णेन पाञ्चालाश्चेदिभिः सह ।
तत्र तत्र व्यमुह्यन्त वनदाहे यथा द्विपाः ॥ ०४१ ॥

चुक्रुशुस्ते नरव्याघ्र यथाप्राग्वा नरोत्तमाः ॥ ०४१ ॥

तेषां तु क्रोशतां श्रुत्वा भीतानां रणमूर्धनि ।
धावतां च दिशो राजन्वित्रस्तानां समन्ततः ॥ ०४२ ॥

आर्तनादो महांस्तत्र प्रेतानामिव संप्लवे ॥ ०४२ ॥

वध्यमानांस्तु तान्दृष्ट्वा सूतपुत्रेण मारिष ।
वित्रेसुः सर्वभूतानि तिर्यग्योनिगतान्यपि ॥ ०४३ ॥

ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः ।
अर्जुनं वासुदेवं च व्याक्रोशन्त मुहुर्मुहुः ॥ ०४४ ॥

प्रेतराजपुरे यद्वत्प्रेतराजं विचेतसः ॥ ०४४ ॥

अथाब्रवीद्वासुदेवं कुन्तीपुत्रो धनञ्जयः ।
भार्गवास्त्रं महाघोरं दृष्ट्वा तत्र सभीरितम् ॥ ०४५ ॥

पश्य कृष्ण महाबाहो भार्गवास्त्रस्य विक्रमम् ।
नैतदस्त्रं हि समरे शक्यं हन्तुं कथञ्चन ॥ ०४६ ॥

सूतपुत्रं च संरब्धं पश्य कृष्ण महारणे ।
अन्तकप्रतिमं वीरं कुर्वाणं कर्म दारुणम् ॥ ०४७ ॥

सुतीक्ष्णं चोदयन्नश्वान्प्रेक्षते मां मुहुर्मुहुः ।
न च पश्यामि समरे कर्णस्य प्रपलायितम् ॥ ०४८ ॥

जीवन्प्राप्नोति पुरुषः संख्ये जयपराजयौ ।
जितस्य तु हृषीकेश वध एव कुतो जयः ॥ ०४९ ॥

ततो जनार्दनः प्रायाद्द्रष्टुमिच्छन्युधिष्ठिरम् ।
श्रमेण ग्राहयिष्यंश्च कर्णं युद्धेन मारिष ॥ ०५० ॥

अर्जुनं चाब्रवीत्कृष्णो भृशं राजा परिक्षतः ।
तमाश्वास्य कुरुश्रेष्ठ ततः कर्णं हनिष्यसि ॥ ०५१ ॥

ततो धनञ्जयो द्रष्टुं राजानं बाणपीडितम् ।
रथेन प्रययौ क्षिप्रं सङ्ग्रामे केशवाज्ञया ॥ ०५२ ॥

गच्छन्नेव तु कौन्तेयो धर्मराजदिदृक्षया ।
सैन्यमालोकयामास नापश्यत्तत्र चाग्रजम् ॥ ०५३ ॥

युद्धं कृत्वा तु कौन्तेयो द्रोणपुत्रेण भारत ।
दुःसहं वज्रिणा संख्ये पराजिग्ये भृगोः सुतम् ॥ ०५४ ॥

द्रौणिं पराजित्य ततोग्रधन्वा ; कृत्वा महद्दुष्करमार्यकर्म ।
आलोकयामास ततः स्वसैन्यं ; धनञ्जयः शत्रुभिरप्रधृष्यः ॥ ०५५ ॥

स युध्यमानः पृतनामुखस्था ;ञ्शूराञ्शूरो हर्षयन्सव्यसाची ।
पूर्वापदानैः प्रथितैः प्रशंस ;न्स्थिरांश्चकारात्मरथाननीके ॥ ०५६ ॥

अपश्यमानस्तु किरीटमाली ; युधि ज्येष्ठं भ्रातरमाजमीढम् ।
उवाच भीमं तरसाभ्युपेत्य ; राज्ञः प्रवृत्तिस्त्विह केति राजन् ॥ ०५७ ॥

भीम उवाच ॥

अपयात इतो राजा धर्मपुत्रो युधिष्ठिरः ।
कर्णबाणविभुग्नाङ्गो यदि जीवेत्कथञ्चन ॥ ०५८ ॥

अर्जुन उवाच ॥

तस्माद्भवाञ्शीघ्रमितः प्रयातु ; राज्ञः प्रवृत्त्यै कुरुसत्तमस्य ।
नूनं हि विद्धोऽतिभृशं पृषत्कैः ; कर्णेन राजा शिबिरं गतोऽसौ ॥ ०५९ ॥

यः संप्रहारे निशि संप्रवृत्ते ; द्रोणेन विद्धोऽतिभृशं तरस्वी ।
तस्थौ च तत्रापि जयप्रतीक्षो ; द्रोणेन यावन्न हतः किलासीत् ॥ ०६० ॥

स संशयं गमितः पाण्डवाग्र्यः ; संख्येऽद्य कर्णेन महानुभावः ।
ज्ञातुं प्रयाह्याशु तमद्य भीम ; स्थास्याम्यहं शत्रुगणान्निरुध्य ॥ ०६१ ॥

भीम उवाच ॥

त्वमेव जानीहि महानुभाव ; राज्ञः प्रवृत्तिं भरतर्षभस्य ।
अहं हि यद्यर्जुन यामि तत्र ; वक्ष्यन्ति मां भीत इति प्रवीराः ॥ ०६२ ॥

ततोऽब्रवीदर्जुनो भीमसेनं ; संशप्तकाः प्रत्यनीकं स्थिता मे ।
एतानहत्वा न मया तु शक्य ;मितोऽपयातुं रिपुसंघगोष्ठात् ॥ ०६३ ॥

अथाब्रवीदर्जुनं भीमसेनः ; स्ववीर्यमाश्रित्य कुरुप्रवीर ।
संशप्तकान्प्रतियोत्स्यामि संख्ये ; सर्वानहं याहि धनञ्जयेति ॥ ०६४ ॥

तद्भीमसेनस्य वचो निशम्य ; सुदुर्वचं भ्रातुरमित्रमध्ये ।
द्रष्टुं कुरुश्रेष्ठमभिप्रयातुं ; प्रोवाच वृष्णिप्रवरं तदानीम् ॥ ०६५ ॥

चोदयाश्वान्हृषीकेश विगाह्यैतं रथार्णवम् ।
अजातशत्रुं राजानं द्रष्टुमिच्छामि केशव ॥ ०६६ ॥

ततो हयान्सर्वदाशार्हमुख्यः ; प्राचोदयद्भीममुवाच चेदम् ।
नैतच्चित्रं तव कर्माद्य वीर ; यास्यामहे जहि भीमारिसंघान् ॥ ०६७ ॥

ततो ययौ हृषीकेशो यत्र राजा युधिष्ठिरः ।
शीघ्राच्छीघ्रतरं राजन्वाजिभिर्गरुडोपमैः ॥ ०६८ ॥

प्रत्यनीके व्यवस्थाप्य भीमसेनमरिंदमम् ।
संदिश्य चैव राजेन्द्र युद्धं प्रति वृकोदरम् ॥ ०६९ ॥

ततस्तु गत्वा पुरुषप्रवीरौ ; राजानमासाद्य शयानमेकम् ।
रथादुभौ प्रत्यवरुह्य तस्मा ;द्ववन्दतुर्धर्मराजस्य पादौ ॥ ०७० ॥

तौ दृष्ट्वा पुरुषव्याघ्रौ क्षेमिणौ पुरुषर्षभ ।
मुदाभ्युपगतौ कृष्णावश्विनाविव वासवम् ॥ ०७१ ॥

तावभ्यनन्दद्राजा हि विवस्वानश्विनाविव ।
हते महासुरे जम्भे शक्रविष्णू यथा गुरुः ॥ ०७२ ॥

मन्यमानो हतं कर्णं धर्मराजो युधिष्ठिरः ।
हर्षगद्गदया वाचा प्रीतः प्राह परंतपौ ॥ ०७३ ॥

---

# अध्याय ०४६

सञ्जय उवाच ॥

महासत्त्वौ तु तौ दृष्ट्वा सहितौ केशवार्जुनौ ।
हतमाधिरथिं मेने संख्ये गाण्डीवधन्वना ॥ ००१ ॥

तावभ्यनन्दत्कौन्तेयः साम्ना परमवल्गुना ।
स्मितपूर्वममित्रघ्नः पूजयन्भरतर्षभ ॥ ००२ ॥

युधिष्ठिर उवाच ॥

स्वागतं देवकीपुत्र स्वागतं ते धनञ्जय ।
प्रियं मे दर्शनं बाढं युवयोरच्युतार्जुनौ ॥ ००३ ॥

अक्षताभ्यामरिष्टाभ्यां कथं युध्य महारथम् ।
आशीविषसमं युद्धे सर्वशस्त्रविशारदम् ॥ ००४ ॥

अग्रगं धार्तराष्ट्राणां सर्वेषां शर्म वर्म च ।
रक्षितं वृषसेनेन सुषेणेन च धन्विना ॥ ००५ ॥

अनुज्ञातं महावीर्यं रमेणास्त्रेषु दुर्जयम् ।
त्रातारं धार्तराष्ट्राणां गन्तारं वाहिनीमुखे ॥ ००६ ॥

हन्तारमरिसैन्यानाममित्रगणमर्दनम् ।
दुर्योधनहिते युक्तमस्मद्युद्धाय चोद्यतम् ॥ ००७ ॥

अप्रधृष्यं महायुद्धे देवैरपि सवासवैः ।
अनलानिलयोस्तुल्यं तेजसा च बलेन च ॥ ००८ ॥

पातालमिव गम्भीरं सुहृदानन्दवर्धनम् ।
अन्तकाभममित्राणां कर्णं हत्वा महाहवे ॥ ००९ ॥

दिष्ट्या युवामनुप्राप्तौ जित्वासुरमिवामरौ ॥ ००९ ॥

तेन युद्धमदीनेन मया ह्यद्याच्युतार्जुनौ ।
कुपितेनान्तकेनेव प्रजाः सर्वा जिघांसता ॥ ०१० ॥

तेन केतुश्च मे छिन्नो हतौ च पार्ष्णिसारथी ।
हतवाहः कृतश्चास्मि युयुधानस्य पश्यतः ॥ ०११ ॥

धृष्टद्युम्नस्य यमयोर्वीरस्य च शिखण्डिनः ।
पश्यतां द्रौपदेयानां पाञ्चालानां च सर्वशः ॥ ०१२ ॥

एताञ्जित्वा महावीर्यान्कर्णः शत्रुगणान्बहून् ।
जितवान्मां महाबाहो यतमानं महारणे ॥ ०१३ ॥

अनुसृत्य च मां युद्धे परुषाण्युक्तवान्बहु ।

तत्र तत्र युधां श्रेष्ठः परिभूय न संशयः ॥ ०१४ ॥

भीमसेनप्रभावात्तु यज्जीवामि धनञ्जय ।
बहुनात्र किमुक्तेन नाहं तत्सोढुमुत्सहे ॥ ०१५ ॥

त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय ।
न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित् ॥ ०१६ ॥

तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय ।
आत्मनो मरणं जानन्वाध्रीणस इव द्विपः ॥ ०१७ ॥

यस्यायमगमत्कालश्चिन्तयानस्य मे विभो ।
कथं शक्यो मया कर्णो युद्धे क्षपयितुं भवेत् ॥ ०१८ ॥

जाग्रत्स्वपंश्च कौन्तेय कर्णमेव सदा ह्यहम् ।
पश्यामि तत्र तत्रैव कर्णभूतमिदं जगत् ॥ ०१९ ॥

यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय ।
तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितम् ॥ ०२० ॥

सोऽहं तेनैव वीरेण समरेष्वपलायिना ।
सहयः सरथः पार्थ जित्वा जीवन्विसर्जितः ॥ ०२१ ॥

को नु मे जीवितेनार्थो राज्येनार्थोऽथ वा पुनः ।
ममैवं धिक्कृतस्येह कर्णेनाहवशोभिना ॥ ०२२ ॥

न प्राप्तपूर्वं यद्भीष्मात्कृपाद्द्रोणाच्च संयुगे ।
तत्प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् ॥ ०२३ ॥

तत्त्वा पृच्छामि कौन्तेय यथा ह्यकुशलस्तथा ।
तन्ममाचक्ष्व कार्त्स्न्येन यथा कर्णस्त्वया हतः ॥ ०२४ ॥

शक्रवीर्यसमो युद्धे यमतुल्यपराक्रमः ।
रामतुल्यस्तथास्त्रे यः स कथं वै निषूदितः ॥ ०२५ ॥

महारथः समाख्यातः सर्वयुद्धविशारदः ।
धनुर्धराणां प्रवरः सर्वेषामेकपूरुषः ॥ ०२६ ॥

पूजितो धृतराष्ट्रेण सपुत्रेण विशां पते ।
सदा त्वदर्थं राधेयः स कथं निहतस्त्वया ॥ ०२७ ॥

धृतराष्ट्रो हि योधेषु सर्वेष्वेव सदार्जुन ।
तव मृत्युं रणे कर्णं मन्यते पुरुषर्षभः ॥ ०२८ ॥

स त्वया पुरुषव्याघ्र कथं युद्धे निषूदितः ।
तं ममाचक्ष्व बीभत्सो यथा कर्णो हतस्त्वया ॥ ०२९ ॥

सोत्सेधमस्य च शिरः पश्यतां सुहृदां हृतम् ।
त्वया पुरुषशार्दूल शार्दूलेन यथा रुरोः ॥ ०३० ॥

यः पर्युपासीत्प्रदिशो दिशश्च ; त्वां सूतपुत्रः समरे परीप्सन् ।
दित्सुः कर्णः समरे हस्तिपूगं ; स हीदानीं कङ्कपत्रैः सुतीक्ष्णैः ॥ ०३१ ॥

त्वया रणे निहतः सूतपुत्रः ; कच्चिच्छेते भूमितले दुरात्मा ।
कच्चित्प्रियं मे परमं त्वयाद्य ; कृतं रणे सूतपुत्रं निहत्य ॥ ०३२ ॥

यः सर्वतः पर्यपतत्त्वदर्थे ; मदान्वितो गर्वितः सूतपुत्रः ।
स शूरमानी समरे समेत्य ; कच्चित्त्वया निहतः संयुगेऽद्य ॥ ०३३ ॥

रौक्मं रथं हस्तिवरैश्च युक्तं ; रथं दित्सुर्यः परेभ्यस्त्वदर्थे ।
सदा रणे स्पर्धते यः स पापः ; कच्चित्त्वया निहतस्तात युद्धे ॥ ०३४ ॥

योऽसौ नित्यं शूरमदेन मत्तो ; विकत्थते संसदि कौरवाणाम् ।
प्रियोऽत्यर्थं तस्य सुयोधनस्य ; कच्चित्स पापो निहतस्त्वयाद्य ॥ ०३५ ॥

कच्चित्समागम्य धनुःप्रमुक्तै ;स्त्वत्प्रेषितैर्लोहितार्थैर्विहङ्गैः ।
शेतेऽद्य पापः स विभिन्नगात्रः ; कच्चिद्भग्नो धार्तराष्ट्रस्य बाहुः ॥ ०३६ ॥

योऽसौ सदा श्लाघते राजमध्ये ; दुर्योधनं हर्षयन्दर्पपूर्णः ।
अहं हन्ता फल्गुनस्येति मोहा ;त्कच्चिद्धतस्तस्य न वै तथा रथः ॥ ०३७ ॥

नाहं पादौ धावयिष्ये कदा चि ;द्यावत्स्थितः पार्थ इत्यल्पबुद्धिः ।
व्रतं तस्यैतत्सर्वदा शक्रसूनो ; कच्चित्त्वया निहतः सोऽद्य कर्णः ॥ ०३८ ॥

योऽसौ कृष्णामब्रवीद्दुष्टबुद्धिः ; कर्णः सभायां कुरुवीरमध्ये ।
किं पाण्डवांस्त्वं न जहासि कृष्णे ; सुदुर्बलान्पतितान्हीनसत्त्वान् ॥ ०३९ ॥

यत्तत्कर्णः प्रत्यजानात्त्वदर्थे ; नाहत्वाहं सह कृष्णेन पार्थम् ।
इहोपयातेति स पापबुद्धिः ; कच्चिच्छेते शरसंभिन्नगात्रः ॥ ०४० ॥

कच्चित्सङ्ग्रामे विदितो वा तदायं ; समागमः सृञ्जयकौरवाणाम् ।
यत्रावस्थामीदृशीं प्रापितोऽहं ; कच्चित्त्वया सोऽद्य हतः समेत्य ॥ ०४१ ॥

कच्चित्त्वया तस्य सुमन्दबुद्धे ;र्गाण्डीवमुक्तैर्विशिखैर्ज्वलद्भिः ।
सकुण्डलं भानुमदुत्तमाङ्गं ; कायात्प्रकृत्तं युधि सव्यसाचिन् ॥ ०४२ ॥

यत्तन्मया बाणसमर्पितेन ; ध्यातोऽसि कर्णस्य वधाय वीर ।
तन्मे त्वया कच्चिदमोघमद्य ; ध्यातं कृतं कर्णनिपातनेन ॥ ०४३ ॥

यद्दर्पपूर्णः स सुयोधनोऽस्मा ;नवेक्षते कर्णसमाश्रयेण ।
कच्चित्त्वया सोऽद्य समाश्रयोऽस्य ; भग्नः पराक्रम्य सुयोधनस्य ॥ ०४४ ॥

यो नः पुरा षण्ढतिलानवोच ;त्सभामध्ये पार्थिवानां समक्षम् ।

स दुर्मतिः कच्चिदुपेत्य संख्ये ; त्वया हतः सूतपुत्रोऽत्यमर्षी ॥ ०४५ ॥

यः सूतपुत्रः प्रहसन्दुरात्मा ; पुराब्रवीन्निर्जितां सौबलेन ।
स्वयं प्रसह्यानय याज्ञसेनी ;मपीह कच्चित्स हतस्त्वयाद्य ॥ ०४६ ॥

यः शस्त्रभृच्छ्रेष्ठतमं पृथिव्यां ; पितामहं व्याक्षिपदल्पचेताः ।
संख्यायमानोऽर्धरथः स कच्चि ;त्त्वया हतोऽद्याधिरथिर्दुरात्मा ॥ ०४७ ॥

अमर्षणं निकृतिसमीरणेरितं ; हृदि श्रितं ज्वलनमिमं सदा मम ।
हतो मया सोऽद्य समेत्य पापधी ;रिति ब्रुवन्प्रशमय मेऽद्य फल्गुन ॥ ०४८ ॥

---

# अध्याय ०४७

सञ्जय उवाच ॥

तद्धर्मशीलस्य वचो निशम्य ; राज्ञः क्रुद्धस्याधिरथौ महात्मा ।
उवाच दुर्धर्षमदीनसत्त्वं ; युधिष्ठिरं जिष्णुरनन्तवीर्यः ॥ ००१ ॥

संशप्तकैर्युध्यमानस्य मेऽद्य ; सेनाग्रयायी कुरुसैन्यस्य राजन् ।
आशीविषाभान्खगमान्प्रमुञ्च ;न्द्रौणिः पुरस्तात्सहसा व्यतिष्ठत् ॥ ००२ ॥

दृष्ट्वा रथं मेघनिभं ममेम ;मम्बष्ठसेना मरणे व्यतिष्ठत् ।
तेषामहं पञ्च शतानि हत्वा ; ततो द्रौणिमगमं पार्थिवाग्र्य ॥ ००३ ॥

ततोऽपरान्बाणसंघाननेका ;नाकर्णपूर्णायतविप्रमुक्तान् ।
ससर्ज शिक्षास्त्रबलप्रयत्नै ;स्तथा यथा प्रावृषि कालमेघः ॥ ००४ ॥

नैवाददानं न च संदधानं ; जानीमहे कतरेणास्यतीति ।
वामेन वा यदि वा दक्षिणेन ; स द्रोणपुत्रः समरे पर्यवर्तत् ॥ ००५ ॥

अविध्यन्मां पञ्चभिर्द्रोणपुत्रः ; शितैः शरैः पञ्चभिर्वासुदेवम् ।
अहं तु तं त्रिंशता वज्रकल्पैः ; समार्दयं निमिषस्यान्तरेण ॥ ००६ ॥

स विक्षरन्रुधिरं सर्वगात्रै ; रथानीकं सूतसूनोर्विवेश ।
मयाभिभूतः सैनिकानां प्रबर्हा ;नसावपश्यन्रुधिरेण प्रदिग्धान् ॥ ००७ ॥

ततोऽभिभूतं युधि वीक्ष्य सैन्यं ; विध्वस्तयोधं द्रुतवाजिनागम् ।
पञ्चाशता रथमुख्यैः समेतः ; कर्णस्त्वरन्मामुपायात्प्रमाथी ॥ ००८ ॥

तान्सूदयित्वाहमपास्य कर्णं ; द्रष्टुं भवन्तं त्वरयाभियातः ।
सर्वे पाञ्चाला ह्युद्विजन्ते स्म कर्णा ;द्गन्धाद्गावः केसरिणो यथैव ॥ ००९ ॥

महाझषस्येव मुखं प्रपन्नाः ; प्रभद्रकाः कर्णमभि द्रवन्ति ।
मृत्योरास्यं व्यात्तमिवान्वपद्य ;न्प्रभद्रकाः कर्णमासाद्य राजन् ॥ ०१० ॥

आयाहि पश्याद्य युयुत्समानं ; मां सूतपुत्रं च वृतौ जयाय ।
षड्सहस्रा भारत राजपुत्राः ; स्वर्गाय लोकाय रथा निमग्नाः ॥ ०११ ॥

समेत्याहं सूतपुत्रेण संख्ये ; वृत्रेण वज्रीव नरेन्द्रमुख्य ।
योत्स्ये भृशं भारत सूतपुत्र ;मस्मिन्सङ्ग्रामे यदि वै दृश्यतेऽद्य ॥ ०१२ ॥

कर्णं न चेदद्य निहन्मि राज ;न्सबान्धवं युध्यमानं प्रसह्य ।
प्रतिश्रुत्याकुर्वतां वै गतिर्या ; कष्टां गच्छेयं तामहं राजसिंह ॥ ०१३ ॥

आमन्त्रये त्वां ब्रूहि जयं रणे मे ; पुरा भीमं धार्तराष्ट्रा ग्रसन्ते ।
सौतिं हनिष्यामि नरेन्द्रसिंह ; सैन्यं तथा शत्रुगणांश्च सर्वान् ॥ ०१४ ॥

# युधिष्ठिरार्जुनयोः विवादः

## कृष्णकृतम् सांत्वनम्

## अध्याय ०४८

सञ्जय उवाच ॥

श्रुत्वा कर्णं कल्यमुदारवीर्यं ; क्रुद्धः पार्थः फल्गुनस्यामितौजाः ।
धनञ्जयं वाक्यमुवाच चेदं ; युधिष्ठिरः कर्णशराभितप्तः ॥ ००१ ॥

इदं यदि द्वैतवने ह्यवक्ष्यः ; कर्णं योद्धुं न प्रसहे नृपेति ।
वयं तदा प्राप्तकालानि सर्वे ; वृत्तान्युपैष्याम तदैव पार्थ ॥ ००२ ॥

मयि प्रतिश्रुत्य वधं हि तस्य ; बलस्य चाप्तस्य तथैव वीर ।
आनीय नः शत्रुमध्यं स कस्मा ;त्समुत्क्षिप्य स्थण्डिले प्रत्यपिंष्ठाः ॥ ००३ ॥

अन्वाशिष्म वयमर्जुन त्वयि ; यियासवो बहु कल्याणमिष्टम् ।
तन्नः सर्वं विफलं राजपुत्र ; फलार्थिनां निचुल इवातिपुष्पः ॥ ००४ ॥

प्रच्छादितं बडिशमिवामिषेण ; प्रच्छादितो गवय इवापवाचा ।
अनर्थकं मे दर्शितवानसि त्वं ; राज्यार्थिनो राज्यरूपं विनाशम् ॥ ००५ ॥

यत्तत्पृथां वागुवाचान्तरिक्षे ; सप्ताहजाते त्वयि मन्दबुद्धौ ।
जातः पुत्रो वासवविक्रमोऽयं ; सर्वाञ्शूराञ्शात्रवाञ्जेष्यतीति ॥ ००६ ॥

अयं जेता खाण्डवे देवसंघा ;न्सर्वाणि भूतान्यपि चोत्तमौजाः ।

अयं जेता मद्रकलिङ्गकेकया ;नयं कुरून्हन्ति च राजमध्ये ॥ ००७ ॥

अस्मात्परो न भविता धनुर्धरो ; न वै भूतः कश्चन जातु जेता ।
इच्छन्नार्यः सर्वभूतानि कुर्या ;द्वशे वशी सर्वसमाप्तविद्यः ॥ ००८ ॥

कान्त्या शशाङ्कस्य जवेन वायोः ; स्थैर्येण मेरोः क्षमया पृथिव्याः ।
सूर्यस्य भासा धनदस्य लक्ष्म्या ; शौर्येण शक्रस्य बलेन विष्णोः ॥ ००९ ॥

तुल्यो महात्मा तव कुन्ति पुत्रो ; जातोऽदितेर्विष्णुरिवारिहन्ता ।
स्वेषां जयाय द्विषतां वधाय ; ख्यातोऽमितौजाः कुलतन्तुकर्ता ॥ ०१० ॥

इत्यन्तरिक्षे शतशृङ्गमूर्ध्नि ; तपस्विनां शृण्वतां वागुवाच ।
एवंविधं त्वां तच्च नाभूत्तवाद्य ; देवा हि नूनमनृतं वदन्ति ॥ ०११ ॥

तथापरेषामृषिसत्तमानां ; श्रुत्वा गिरं पूजयतां सदैव ।
न संनतिं प्रैमि सुयोधनस्य ; न त्वा जानाम्याधिरथेर्भयार्तम् ॥ ०१२ ॥

त्वष्ट्रा कृतं वाहमकूजनाक्षं ; शुभं समास्थाय कपिध्वजं त्वम् ।
खड्गं गृहीत्वा हेमचित्रं समिद्धं ; धनुश्चेदं गाण्डिवं तालमात्रम् ॥ ०१३ ॥

स केशवेनोह्यमानः कथं नु ; कर्णाद्भीतो व्यपयातोऽसि पार्थ ॥ ०१३ ॥

धनुश्चैतत्केशवाय प्रदाय ; यन्ताभविष्यस्त्वं रणे चेद्दुरात्मन् ।
ततोऽहनिष्यत्केशवः कर्णमुग्रं ; मरुत्पतिर्वृत्रमिवात्तवज्रः ॥ ०१४ ॥

मासेऽपतिष्यः पञ्चमे त्वं प्रकृच्छ्रे ; न वा गर्भोऽप्यभविष्यः पृथायाः ।
तत्ते श्रमो राजपुत्राभविष्य ;न्न सङ्ग्रामादपयातुं दुरात्मन् ॥ ०१५ ॥

# अध्याय ०४९

सञ्जय उवाच ॥

युधिष्ठिरेणैवमुक्तः कौन्तेयः श्वेतवाहनः ।
असिं जग्राह सङ्क्रुद्धो जिघांसुर्भरतर्षभम् ॥ ००१ ॥

तस्य कोपं समुद्वीक्ष्य चित्तज्ञः केशवस्तदा ।
उवाच किमिदं पार्थ गृहीतः खड्ग इत्युत ॥ ००२ ॥

नेह पश्यामि योद्धव्यं तव किञ्चिद्धनञ्जय ।
ते ध्वस्ता धार्तराष्ट्रा हि सर्वे भीमेन धीमता ॥ ००३ ॥

अपयातोऽसि कौन्तेय राजा द्रष्टव्य इत्यपि ।
स राजा भवता दृष्टः कुशली च युधिष्ठिरः ॥ ००४ ॥

तं दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रमम् ।
हर्षकाले तु संप्राप्ते कस्मात्त्वा मन्युराविशत् ॥ ००५ ॥

न तं पश्यामि कौन्तेय यस्ते वध्यो भवेदिह ।
कस्माद्भवान्महाखड्गं परिगृह्णाति सत्वरम् ॥ ००६ ॥

तत्त्वा पृच्छामि कौन्तेय किमिदं ते चिकीर्षितम् ।
परामृशसि यत्क्रुद्धः खड्गमद्भुतविक्रम ॥ ००७ ॥

एवमुक्तस्तु कृष्णेन प्रेक्षमाणो युधिष्ठिरम् ।
अर्जुनः प्राह गोविन्दं क्रुद्धः सर्प इव श्वसन् ॥ ००८ ॥

दद गाण्डीवमन्यस्मा इति मां योऽभिचोदयेत् ।
छिन्द्यामहं शिरस्तस्य इत्युपांशुव्रतं मम ॥ ००९ ॥

तदुक्तोऽहमदीनात्मन्नाज्ञामितपराक्रम ।
समक्षं तव गोविन्द न तत्क्षन्तुमिहोत्सहे ॥ ०१० ॥

तस्मादेनं वधिष्यामि राजानं धर्मभीरुकम् ।
प्रतिज्ञां पालयिष्यामि हत्वेमं नरसत्तमम् ॥ ०११ ॥

एतदर्थं मया खड्गो गृहीतो यदुनन्दन ॥ ०११ ॥

सोऽहं युधिष्ठिरं हत्वा सत्येऽप्यानृण्यतां गतः ।
विशोको विज्वरश्चापि भविष्यामि जनार्दन ॥ ०१२ ॥

किं वा त्वं मन्यसे प्राप्तमस्मिन्काले समुत्थिते ।
त्वमस्य जगतस्तात वेत्थ सर्वं गतागतम् ॥ ०१३ ॥

तत्तथा प्रकरिष्यामि यथा मां वक्ष्यते भवान् ॥ ०१३ ॥

कृष्ण उवाच ॥

इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया ।
अकाले पुरुषव्याघ्र संरम्भक्रिययानया ॥ ०१४ ॥

न हि धर्मविभागज्ञः कुर्यादेवं धनञ्जय ॥ ०१४ ॥

अकार्याणां च कार्याणां संयोगं यः करोति वै ।
कार्याणामक्रियाणां च स पार्थ पुरुषाधमः ॥ ०१५ ॥

अनुसृत्य तु ये धर्मं कवयः समुपस्थिताः ।
समासविस्तरविदां न तेषां वेत्थ निश्चयम् ॥ ०१६ ॥

अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये ।
अवशो मुह्यते पार्थ यथा त्वं मूढ एव तु ॥ ०१७ ॥

न हि कार्यमकार्यं वा सुखं ज्ञातुं कथञ्चन ।
श्रुतेन ज्ञायते सर्वं तच्च त्वं नावबुध्यसे ॥ ०१८ ॥

अविज्ञानाद्भवान्यच्च धर्मं रक्षति धर्मवित् ।
प्राणिनां हि वधं पार्थ धार्मिको नावबुध्यते ॥ ०१९ ॥

प्राणिनामवधस्तात सर्वज्यायान्मतो मम ।
अनृतं तु भवेद्वाच्यं न च हिंस्यात्कथञ्चन ॥ ०२० ॥

स कथं भ्रातरं ज्येष्ठं राजानं धर्मकोविदम् ।
हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्यः पुमानिव ॥ ०२१ ॥

अयुध्यमानस्य वधस्तथाशत्रस्य भारत ।
पराङ्मुखस्य द्रवतः शरणं वाभिगच्छतः ॥ ०२२ ॥

कृताञ्जलेः प्रपन्नस्य न वधः पूज्यते बुधैः ॥ ०२२ ॥

त्वया चैव व्रतं पार्थ बालेनैव कृतं पुरा ।
तस्मादधर्मसंयुक्तं मौढ्यात्कर्म व्यवस्यसि ॥ ०२३ ॥

स गुरुं पार्थ कस्मात्त्वं हन्या धर्ममनुस्मरन् ।
असंप्रधार्य धर्माणां गतिं सूक्ष्मां दुरन्वयाम् ॥ ०२४ ॥

इदं धर्मरहस्यं च वक्ष्यामि भरतर्षभ ।
यद्ब्रूयात्तव भीष्मो वा धर्मज्ञो वा युधिष्ठिरः ॥ ०२५ ॥

विदुरो वा तथा क्षत्ता कुन्ती वापि यशस्विनी ।
तत्ते वक्ष्यामि तत्त्वेन तन्निबोध धनञ्जय ॥ ०२६ ॥

सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।

तत्त्वेनैतत्सुदुर्ज्ञेयं यस्य सत्यमनुष्ठितम् ॥ ०२७ ॥

भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत् ।
सर्वस्वस्यापहारे तु वक्तव्यमनृतं भवेत् ॥ ०२८ ॥

प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत् ॥ ०२९ ॥

तादृशं पश्यते बालो यस्य सत्यमनुष्ठितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥ ०३० ॥

किमाश्चर्यं कृतप्रज्ञः पुरुषोऽपि सुदारुणः ।
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ॥ ०३१ ॥

किमाश्चर्यं पुनर्मूढो धर्मकामोऽप्यपण्डितः ।
सुमहत्प्राप्नुयात्पापमापगामिव कौशिकः ॥ ०३२ ॥

अर्जुन उवाच ॥

आचक्ष्व भगवन्नेतद्यथा विद्यामहं तथा ।
बलाकान्धाभिसंबद्धं नदीनां कौशिकस्य च ॥ ०३३ ॥

कृष्ण उवाच ॥

मृगव्याधोऽभवत्कश्चिद्बलाको नाम भारत ।
यात्रार्थं पुत्रदारस्य मृगान्हन्ति न कामतः ॥ ०३४ ॥

सोऽन्धौ च मातापितरौ बिभर्त्यन्यांश्च संश्रितान् ।
स्वधर्मनिरतो नित्यं सत्यवागनसूयकः ॥ ०३५ ॥

स कदाचिन्मृगा.ण्लिप्सुर्नान्वविन्दत्प्रयत्नवान् ।

अथापश्यत्स पीतोदं श्वापदं घ्राणचक्षुषम् ॥ ०३६ ॥

अदृष्टपूर्वमपि तत्सत्त्वं तेन हतं तदा ।
अन्वेव च ततो व्योम्नः पुष्पवर्षमवापतत् ॥ ०३७ ॥

अप्सरोगीतवादित्रैर्नादितं च मनोरमम् ।
विमानमागमत्स्वर्गान्मृगव्याधनिनीषया ॥ ०३८ ॥

तद्भूतं सर्वभूतानामभावाय किलार्जुन ।
तपस्तप्त्वा वरं प्राप्तं कृतमन्धं स्वयंभुवा ॥ ०३९ ॥

तद्धत्वा सर्वभूतानामभावकृतनिश्चयम् ।
ततो बलाकः स्वरगादेवं धर्मः सुदुर्विदः ॥ ०४० ॥

कौशिकोऽप्यभवद्विप्रस्तपस्वी न बहुश्रुतः ।
नदीनां सङ्गमे ग्रामाददूरे स किलावसत् ॥ ०४१ ॥

सत्यं मया सदा वाच्यमिति तस्याभवद्व्रतम् ।
सत्यवादीति विख्यातः स तदासीद्धनञ्जय ॥ ०४२ ॥

अथ दस्युभयात्केचित्तदा तद्वनमाविशन् ।
दस्यवोऽपि गताः क्रूरा व्यमार्गन्त प्रयत्नतः ॥ ०४३ ॥

अथ कौशिकमभ्येत्य प्राहुस्तं सत्यवादिनम् ।
कतमेन पथा याता भगवन्बहवो जनाः ॥ ०४४ ॥

सत्येन पृष्टः प्रब्रूहि यदि तान्वेत्थ शंस नः ॥ ०४४ ॥

स पृष्टः कौशिकः सत्यं वचनं तानुवाच ह ।
बहुवृक्षलतागुल्ममेतद्वनमुपाश्रिताः ॥ ०४५ ॥

ततस्ते तान्समासाद्य क्रूरा जघ्नुरिति श्रुतिः ॥ ०४५ ॥

तेनाधर्मेण महता वाग्दुरुक्तेन कौशिकः ।
गतः सुकष्टं नरकं सूक्ष्मधर्मेष्वकोविदः ॥ ०४६ ॥

अप्रभूतश्रुतो मूढो धर्माणामविभागवित् ॥ ०४६ ॥

वृद्धानपृष्ट्वा संदेहं महच्छ्वभ्रमितोऽर्हति ।
तत्र ते लक्षणोद्देशः कश्चिदेव भविष्यति ॥ ०४७ ॥

दुष्करं परमज्ञानं तर्केणात्र व्यवस्यति ।
श्रुतिर्धर्म इति ह्येके वदन्ति बहवो जनाः ॥ ०४८ ॥

न त्वेतत्प्रतिसूयामि न हि सर्वं विधीयते ।
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ॥ ०४९ ॥

धारणाद्धर्ममित्याहुर्धर्मो धारयति प्रजाः ।
यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः ॥ ०५० ॥

येऽन्यायेन जिहीर्षन्तो जना इच्छन्ति कर्हिचित् ।
अकूजनेन चेन्मोक्षो नात्र कूजेत्कथञ्चन ॥ ०५१ ॥

अवश्यं कूजितव्यं वा शङ्केरन्वाप्यकूजतः ।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम् ॥ ०५२ ॥

प्राणात्यये विवाहे वा सर्वज्ञातिधनक्षये ।
नर्मण्यभिप्रवृत्ते वा प्रवक्तव्यं मृषा भवेत् ॥ ०५३ ॥

अधर्मं नात्र पश्यन्ति धर्मतत्त्वार्थदर्शिनः ॥ ०५३ ॥

यः स्तेनैः सह संबन्धान्मुच्यते शपथैरपि ।

श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितम् ॥ ०५४ ॥

न च तेभ्यो धनं देयं शक्ये सति कथञ्चन ।
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ॥ ०५५ ॥

तस्माद्धर्मार्थमनृतमुक्त्वा नानृतवाग्भवेत् ॥ ०५५ ॥

एष ते लक्षणोद्देशः समुद्दिष्टो यथाविधि ।
एतच्छ्रुत्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ॥ ०५६ ॥

अर्जुन उवाच ॥

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महामतिः ।
हितं चैव यथास्माकं तथैतद्वचनं तव ॥ ०५७ ॥

भवान्मातृसमोऽस्माकं तथा पितृसमोऽपि च ।
गतिश्च परमा कृष्ण तेन ते वाक्यमद्भुतम् ॥ ०५८ ॥

न हि ते त्रिषु लोकेषु विद्यतेऽविदितं क्वचित् ।
तस्माद्भवान्परं धर्मं वेद सर्वं यथातथम् ॥ ०५९ ॥

अवध्यं पाण्डवं मन्ये धर्मराजं युधिष्ठिरम् ।
तस्मिन्समयसंयोगे ब्रूहि किञ्चिदनुग्रहम् ॥ ०६० ॥

इदं चापरमत्रैव शृणु हृत्स्थं विवक्षितम् ॥ ०६० ॥

जानासि दाशार्ह मम व्रतं त्वं ; यो मां ब्रूयात्कश्चन मानुषेषु ।
अन्यस्मै त्वं गाण्डिवं देहि पार्थ ; यस्त्वत्तोऽस्त्रैर्भविता वा विशिष्टः ॥ ०६१ ॥

हन्यामहं केशव तं प्रसह्य ; भीमो हन्यात्तूबरकेति चोक्तः ।
तन्मे राजा प्रोक्तवांस्ते समक्षं ; धनुर्देहीत्यसकृद्वृष्णिसिंह ॥ ०६२ ॥

तं हत्वा चेत्केशव जीवलोके ; स्थाता कालं नाहमप्यल्पमात्रम् ।
सा च प्रतिज्ञा मम लोकप्रबुद्धा ; भवेत्सत्या धर्मभृतां वरिष्ठ ॥ ०६३ ॥

यथा जीवेत्पाण्डवोऽहं च कृष्ण ; तथा बुद्धिं दातुमद्यार्हसि त्वम् ॥ ०६३ ॥

वासुदेव उवाच ॥

राजा श्रान्तो जगतो विक्षतश्च ; कर्णेन संख्ये निशितैर्बाणसंघैः ।
तस्मात्पार्थ त्वां परुषाण्यवोच ;त्कर्णे द्यूतं ह्यद्य रणे निबद्धम् ॥ ०६४ ॥

तस्मिन्हते कुरवो निर्जिताः स्यु ;रेवंबुद्धिः पार्थिवो धर्मपुत्रः ।
यदावमानं लभते महान्तं ; तदा जीवन्मृत इत्युच्यते सः ॥ ०६५ ॥

तन्मानितः पार्थिवोऽयं सदैव ; त्वया सभीमेन तथा यमाभ्याम् ।
वृद्धैश्च लोके पुरुषप्रवीरै ;स्तस्यावमानं कलया त्वं प्रयुङ्क्ष्व ॥ ०६६ ॥

त्वमित्यत्रभवन्तं त्वं ब्रूहि पार्थ युधिष्ठिरम् ।
त्वमित्युक्तो हि निहतो गुरुर्भवति भारत ॥ ०६७ ॥

एवमाचर कौन्तेय धर्मराजे युधिष्ठिरे ।
अधर्मयुक्तं संयोगं कुरुष्वैवं कुरूद्वह ॥ ०६८ ॥

अथर्वाङ्गिरसी ह्येषा श्रुतीनामुत्तमा श्रुतिः ।
अविचार्यैव कार्यैषा श्रेयःकामैर्नरैः सदा ॥ ०६९ ॥

वधो ह्ययं पाण्डव धर्मराज्ञ ;स्त्वत्तो युक्तो वेत्स्यते चैवमेषः ।
ततोऽस्य पादावभिवाद्य पश्चा ;च्छमं ब्रूयाः सान्त्वपूर्वं च पार्थम् ॥ ०७० ॥

भ्राता प्राज्ञस्तव कोपं न जातु ; कुर्याद्राजा कञ्चन पाण्डवेयः ।
मुक्तोऽनृताद्भ्रातृवधाच्च पार्थ ; हृष्टः कर्णं त्वं जहि सूतपुत्रम् ॥ ०७१ ॥

सञ्जय उवाच ॥

इत्येवमुक्तस्तु जनार्दनेन ; पार्थः प्रशस्याथ सुहृद्वधं तम् ।
ततोऽब्रवीदर्जुनो धर्मराज ;मनुक्तपूर्वं परुषं प्रसह्य ॥ ०७२ ॥

मा त्वं राजन्व्याहर व्याहरत्सु ; न तिष्ठसे क्रोशमात्रे रणार्धे ।
भीमस्तु मामर्हति गर्हणाय ; यो युध्यते सर्वयोधप्रवीरः ॥ ०७३ ॥

काले हि शत्रून्प्रतिपीड्य संख्ये ; हत्वा च शूरान्पृथिवीपतींस्तान् ।
यः कुञ्जराणामधिकं सहस्रं ; हत्वानदत्तुमुलं सिंहनादम् ॥ ०७४ ॥

सुदुष्करं कर्म करोति वीरः ; कर्तुं यथा नार्हसि त्वं कदाचित् ।
रथादवप्लुत्य गदां परामृशं ;स्तया निहन्त्यश्वनरद्विपान्रणे ॥ ०७५ ॥

वरासिना वाजिरथाश्वकुञ्जरां ;स्तथा रथाङ्गैर्धनुषा च हन्त्यरीन् ।
प्रमृद्य पद्भ्यामहितान्निहन्ति यः ; पुनश्च दोर्भ्यां शतमन्युविक्रमः ॥ ०७६ ॥

महाबलो वैश्रवणान्तकोपमः ; प्रसह्य हन्ता द्विषतां यथार्हम् ।
स भीमसेनोऽर्हति गर्हणां मे ; न त्वं नित्यं रक्ष्यसे यः सुहृद्भिः ॥ ०७७ ॥

महारथान्नागवरान्हयांश्च ; पदातिमुख्यानपि च प्रमथ्य ।
एको भीमो धार्तराष्ट्रेषु मग्नः ; स मामुपालब्धुमरिंदमोऽर्हति ॥ ०७८ ॥

कलिङ्गवङ्गाङ्गनिषादमागधा ;न्सदामदान्नीलबलाहकोपमान् ।
निहन्ति यः शत्रुगणाननेकशः ; स माभिवक्तुं प्रभवत्यनागसम् ॥ ०७९ ॥

सुयुक्तमास्थाय रथं हि काले ; धनुर्विकर्षञ्शरपूर्णमुष्टिः ।
सृजत्यसौ शरवर्षाणि वीरो ; महाहवे मेघ इवाम्बुधाराः ॥ ०८० ॥

बलं तु वाचि द्विजसत्तमानां ; क्षात्रं बुधा बाहुबलं वदन्ति ।

त्वं वाग्बलो भारत निष्ठुरश्च ; त्वमेव मां वेत्सि यथाविधोऽहम् ॥ ०८१ ॥

यतामि नित्यं तव कर्तुमिष्टं ; दारैः सुतैर्जीवितेनात्मना च ।
एवं च मां वाग्विशिखैर्निहंसि ; त्वत्तः सुखं न वयं विद्म किञ्चित् ॥ ०८२ ॥

अवामंस्था मां द्रौपदीतल्पसंस्थो ; महारथान्प्रतिहन्मि त्वदर्थे ।
तेनातिशङ्की भारत निष्ठुरोऽसि ; त्वत्तः सुखं नाभिजानामि किञ्चित् ॥ ०८३ ॥

प्रोक्तः स्वयं सत्यसंधेन मृत्यु ;स्तव प्रियार्थं नरदेव युद्धे ।
वीरः शिखण्डी द्रौपदोऽसौ महात्मा ; मयाभिगुप्तेन हतश्च तेन ॥ ०८४ ॥

न चाभिनन्दामि तवाधिराज्यं ; यतस्त्वमक्षेष्वहिताय सक्तः ।
स्वयं कृत्वा पापमनार्यजुष्ट ;मेभिर्युद्धे तर्तुमिच्छस्यरींस्तु ॥ ०८५ ॥

अक्षेषु दोषा बहवो विधर्माः ; श्रुतास्त्वया सहदेवोऽब्रवीद्यान् ।
तान्नैषि संतर्तुमसाधुजुष्टा ;न्येन स्म सर्वे निरयं प्रपन्नाः ॥ ०८६ ॥

त्वं देविता त्वत्कृते राज्यनाश ;स्त्वत्संभवं व्यसनं नो नरेन्द्र ।
मास्मान्क्रूरैर्वाक्प्रतोदैस्तुद त्वं ; भूयो राजन्कोपयन्नल्पभाग्यान् ॥ ०८७ ॥

एता वाचः परुषाः सव्यसाची ; स्थिरप्रज्ञं श्रावयित्वा ततक्ष ।
तदानुतेपे सुरराजपुत्रो ; विनिःश्वसंश्चाप्यसिमुद्बबर्ह ॥ ०८८ ॥

तमाह कृष्णः किमिदं पुनर्भवा ;न्विकोशमाकाशनिभं करोत्यसिम् ।
प्रब्रूहि सत्यं पुनरुत्तरं विधे ;र्वचः प्रवक्ष्याम्यहमर्थसिद्धये ॥ ०८९ ॥

इत्येव पृष्टः पुरुषोत्तमेन ; सुदुःखितः केशवमाह वाक्यम् ।
अहं हनिष्ये स्वशरीरमेव ; प्रसह्य येनाहितमाचरं वै ॥ ०९० ॥

निशम्य तत्पार्थवचोऽब्रवीदिदं ; धनञ्जयं धर्मभृतां वरिष्ठः ।
प्रब्रूहि पार्थ स्वगुणानिहात्मन ;स्तथा स्वहार्दं भवतीह सद्यः ॥ ०९१ ॥

तथास्तु कृष्णेत्यभिनन्द्य वाक्यं ; धनञ्जयः प्राह धनुर्विनाम्य ।
युधिष्ठिरं धर्मभृतां वरिष्ठं ; शृणुष्व राजन्निति शक्रसूनुः ॥ ०९२ ॥

न मादृशोऽन्यो नरदेव विद्यते ; धनुर्धरो देवमृते पिनाकिनम् ।
अहं हि तेनानुमतो महात्मना ; क्षणेन हन्यां सचराचरं जगत् ॥ ०९३ ॥

मया हि राजन्सदिगीश्वरा दिशो ; विजित्य सर्वा भवतः कृता वशे ।
स राजसूयश्च समाप्तदक्षिणः ; सभा च दिव्या भवतो ममौजसा ॥ ०९४ ॥

पाणौ पृषत्का लिखिता ममेमे ; धनुश्च संख्ये विततं सबाणम् ।
पादौ च मे सशरौ सहध्वजौ ; न मादृशं युद्धगतं जयन्ति ॥ ०९५ ॥

हता उदीच्या निहताः प्रतीच्याः ; प्राच्या निरस्ता दाक्षिणात्या विशस्ताः ।
संशप्तकानां किञ्चिदेवावशिष्टं ; सर्वस्य सैन्यस्य हतं मयार्धम् ॥ ०९६ ॥

शेते मया निहता भारती च ; चमू राजन्देवचमूप्रकाशा ।
ये नास्त्रज्ञास्तानहं हन्मि शस्त्रै ;स्तस्माल्लोकं नेह करोमि भस्मसात् ॥ ०९७ ॥

इत्येवमुक्त्वा पुनराह पार्थो ; युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
अप्यपुत्रा तेन राधा भवित्री ; कुन्ती मया वा तदृतं विद्धि राजन् ॥ ०९८ ॥

प्रसीद राजन्क्षम यन्मयोक्तं ; काले भवान्वेत्स्यति तन्नमस्ते ॥ ०९८ ॥

प्रसाद्य राजानममित्रसाहं ; स्थितोऽब्रवीच्चैनमभिप्रपन्नः ।
याम्येष भीमं समरात्प्रमोक्तुं ; सर्वात्मना सूतपुत्रं च हन्तुम् ॥ ०९९ ॥

तव प्रियार्थं मम जीवितं हि ; ब्रवीमि सत्यं तदवेहि राजन् ।
इति प्रायादुपसङ्गृह्य पादौ ; समुत्थितो दीप्ततेजाः किरीटी ॥ १०० ॥

नेदं चिरात्क्षिप्रमिदं भविष्य ;त्यावर्ततेऽसावभियामि चैनम् ॥ १०० ॥

एतच्छ्रुत्वा पाण्डवो धर्मराजो ; भ्रातुर्वाक्यं परुषं फल्गुनस्य ।
उत्थाय तस्माच्छयनादुवाच ; पार्थं ततो दुःखपरीतचेताः ॥ १०१ ॥

कृतं मया पार्थ यथा न साधु ; येन प्राप्तं व्यसनं वः सुघोरम् ।
तस्माच्छिरश्छिन्द्धि ममेदमद्य ; कुलान्तकस्याधमपूरुषस्य ॥ १०२ ॥

पापस्य पापव्यसनान्वितस्य ; विमूढबुद्धेरलसस्य भीरोः ।
वृद्धावमन्तुः परुषस्य चैव ; किं ते चिरं मामनुवृत्य रूक्षम् ॥ १०३ ॥

गच्छाम्यहं वनमेवाद्य पापः ; सुखं भवान्वर्ततां मद्विहीनः ।
योग्यो राजा भीमसेनो महात्मा ; क्लीबस्य वा मम किं राज्यकृत्यम् ॥ १०४ ॥

न चास्मि शक्तः परुषाणि सोढुं ; पुनस्तवेमानि रुषान्वितस्य ।
भीमोऽस्तु राजा मम जीवितेन ; किं कार्यमद्यावमतस्य वीर ॥ १०५ ॥

इत्येवमुक्त्वा सहसोत्पपात ; राजा ततस्तच्छयनं विहाय ।
इयेष निर्गन्तुमथो वनाय ; तं वासुदेवः प्रणतोऽभ्युवाच ॥ १०६ ॥

राजन्विदितमेतत्ते यथा गाण्डीवधन्वनः ।
प्रतिज्ञा सत्यसंधस्य गाण्डीवं प्रति विश्रुता ॥ १०७ ॥

ब्रूयाद्य एवं गाण्डीवं देह्यन्यस्मै त्वमित्युत ।
स वध्योऽस्य पुमा.ण्ल्लोके त्वया चोक्तोऽयमीदृशम् ॥ १०८ ॥

अतः सत्यां प्रतिज्ञां तां पार्थेन परिरक्षता ।
मच्छन्दादवमानोऽयं कृतस्तव महीपते ॥ १०९ ॥

गुरूणामवमानो हि वध इत्यभिधीयते ॥ १०९ ॥

तस्मात्त्वं वै महाबाहो मम पार्थस्य चोभयोः ।

व्यतिक्रममिमं राजन्सङ्गमस्वार्जुनं प्रति ॥ ११० ॥

शरणं त्वां महाराज प्रपन्नौ स्व उभावपि ।
क्षन्तुमर्हसि मे राजन्प्रणतस्याभियाचतः ॥ १११ ॥

राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम् ।
सत्यं ते प्रतिजानामि हतं विद्ध्यद्य सूतजम् ॥ ११२ ॥

यस्येच्छसि वधं तस्य गतमेवाद्य जीवितम् ॥ ११२ ॥

इति कृष्णवचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
ससंभ्रमं हृषीकेशमुत्थाप्य प्रणतं तदा ॥ ११३ ॥

कृताञ्जलिमिदं वाक्यमुवाचानन्तरं वचः ॥ ११३ ॥

एवमेतद्यथात्थ त्वमस्त्येषोऽतिक्रमो मम ।
अनुनीतोऽस्मि गोविन्द तारितश्चाद्य माधव ॥ ११४ ॥

मोक्षिता व्यसनाद्घोराद्वयमद्य त्वयाच्युत ॥ ११४ ॥

भवन्तं नाथमासाद्य आवां व्यसनसागरात् ।
घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ ॥ ११५ ॥

त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयम् ।
समुत्तीर्णाः सहामात्याः सनाथाः स्म त्वयाच्युत ॥ ११६ ॥

# अध्याय ०५०

सञ्जय उवाच ॥

इति स्म कृष्णवचनात्प्रत्युच्चार्य युधिष्ठिरम् ।
बभूव विमनाः पार्थः किञ्चित्कृत्वेव पातकम् ॥ ००१ ॥

ततोऽब्रवीद्वासुदेवः प्रहसन्निव पाण्डवम् ।
कथं नाम भवेदेतद्यदि त्वं पार्थ धर्मजम् ॥ ००२ ॥

असिना तीक्ष्णधारेण हन्या धर्मे व्यवस्थितम् ॥ ००२ ॥

त्वमित्युक्त्वैव राजानमेवं कश्मलमाविशः ।
हत्वा तु नृपतिं पार्थ अकरिष्यः किमुत्तरम् ॥ ००३ ॥

एवं सुदुर्विदो धर्मो मन्दप्रज्ञैर्विशेषतः ॥ ००३ ॥

स भवान्धर्मभीरुत्वाद्ध्रुवमैष्यन्महत्तमः ।
नरकं घोररूपं च भ्रातुर्ज्येष्ठस्य वै वधात् ॥ ००४ ॥

स त्वं धर्मभृतां श्रेष्ठं राजानं धर्मसंहितम् ।
प्रसादय कुरुश्रेष्ठमेतदत्र मतं मम ॥ ००५ ॥

प्रसाद्य भक्त्या राजानं प्रीतं चैव युधिष्ठिरम् ।
प्रयामस्त्वरिता योद्धुं सूतपुत्ररथं प्रति ॥ ००६ ॥

हत्वा सुदुर्जयं कर्णं त्वमद्य निशितैः शरैः ।
विपुलां प्रीतिमाधत्स्व धर्मपुत्रस्य मानद ॥ ००७ ॥

एतदत्र महाबाहो प्राप्तकालं मतं मम ।
एवं कृते कृतं चैव तव कार्यं भविष्यति ॥ ००८ ॥

ततोऽर्जुनो महाराज लज्जया वै समन्वितः ।
धर्मराजस्य चरणौ प्रपेदे शिरसानघ ॥ ००९ ॥

उवाच भरतश्रेष्ठ प्रसीदेति पुनः पुनः ।
क्षमस्व राजन्यत्प्रोक्तं धर्मकामेन भीरुणा ॥ ०१० ॥

पादयोः पतितं दृष्ट्वा धर्मराजो युधिष्ठिरः ।
धनञ्जयममित्रघ्नं रुदन्तं भरतर्षभ ॥ ०११ ॥

उत्थाप्य भ्रातरं राजा धर्मराजो धनञ्जयम् ।
समाश्लिष्य च सस्नेहं प्ररुरोद महीपतिः ॥ ०१२ ॥

रुदित्वा तु चिरं कालं भ्रातरौ सुमहाद्युती ।
कृतशौचौ नरव्याघ्रौ प्रीतिमन्तौ बभूवतुः ॥ ०१३ ॥

तत आश्लिष्य स प्रेम्णा मूर्ध्नि चाघ्राय पाण्डवम् ।
प्रीत्या परमया युक्तः प्रस्मयंश्चाब्रवीज्जयम् ॥ ०१४ ॥

कर्णेन मे महाबाहो सर्वसैन्यस्य पश्यतः ।
कवचं च ध्वजश्चैव धनुः शक्तिर्हया गदा ॥ ०१५ ॥

शरैः कृत्ता महेष्वास यतमानस्य संयुगे ॥ ०१५ ॥

सोऽहं ज्ञात्वा रणे तस्य कर्म दृष्ट्वा च फल्गुन ।
व्यवसीदामि दुःखेन न च मे जीवितं प्रियम् ॥ ०१६ ॥

तमद्य यदि वै वीर न हनिष्यसि सूतजम् ।
प्राणानेव परित्यक्ष्ये जीवितार्थो हि को मम ॥ ०१७ ॥

एवमुक्तः प्रत्युवाच विजयो भरतर्षभ ।

सत्येन ते शपे राजन्प्रसादेन तवैव च ॥ ०१८ ॥

भीमेन च नरश्रेष्ठ यमाभ्यां च महीपते ॥ ०१८ ॥

यथाद्य समरे कर्णं हनिष्यामि हतोऽथ वा ।
महीतले पतिष्यामि सत्येनायुधमालभे ॥ ०१९ ॥

एवमाभाष्य राजानमब्रवीन्माधवं वचः ।
अद्य कर्णं रणे कृष्ण सूदयिष्ये न संशयः ॥ ०२० ॥

तदनुध्याहि भद्रं ते वधं तस्य दुरात्मनः ॥ ०२० ॥

एवमुक्तोऽब्रवीत्पार्थं केशवो राजसत्तम ।
शक्तोऽस्मि भरतश्रेष्ठ यत्नं कर्तुं यथाबलम् ॥ ०२१ ॥

एवं चापि हि मे कामो नित्यमेव महारथ ।
कथं भवान्रणे कर्णं निहन्यादिति मे मतिः ॥ ०२२ ॥

भूयश्चोवाच मतिमान्माधवो धर्मनन्दनम् ।
युधिष्ठिरेमं बीभत्सुं त्वं सान्त्वयितुमर्हसि ॥ ०२३ ॥

अनुज्ञातुं च कर्णस्य वधायाद्य दुरात्मनः ॥ ०२३ ॥

श्रुत्वा ह्ययमहं चैव त्वां कर्णशरपीडितम् ।
प्रवृत्तिं ज्ञातुमायाताविह पाण्डवनन्दन ॥ ०२४ ॥

दिष्ट्यासि राजन्निरुजो दिष्ट्या न ग्रहणं गतः ।
परिसान्त्वय बीभत्सुं जयमाशाधि चानघ ॥ ०२५ ॥

युधिष्ठिर उवाच ॥

एह्येहि पार्थ बीभत्सो मां परिष्वज पाण्डव ।
वक्तव्यमुक्तोऽस्म्यहितं त्वया क्षान्तं च तन्मया ॥ ०२६ ॥

अहं त्वामनुजानामि जहि कर्णं धनञ्जय ।
मन्युं च मा कृथाः पार्थ यन्मयोक्तोऽसि दारुणम् ॥ ०२७ ॥

सञ्जय उवाच ॥

ततो धनञ्जयो राजञ्शिरसा प्रणतस्तदा ।
पादौ जग्राह पाणिभ्यां भ्रातुर्ज्येष्ठस्य मारिष ॥ ०२८ ॥

समुत्थाप्य ततो राजा परिष्वज्य च पीडितम् ।
मूर्ध्न्युपाघ्राय चैवैनमिदं पुनरुवाच ह ॥ ०२९ ॥

धनञ्जय महाबाहो मानितोऽस्मि दृढं त्वया ।
माहात्म्यं विजयं चैव भूयः प्राप्नुहि शाश्वतम् ॥ ०३० ॥

अर्जुन उवाच ॥

अद्य तं पापकर्माणं सानुबन्धं रणे शरैः ।
नयाम्यन्तं समासाद्य राधेयं बलगर्वितम् ॥ ०३१ ॥

येन त्वं पीडितो बाणैर्दृढमायम्य कार्मुकम् ।
तस्याद्य कर्मणः कर्णः फलं प्राप्स्यति दारुणम् ॥ ०३२ ॥

अद्य त्वामहमेष्यामि कर्णं हत्वा महीपते ।
सभाजयितुमाक्रन्दादिति सत्यं ब्रवीमि ते ॥ ०३३ ॥

नाहत्वा विनिवर्तेऽहं कर्णमद्य रणाजिरात् ।
इति सत्येन ते पादौ स्पृशामि जगतीपते ॥ ०३४ ॥

सञ्जय उवाच ॥

प्रसाद्य धर्मराजानं प्रहृष्टेनान्तरात्मना ।
पार्थः प्रोवाच गोविन्दं सूतपुत्रवधोद्यतः ॥ ०३५ ॥

कल्प्यतां च रथो भूयो युज्यन्तां च हयोत्तमाः ।
आयुधानि च सर्वाणि सज्ज्यन्तां वै महारथे ॥ ०३६ ॥

उपावृत्ताश्च तुरगाः शिक्षिताश्चाश्वसादिनः ।
रथोपकरणैः सर्वैरुपायान्तु त्वरान्विताः ॥ ०३७ ॥

एवमुक्ते महाराज फल्गुनेन महात्मना ।
उवाच दारुकं कृष्णः कुरु सर्वं यथाब्रवीत् ॥ ०३८ ॥

अर्जुनो भरतश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ०३८ ॥

आज्ञप्तस्त्वथ कृष्णेन दारुको राजसत्तम ।
योजयामास स रथं वैयाघ्रं शत्रुतापनम् ॥ ०३९ ॥

युक्तं तु रथमास्थाय दारुकेण महात्मना ।
आपृच्छ्य धर्मराजानं ब्राह्मणान्स्वस्ति वाच्य च ॥ ०४० ॥

समङ्गलस्वस्त्ययनमारुरोह रथोत्तमम् ॥ ०४० ॥

तस्य राजा महाप्राज्ञो धर्मराजो युधिष्ठिरः ।
आशिषोऽयुङ्क्त परमा युक्ताः कर्णवधं प्रति ॥ ०४१ ॥

तं प्रयान्तं महेष्वासं दृष्ट्वा भूतानि भारत ।
निहतं मेनिरे कर्णं पाण्डवेन महात्मना ॥ ०४२ ॥

बभूवुर्विमलाः सर्वा दिशो राजन्समन्ततः ।

चाषाश्च शतपत्राश्च क्रौञ्चाश्चैव जनेश्वर ॥ ०४३ ॥

प्रदक्षिणमकुर्वन्त तदा वै पाण्डुनन्दनम् ॥ ०४३ ॥

बहवः पक्षिणो राजन्पुंनामानः शुभाः शिवाः ।
त्वरयन्तोऽर्जुनं युद्धे हृष्टरूपा ववाशिरे ॥ ०४४ ॥

कङ्का गृध्रा वडाश्चैव वायसाश्च विशां पते ।
अग्रतस्तस्य गच्छन्ति भक्ष्यहेतोर्भयानकाः ॥ ०४५ ॥

निमित्तानि च धन्यानि पार्थस्य प्रशशंसिरे ।
विनाशमरिसैन्यानां कर्णस्य च वधं तथा ॥ ०४६ ॥

प्रयातस्याथ पार्थस्य महान्स्वेदो व्यजायत ।
चिन्ता च विपुला जज्ञे कथं न्वेतद्भविष्यति ॥ ०४७ ॥

ततो गाण्डीवधन्वानमब्रवीन्मधुसूदनः ।
दृष्ट्वा पार्थं तदायस्तं चिन्तापरिगतं तदा ॥ ०४८ ॥

गाण्डीवधन्वन्सङ्ग्रामे ये त्वया धनुषा जिताः ।
न तेषां मानुषो जेता त्वदन्य इह विद्यते ॥ ०४९ ॥

दृष्टा हि बहवः शूराः शक्रतुल्यपराक्रमाः ।
त्वां प्राप्य समरे वीरं ये गताः परमां गतिम् ॥ ०५० ॥

को हि द्रोणं च भीष्मं च भगदत्तं च मारिष ।
विन्दानुविन्दावावन्त्यौ काम्बोजं च सुदक्षिणम् ॥ ०५१ ॥

श्रुतायुषं महावीर्यमच्युतायुषमेव च ।
प्रत्युद्गम्य भवेत्क्षेमी यो न स्यात्त्वमिव क्षमी ॥ ०५२ ॥

तव ह्यस्त्राणि दिव्यानि लाघवं बलमेव च ।
वेधः पातश्च लक्षश्च योगश्चैव तवार्जुन ॥ ०५३ ॥

असंमोहश्च युद्धेषु विज्ञानस्य च संनतिः ॥ ०५३ ॥

भवान्देवासुरान्सर्वान्हन्यात्सहचराचरान् ।
पृथिव्यां हि रणे पार्थ न योद्धा त्वत्समः पुमान् ॥ ०५४ ॥

धनुर्ग्रहा हि ये केचित्क्षत्रिया युद्धदुर्मदाः ।
आ देवात्त्वत्समं तेषां न पश्यामि शृणोमि वा ॥ ०५५ ॥

ब्रह्मणा च प्रजाः सृष्टा गाण्डीवं च महाद्भुतम् ।
येन त्वं युध्यसे पार्थ तस्मान्नास्ति त्वया समः ॥ ०५६ ॥

अवश्यं तु मया वाच्यं यत्पथ्यं तव पाण्डव ।
मावमंस्था महाबाहो कर्णमाहवशोभिनम् ॥ ०५७ ॥

कर्णो हि बलवान्धृष्टः कृतास्त्रश्च महारथः ।
कृती च चित्रयोधी च देशे काले च कोविदः ॥ ०५८ ॥

तेजसा वह्निसदृशो वायुवेगसमो जवे ।
अन्तकप्रतिमः क्रोधे सिंहसंहननो बली ॥ ०५९ ॥

अयोरत्निर्महाबाहुर्व्यूढोरस्कः सुदुर्जयः ।
अतिमानी च शूरश्च प्रवीरः प्रियदर्शनः ॥ ०६० ॥

सर्वैर्योधगुणैर्युक्तो मित्राणामभयङ्करः ।
सततं पाण्डवद्वेषी धार्तराष्ट्रहिते रतः ॥ ०६१ ॥

सर्वैरवध्यो राधेयो देवैरपि सवासवैः ।
ऋते त्वामिति मे बुद्धिस्त्वमद्य जहि सूतजम् ॥ ०६२ ॥

देवैरपि हि संयत्तैर्बिभ्रद्भिर्मांसशोणितम् ।
अशक्यः समरे जेतुं सर्वैरपि युयुत्सुभिः ॥ ०६३ ॥

दुरात्मानं पापमतिं नृशंसं ; दुष्टप्रज्ञं पाण्डवेयेषु नित्यम् ।
हीनस्वार्थं पाण्डवेयैर्विरोधे ; हत्वा कर्णं धिष्ठितार्थो भवाद्य ॥ ०६४ ॥

वीरं मन्यत आत्मानं येन पापः सुयोधनः ।
तमद्य मूलं पापानां जय सौतिं धनञ्जय ॥ ०६५ ॥

---

# अध्याय ०५१

सञ्जय उवाच ॥

ततः पुनरमेयात्मा केशवोऽर्जुनमब्रवीत् ।
कृतसङ्कल्पमायस्तं वधे कर्णस्य सर्वशः ॥ ००१ ॥

अद्य सप्तदशाहानि वर्तमानस्य भारत ।
विनाशस्यातिघोरस्य नरवारणवाजिनाम् ॥ ००२ ॥

भूत्वा हि विपुला सेना तावकानां परैः सह ।
अन्योन्यं समरे प्राप्य किञ्चिच्छेषा विशां पते ॥ ००३ ॥

भूत्वा हि कौरवाः पार्थ प्रभूतगजवाजिनः ।
त्वां वै शत्रुं समासाद्य विनष्टा रणमूर्धनि ॥ ००४ ॥

एते च सर्वे पाञ्चालाः सृञ्जयाश्च सहान्वयाः ।

त्वां समासाद्य दुर्धर्षं पाण्डवाश्च व्यवस्थिताः ॥ ००५ ॥

पाञ्चालैः पाण्डवैर्मत्स्यैः कारूषैश्चेदिकेकयैः ।
त्वया गुप्तैरमित्रघ्न कृतः शत्रुगणक्षयः ॥ ००६ ॥

को हि शक्तो रणे जेतुं कौरवांस्तात सङ्गतान् ।
अन्यत्र पाण्डवान्युद्धे त्वया गुप्तान्महारथान् ॥ ००७ ॥

त्वं हि शक्तो रणे जेतुं ससुरासुरमानुषान् ।
त्री.ण्ल्लोकान्सममुद्युक्तान्किं पुनः कौरवं बलम् ॥ ००८ ॥

भगदत्तं हि राजानं कोऽन्यः शक्तस्त्वया विना ।
जेतुं पुरुषशार्दूल योऽपि स्याद्वासवोपमः ॥ ००९ ॥

तथेमां विपुलां सेनां गुप्तां पार्थ त्वयानघ ।
न शेकुः पार्थिवाः सर्वे चक्षुर्भिरभिवीक्षितुम् ॥ ०१० ॥

तथैव सततं पार्थ रक्षिताभ्यां त्वया रणे ।
धृष्टद्युम्नशिखण्डिभ्यां भीष्मद्रोणौ निपातितौ ॥ ०११ ॥

को हि शक्तो रणे पार्थ पाञ्चालानां महारथौ ।
भीष्मद्रोणौ युधा जेतुं शक्रतुल्यपराक्रमौ ॥ ०१२ ॥

को हि शांतनवं संख्ये द्रोणं वैकर्तनं कृपम् ।
द्रौणिं च सौमदत्तिं च कृतवर्माणमेव च ॥ ०१३ ॥

सैन्धवं मद्रराजं च राजानं च सुयोधनम् ॥ ०१३ ॥

वीरान्कृतास्त्रान्समरे सर्वानेवानुवर्तिनः ।
अक्षौहिणीपतीनुग्रान्संरब्धान्युद्धदुर्मदान् ॥ ०१४ ॥

श्रेण्यश्च बहुलाः क्षीणाः प्रदीर्णाश्वरथद्विपाः ।
नानाजनपदाश्चोग्राः क्षत्रियाणाममर्षिणाम्  ॥ ०१५  ॥

गोवासदासमीयानां वसातीनां च भारत ।
व्रात्यानां वाटधानानां भोजानां चापि मानिनाम्  ॥ ०१६  ॥

उदीर्णाश्च महासेना ब्रह्मक्षत्रस्य भारत ।
त्वां समासाद्य निधनं गताः साश्वरथद्विपाः  ॥ ०१७  ॥

उग्राश्च क्रूरकर्माणस्तुखारा यवनाः खशाः ।
दार्वाभिसारा दरदाः शका रमठतङ्गणाः  ॥ ०१८  ॥

अन्ध्रकाश्च पुलिन्दाश्च किराताश्चोग्रविक्रमाः ।
म्लेच्छाश्च पार्वतीयाश्च सागरानूपवासिनः  ॥ ०१९  ॥

संरम्भिणो युद्धशौण्डा बलिनो दृब्धपाणयः  ॥ ०१९  ॥

एते सुयोधनस्यार्थे संरब्धाः कुरुभिः सह ।
न शक्या युधि निर्जेतुं त्वदन्येन परंतप  ॥ ०२०  ॥

धार्तराष्ट्रमुदग्रं हि व्यूढं दृष्ट्वा महाबलम् ।
यस्य त्वं न भवेस्त्राता प्रतीयात्को नु मानवः  ॥ ०२१  ॥

तत्सागरमिवोद्धूतं रजसा संवृतं बलम् ।
विदार्य पाण्डवैः क्रुद्धैस्त्वया गुप्तैर्हतं विभो  ॥ ०२२  ॥

मागधानामधिपतिर्जयत्सेनो महाबलः ।
अद्य सप्तैव चाहानि हतः संख्येऽभिमन्युना  ॥ ०२३  ॥

ततो दश सहस्राणि गजानां भीमकर्मणाम् ।
जघान गदया भीमस्तस्य राज्ञः परिच्छदम्  ॥ ०२४  ॥

ततोऽन्येऽपि हता नागा रथाश्च शतशो बलात्  ॥ ०२४  ॥

तदेवं समरे तात वर्तमाने महाभये ।
भीमसेनं समासाद्य त्वां च पाण्डव कौरवाः  ॥ ०२५  ॥

सवाजिरथनागाश्च मृत्युलोकमितो गताः  ॥ ०२५  ॥

तथा सेनामुखे तत्र निहते पार्थ पाण्डवैः ।
भीष्मः प्रासृजदुग्राणि शरवर्षाणि मारिष  ॥ ०२६  ॥

स चेदिकाशिपाञ्चालान्करूषान्मत्स्यकेकयान् ।
शरैः प्रच्छाद्य निधनमनयत्परुषास्त्रवित्  ॥ ०२७  ॥

तस्य चापच्युतैर्बाणैः परदेहविदारणैः ।
पूर्णमाकाशमभवद्रुक्मपुङ्खैरजिह्मगैः  ॥ ०२८  ॥

गत्या दशम्या ते गत्वा जघ्नुर्वाजिरथद्विपान् ।
हित्वा नव गतीर्दुष्टाः स बाणान्व्यायतोऽमुचत्  ॥ ०२९  ॥

दिनानि दश भीष्मेण निघ्नता तावकं बलम् ।
शून्याः कृता रथोपस्था हताश्च गजवाजिनः  ॥ ०३०  ॥

दर्शयित्वात्मनो रूपं रुद्रोपेन्द्रसमं युधि ।
पाण्डवानामनीकानि प्रविगाह्य व्यशातयत्  ॥ ०३१  ॥

विनिघ्नन्पृथिवीपालांश्चेदिपाञ्चालकेकयान् ।
व्यदहत्पाण्डवीं सेनां नराश्वगजसङ्कुलाम्  ॥ ०३२  ॥

मज्जन्तमप्लवे मन्दमुज्जिहीर्षुः सुयोधनम् ।
तथा चरन्तं समरे तपन्तमिव भास्करम्  ॥ ०३३  ॥

न शेकुः सृञ्जया द्रष्टुं तथैवान्ये महीक्षितः ॥ ०३३ ॥

विचरन्तं तथा तं तु सङ्ग्रामे जितकाशिनम् ।
सर्वोद्योगेन सहसा पाण्डवाः समुपाद्रवन् ॥ ०३४ ॥

स तु विद्राव्य समरे पाण्डवान्सृञ्जयानपि ।
एक एव रणे भीष्म एकवीरत्वमागतः ॥ ०३५ ॥

तं शिखण्डी समासाद्य त्वया गुप्तो महारथम् ।
जघान पुरुषव्याघ्रं शरैः संनतपर्वभिः ॥ ०३६ ॥

स एष पतितः शेते शरतल्पे पितामहः ।
त्वां प्राप्य पुरुषव्याघ्र गृध्रः प्राप्येव वायसम् ॥ ०३७ ॥

द्रोणः पञ्च दिनान्युग्रो विधम्य रिपुवाहिनीः ।
कृत्वा व्यूहं महायुद्धे पातयित्वा महारथान् ॥ ०३८ ॥

जयद्रथस्य समरे कृत्वा रक्षां महारथः ।
अन्तकप्रतिमश्चोग्रां रात्रिं युद्धादहत्प्रजाः ॥ ०३९ ॥

अद्येति द्वे दिने वीरो भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नं समासाद्य स गतः परमां गतिम् ॥ ०४० ॥

यदि चैव परान्युद्धे सूतपुत्रमुखान्रथान् ।
नावारयिष्यः सङ्ग्रामे न स्म द्रोणो व्यनङ्क्ष्यत ॥ ०४१ ॥

भवता तु बलं सर्वं धार्तराष्ट्रस्य वारितम् ।
ततो द्रोणो हतो युद्धे पार्षतेन धनञ्जय ॥ ०४२ ॥

क इवान्यो रणे कुर्यात्त्वदन्यः क्षत्रियो युधि ।

यादृशं ते कृतं पार्थ जयद्रथवधं प्रति ॥ ०४३ ॥

निवार्य सेनां महतीं हत्वा शूरांश्च पार्थिवान् ।
निहतः सैन्धवो राजा त्वयास्त्रबलतेजसा ॥ ०४४ ॥

आश्चर्यं सिन्धुराजस्य वधं जानन्ति पार्थिवाः ।
अनाश्चर्यं हि तत्त्वत्तस्त्वं हि पार्थ महारथः ॥ ०४५ ॥

त्वां हि प्राप्य रणे क्षत्रमेकाहादिति भारत ।
तप्यमानमसंयुक्तं न भवेदिति मे मतिः ॥ ०४६ ॥

सेयं पार्थ चमूर्घोरा धार्तराष्ट्रस्य संयुगे ।
हता ससर्ववीरा हि भीष्मद्रोणौ यदा हतौ ॥ ०४७ ॥

शीर्णप्रवरयोधाद्य हतवाजिनरद्विपा ।
हीना सूर्येन्दुनक्षत्रैर्द्यौरिवाभाति भारती ॥ ०४८ ॥

विध्वस्ता हि रणे पार्थ सेनेयं भीमविक्रमात् ।
आसुरीव पुरा सेना शक्रस्येव पराक्रमैः ॥ ०४९ ॥

तेषां हतावशिष्टास्तु पञ्च सन्ति महारथाः ।
अश्वत्थामा कृतवर्मा कर्णो मद्राधिपः कृपः ॥ ०५० ॥

तांस्त्वमद्य नरव्याघ्र हत्वा पञ्च महारथान् ।
हतामित्रः प्रयच्छोर्वीं राज्ञः सद्वीपपत्तनाम् ॥ ०५१ ॥

साकाशजलपातालां सपर्वतमहावनाम् ।
प्राप्नोत्वमितवीर्यश्रीरद्य पार्थो वसुंधराम् ॥ ०५२ ॥

एतां पुरा विष्णुरिव हत्वा दैतेयदानवान् ।
प्रयच्छ मेदिनीं राज्ञे शक्रायेव यथा हरिः ॥ ०५३ ॥

अद्य मोदन्तु पाञ्चाला निहतेष्वरिषु त्वया ।
विष्णुना निहतेष्वेव दानवेयेषु देवताः ॥ ०५४ ॥

यदि वा द्विपदां श्रेष्ठ द्रोणं मानयतो गुरुम् ।
अश्वत्थाम्नि कृपा तेऽस्ति कृपे चाचार्यगौरवात् ॥ ०५५ ॥

अत्यन्तोपचितान्वा त्वं मानयन्भ्रातृबान्धवान् ।
कृतवर्माणमासाद्य न नेष्यसि यमक्षयम् ॥ ०५६ ॥

भ्रातरं मातुरासाद्य शल्यं मद्रजनाधिपम् ।
यदि त्वमरविन्दाक्ष दयावान्न जिघांससि ॥ ०५७ ॥

इमं पापमतिं क्षुद्रमत्यन्तं पाण्डवान्प्रति ।
कर्णमद्य नरश्रेष्ठ जह्याशु निशितैः शरैः ॥ ०५८ ॥

एतत्ते सुकृतं कर्म नात्र किञ्चिन्न युज्यते ।
वयमप्यत्र जानीमो नात्र दोषोऽस्ति कश्चन ॥ ०५९ ॥

दहने यत्सपुत्राया निशि मातुस्तवानघ ।
द्यूतार्थे यच्च युष्मासु प्रावर्तत सुयोधनः ॥ ०६० ॥

तत्र सर्वत्र दुष्टात्मा कर्णो मूलमिहार्जुन ॥ ०६० ॥

कर्णाद्धि मन्यते त्राणं नित्यमेव सुयोधनः ।
ततो मामपि संरब्धो निग्रहीतुं प्रचक्रमे ॥ ०६१ ॥

स्थिरा बुद्धिर्नरेन्द्रस्य धार्तराष्ट्रस्य मानद ।
कर्णः पार्थान्रणे सर्वान्विजेष्यति न संशयः ॥ ०६२ ॥

कर्णमाश्रित्य कौन्तेय धार्तराष्ट्रेण विग्रहः ।

रोचितो भवता सार्धं जानतापि बलं तव ॥ ०६३ ॥

कर्णो हि भाषते नित्यमहं पार्थान्समागतान् ।
वासुदेवं सराजानं विजेष्यामि महारणे ॥ ०६४ ॥

प्रोत्साहयन्दुरात्मानं धार्तराष्ट्रं सुदुर्मतिः ।
समितौ गर्जते कर्णस्तमद्य जहि भारत ॥ ०६५ ॥

यच्च युष्मासु पापं वै धार्तराष्ट्रः प्रयुक्तवान् ।
तत्र सर्वत्र दुष्टात्मा कर्णः पापमतिर्मुखम् ॥ ०६६ ॥

यच्च तद्धार्तराष्ट्राणां क्रूरैः षड्भिर्महारथैः ।
अपश्यं निहतं वीरं सौभद्रमृषभेक्षणम् ॥ ०६७ ॥

द्रोणद्रौणिकृपान्वीरान्कम्पयन्तो महारथान् ।
निर्मनुष्यांश्च मातङ्गान्विरथांश्च महारथान् ॥ ०६८ ॥

व्यश्वारोहांश्च तुरगान्पत्तीन्व्यायुधजीवितान् ।
कुर्वन्तमृषभस्कन्धं कुरुवृष्णियशस्करम् ॥ ०६९ ॥

विधमन्तमनीकानि व्यथयन्तं महारथान् ।
मनुष्यवाजिमातङ्गान्प्रहिण्वन्तं यमक्षयम् ॥ ०७० ॥

शरैः सौभद्रमायस्तं दहन्तमिव वाहिनीम् ।
तन्मे दहति गात्राणि सखे सत्येन ते शपे ॥ ०७१ ॥

यत्तत्रापि च दुष्टात्मा कर्णोऽभ्यद्रुह्यत प्रभो ।
अशक्नुवंश्चाभिमन्योः कर्णः स्थातुं रणेऽग्रतः ॥ ०७२ ॥

सौभद्रशरनिर्भिन्नो विसञ्ज्ञः शोणितोक्षितः ।
निःश्वसन्क्रोधसंदीप्तो विमुखः सायकार्दितः ॥ ०७३ ॥

अपयानकृतोत्साहो निराशश्चापि जीविते ।
तस्थौ सुविह्वलः संख्ये प्रहारजनितश्रमः ॥ ०७४ ॥

अथ द्रोणस्य समरे तत्कालसदृशं तदा ।
श्रुत्वा कर्णो वचः क्रूरं ततश्चिच्छेद कार्मुकम् ॥ ०७५ ॥

ततश्छिन्नायुधं तेन रणे पञ्च महारथाः ।
स चैव निकृतिप्रज्ञः प्रावधीच्छरवृष्टिभिः ॥ ०७६ ॥

यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ।
प्रमुखे पाण्डवेयानां कुरूणां च नृशंसवत् ॥ ०७७ ॥

विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं पृथुश्रोणि वृणीष्व मितभाषिणि ॥ ०७८ ॥

लेखाभ्रु धृतराष्ट्रस्य दासी भूत्वा निवेशनम् ।
प्रविशारालपक्ष्माक्षि न सन्ति पतयस्तव ॥ ०७९ ॥

इत्युक्तवानधर्मज्ञस्तदा परमदुर्मतिः ।
पापः पापं वचः कर्णः शृण्वतस्तव भारत ॥ ०८० ॥

तस्य पापस्य तद्वाक्यं सुवर्णविकृताः शराः ।
शमयन्तु शिलाधौतास्त्वयास्ता जीवितच्छिदः ॥ ०८१ ॥

यानि चान्यानि दुष्टात्मा पापानि कृतवांस्त्वयि ।
तान्यद्य जीवितं चास्य शमयन्तु शरास्तव ॥ ०८२ ॥

गाण्डीवप्रहितान्घोरानद्य गात्रैः स्पृशञ्शरान् ।
कर्णः स्मरतु दुष्टात्मा वचनं द्रोणभीष्मयोः ॥ ०८३ ॥

सुवर्णपुङ्खा नाराचाः शत्रुघ्ना वैद्युतप्रभाः ।
त्वयास्तास्तस्य मर्माणि भित्त्वा पास्यन्ति शोणितम् ॥ ०८४ ॥

उग्रास्त्वद्भुजनिर्मुक्ता मर्म भित्त्वा शिताः शराः ।
अद्य कर्णं महावेगाः प्रेषयन्तु यमक्षयम् ॥ ०८५ ॥

अद्य हाहाकृता दीना विषण्णास्त्वच्छरार्दिताः ।
प्रपतन्तं रथात्कर्णं पश्यन्तु वसुधाधिपाः ॥ ०८६ ॥

अद्य स्वशोणिते मग्नं शयानं पतितं भुवि ।
अपविद्धायुधं कर्णं पश्यन्तु सुहृदो निजाः ॥ ०८७ ॥

हस्तिकक्ष्यो महानस्य भल्लेनोन्मथितस्त्वया ।
प्रकम्पमानः पततु भूमावाधिरथेर्ध्वजः ॥ ०८८ ॥

त्वया शरशतैश्छिन्नं रथं हेमविभूषितम् ।
हतयोधं समुत्सृज्य भीतः शल्यः पलायताम् ॥ ०८९ ॥

ततः सुयोधनो दृष्ट्वा हतमाधिरथिं त्वया ।
निराशो जीविते त्वद्य राज्ये चैव धनञ्जय ॥ ०९० ॥

एते द्रवन्ति पाञ्चाला वध्यमानाः शितैः शरैः ।
कर्णेन भरतश्रेष्ठ पाण्डवानुज्जिहीर्षवः ॥ ०९१ ॥

पाञ्चालान्द्रौपदेयांश्च धृष्टद्युम्नशिखण्डिनौ ।
धृष्टद्युम्नतनूजांश्च शतानीकं च नाकुलिम् ॥ ०९२ ॥

नकुलं सहदेवं च दुर्मुखं जनमेजयम् ।
सुवर्माणं सात्यकिं च विद्धि कर्णवशं गतान् ॥ ०९३ ॥

अभ्याहतानां कर्णेन पाञ्चालानां महारणे ।

श्रूयते निनदो घोरस्त्वद्बन्धूनां परंतप ॥ ०९४ ॥

न त्वेव भीताः पाञ्चालाः कथञ्चित्स्युः पराङ्मुखाः ।
न हि मृत्युं महेष्वासा गणयन्ति महारथाः ॥ ०९५ ॥

य एकः पाण्डवीं सेनां शरौघैः समवेष्टयत् ।
तं समासाद्य पाञ्चाला भीष्मं नासन्पराङ्मुखाः ॥ ०९६ ॥

तथा ज्वलन्तमस्त्राग्निं गुरुं सर्वधनुष्मताम् ।
निर्दहन्तं समारोहन्दुर्धर्षं द्रोणमोजसा ॥ ०९७ ॥

ते नित्यमुदिता जेतुं युद्धे शत्रूनरिंदमाः ।
न जात्वाधिरथेर्भीताः पाञ्चालाः स्युः पराङ्मुखाः ॥ ०९८ ॥

तेषामापततां शूरः पाञ्चालानां तरस्विनाम् ।
आदत्तेऽसूञ्शरैः कर्णः पतङ्गानामिवानलः ॥ ०९९ ॥

तांस्तथाभिमुखान्वीरान्मित्रार्थे त्यक्तजीवितान् ।
क्षयं नयति राधेयः पाञ्चालाञ्शतशो रणे ॥ १०० ॥

अस्त्रं हि रामात्कर्णेन भार्गवादृषिसत्तमात् ।
यदुपात्तं पुरा घोरं तस्य रूपमुदीर्यते ॥ १०१ ॥

तापनं सर्वसैन्यानां घोररूपं सुदारुणम् ।
समावृत्य महासेनां ज्वलति स्वेन तेजसा ॥ १०२ ॥

एते चरन्ति सङ्ग्रामे कर्णचापच्युताः शराः ।
भ्रमराणामिव व्रातास्तापयन्तः स्म तावकान् ॥ १०३ ॥

एते चरन्ति पाञ्चाला दिक्षु सर्वासु भारत ।
कर्णास्त्रं समरे प्राप्य दुर्निवारमनात्मभिः ॥ १०४ ॥

एष भीमो दृढक्रोधो वृतः पार्थ समन्ततः ।
सृञ्जयैर्योधयन्कर्णं पीड्यते स्म शितैः शरैः ॥ १०५ ॥

पाण्डवान्सृञ्जयांश्चैव पाञ्चालांश्चैव भारत ।
हन्यादुपेक्षितः कर्णो रोगो देहमिवाततः ॥ १०६ ॥

नान्यं त्वत्तोऽभिपश्यामि योधं यौधिष्ठिरे बले ।
यः समासाद्य राधेयं स्वस्तिमानाव्रजेद्गृहम् ॥ १०७ ॥

तमद्य निशितैर्बाणैर्निहत्य भरतर्षभ ।
यथाप्रतिज्ञं पार्थ त्वं कृत्वा कीर्तिमवाप्नुहि ॥ १०८ ॥

त्वं हि शक्तो रणे जेतुं सकर्णानपि कौरवान् ।
नान्यो युधि युधां श्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ १०९ ॥

एतत्कृत्वा महत्कर्म हत्वा कर्णं महारथम् ।
कृतार्थः सफलः पार्थ सुखी भव नरोत्तम ॥ ११० ॥

---

# अध्याय ०५२

सञ्जय उवाच ॥

स केशवस्य बीभत्सुः श्रुत्वा भारत भाषितम् ।
विशोकः संप्रहृष्टश्च क्षणेन समपद्यत ॥ ००१ ॥

ततो ज्यामनुमृज्याशु व्याक्षिपद्गाण्डिवं धनुः ।
दध्रे कर्णविनाशाय केशवं चाभ्यभाषत ॥ ००२ ॥

त्वया नाथेन गोविन्द ध्रुव एष जयो मम ।
प्रसन्नो यस्य मेऽद्य त्वं भूतभव्यभवत्प्रभुः ॥ ००३ ॥

त्वत्सहायो ह्यहं कृष्ण त्री.ण्ल्लोकान्वै समागतान् ।
प्रापयेयं परं लोकं किमु कर्णं महारणे ॥ ००४ ॥

पश्यामि द्रवतीं सेनां पाञ्चालानां जनार्दन ।
पश्यामि कर्णं समरे विचरन्तमभीतवत् ॥ ००५ ॥

भार्गवास्त्रं च पश्यामि विचरन्तं समन्ततः ।
सृष्टं कर्णेन वार्ष्णेय शक्रेणेव महाशनिम् ॥ ००६ ॥

अयं खलु स सङ्ग्रामो यत्र कृष्ण मया कृतम् ।
कथयिष्यन्ति भूतानि यावद्भूमिर्धरिष्यति ॥ ००७ ॥

अद्य कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे ।
गाण्डीवमुक्ताः क्षिण्वन्तो मम हस्तप्रचोदिताः ॥ ००८ ॥

अद्य राजा धृतराष्ट्रः स्वां बुद्धिमवमंस्यते ।
दुर्योधनमराज्यार्हं यया राज्येऽभ्यषेचयत् ॥ ००९ ॥

अद्य राज्यात्सुखाच्चैव श्रियो राष्ट्रात्तथा पुरात् ।
पुत्रेभ्यश्च महाबाहो धृतराष्ट्रो वियोक्ष्यते ॥ ०१० ॥

अद्य दुर्योधनो राजा जीविताच्च निराशकः ।
भविष्यति हते कर्णे कृष्ण सत्यं ब्रवीमि ते ॥ ०११ ॥

अद्य दृष्ट्वा मया कर्णं शरैर्विशकलीकृतम् ।
स्मरतां तव वाक्यानि शमं प्रति जनेश्वरः ॥ ०१२ ॥

अद्यासौ सौबलः कृष्ण ग्लहं जानातु वै शरान् ।
दुरोदरं च गाण्डीवं मण्डलं च रथं मम  ॥ ०१३  ॥

योऽसौ रणे नरं नान्यं पृथिव्यामभिमन्यते ।
तस्याद्य सूतपुत्रस्य भूमिः पास्यति शोणितम्  ॥ ०१४  ॥

गाण्डीवसृष्टा दास्यन्ति कर्णस्य परमां गतिम्  ॥ ०१४  ॥

अद्य तप्स्यति राधेयः पाञ्चालीं यत्तदाब्रवीत् ।
सभामध्ये वचः क्रूरं कुत्सयन्पाण्डवान्प्रति  ॥ ०१५  ॥

ये वै षण्ढतिलास्तत्र भवितारोऽद्य ते तिलाः ।
हते वैकर्तने कर्णे सूतपुत्रे दुरात्मनि  ॥ ०१६  ॥

अहं वः पाण्डुपुत्रेभ्यस्त्रास्यामीति यदब्रवीत् ।
अनृतं तत्करिष्यन्ति मामका निशिताः शराः  ॥ ०१७  ॥

हन्ताहं पाण्डवान्सर्वान्सपुत्रानिति योऽब्रवीत् ।
तमद्य कर्णं हन्तास्मि मिषतां सर्वधन्विनाम्  ॥ ०१८  ॥

यस्य वीर्ये समाश्वस्य धार्तराष्ट्रो बृहन्मनाः ।
अवामन्यत दुर्बुद्धिर्नित्यमस्मान्दुरात्मवान्  ॥ ०१९  ॥

तमद्य कर्णं राधेयं हन्तास्मि मधुसूदन  ॥ ०१९  ॥

अद्य कर्णे हते कृष्ण धार्तराष्ट्राः सराजकाः ।
विद्रवन्तु दिशो भीताः सिंहत्रस्ता मृगा इव  ॥ ०२०  ॥

अद्य दुर्योधनो राजा पृथिवीमन्ववेक्षताम् ।
हते कर्णे मया संख्ये सपुत्रे ससुहृज्जने  ॥ ०२१  ॥

अद्य कर्णं हतं दृष्ट्वा धार्तराष्ट्रोऽत्यमर्षणः ।
जानातु मां रणे कृष्ण प्रवरं सर्वधन्विनाम्  ॥ ०२२  ॥

अद्याहमनृणः कृष्ण भविष्यामि धनुर्भृताम् ।
क्रोधस्य च कुरूणां च शराणां गाण्डिवस्य च  ॥ ०२३  ॥

अद्य दुःखमहं मोक्ष्ये त्रयोदशसमार्जितम् ।
हत्वा कर्णं रणे कृष्ण शम्बरं मघवानिव  ॥ ०२४  ॥

अद्य कर्णे हते युद्धे सोमकानां महारथाः ।
कृतं कार्यं च मन्यन्तां मित्रकार्येप्सवो युधि  ॥ ०२५  ॥

न जाने च कथं प्रीतिः शैनेयस्याद्य माधव ।
भविष्यति हते कर्णे मयि चापि जयाधिके  ॥ ०२६  ॥

अहं हत्वा रणे कर्णं पुत्रं चास्य महारथम् ।
प्रीतिं दास्यामि भीमस्य यमयोः सात्यकेरपि  ॥ ०२७  ॥

धृष्टद्युम्नशिखण्डिभ्यां पाञ्चालानां च माधव ।
अध्यानृण्यं गमिष्यामि हत्वा कर्णं महारणे  ॥ ०२८  ॥

अद्य पश्यन्तु सङ्ग्रामे धनञ्जयममर्षणम् ।
युध्यन्तं कौरवान्संख्ये पातयन्तं च सूतजम्  ॥ ०२९  ॥

भवत्सकाशे वक्ष्ये च पुनरेवात्मसंस्तवम्  ॥ ०२९  ॥

धनुर्वेदे मत्समो नास्ति लोके ; पराक्रमे वा मम कोऽस्ति तुल्यः ।
को वाप्यन्यो मत्समोऽस्ति क्षमायां ; तथा क्रोधे सदृशोऽन्यो न मेऽस्ति  ॥ ०३०
॥

अहं धनुष्मानसुरान्सुरांश्च ; सर्वाणि भूतानि च सङ्गतानि ।

स्वबाहुवीर्याद्भमये पराभवं ; मत्पौरुषं विद्धि परः परेभ्यः ॥ ०३१ ॥

शरार्चिषा गाण्डिवेनाहमेकः ; सर्वान्कुरून्बाह्लिकांश्चाभिपत्य ।
हिमात्यये कक्षगतो यथाग्नि ;स्तहा दहेयं सगणान्प्रसह्य ॥ ०३२ ॥

पाणौ पृषत्का लिखिता ममैते ; धनुश्च सव्ये निहितं सबाणम् ।
पादौ च मे सरथौ सध्वजौ च ; न मादृशं युद्धगतं जयन्ति ॥ ०३३ ॥

---

# अध्याय ०५३

सञ्जय उवाच ॥

तेषामनीकानि बृहद्ध्वजानि ; रणे समृद्धानि समागतानि ।
गर्जन्ति भेरीनिनदोन्मुखानि ; मेघैर्यथा मेघगणास्तपान्ते ॥ ००१ ॥

महागजाभ्राकुलमस्त्रतोयं ; वादित्रनेमीतलशब्दवच्च ।
हिरण्यचित्रायुधवैद्युतं च ; महारथैरावृतशब्दवच्च ॥ ००२ ॥

तद्भीमवेगं रुधिरौघवाहि ; खड्गाकुलं क्षत्रियजीववाहि ।
अनार्तवं क्रूरमनिष्टवर्षं ; बभूव तत्संहरणं प्रजानाम् ॥ ००३ ॥

रथान्ससूतान्सहयान्गजांश्च ; सर्वानरीन्मृत्युवशं शरौघैः ।
निन्ये हयांश्चैव तथा ससादी ;न्पदातिसंघांश्च तथैव पार्थः ॥ ००४ ॥

कृपः शिखण्डी च रणे समेतौ ; दुर्योधनं सात्यकिरभ्यगच्छत ।
श्रुतश्रवा द्रोणसुतेन सार्धं ; युधामन्युश्चित्रसेनेन चापि ॥ ००५ ॥

कर्णस्य पुत्रस्तु रथी सुषेणं ; समागतः सृञ्जयांश्चोत्तमौजाः ।
गान्धारराजं सहदेवः क्षुधार्तो ; महर्षभं सिंह इवाभ्यधावत् ॥ ००६ ॥

शतानीको नाकुलिः कर्णपुत्रं ; युवा युवानं वृषसेनं शरौघैः ।
समार्दयत्कर्णसुतश्च वीरः ; पाञ्चालेयं शरवर्षैरनेकैः ॥ ००७ ॥

रथर्षभः कृतवर्माणमार्च्छ ;न्माद्रीपुत्रो नकुलश्चित्रयोधी ।
पाञ्चालानामधिपो याज्ञसेनिः ; सेनापतिं कर्णमार्च्छत्ससैन्यम् ॥ ००८ ॥

दुःशासनो भारत भारती च ; संशप्तकानां पृतना समृद्धा ।
भीमं रणे शस्त्रभृतां वरिष्ठं ; तदा समार्च्छत्तमसह्यवेगम् ॥ ००९ ॥

कर्णात्मजं तत्र जघान शूर ;स्तथाच्छिनच्चोत्तमौजाः प्रसह्य ।
तस्योत्तमाङ्गं निपपात भूमौ ; निनादयद्गां निनदेन खं च ॥ ०१० ॥

सुषेणशीर्षं पतितं पृथिव्यां ; विलोक्य कर्णोऽथ तदार्तरूपः ।
क्रोधाद्धयांस्तस्य रथं ध्वजं च ; बाणैः सुधारैर्निशितैर्न्यकृन्तत् ॥ ०११ ॥

स तूत्तमौजा निशितैः पृषत्कै ;र्विव्याध खड्गेन च भास्वरेण ।
पार्ष्णिं हयांश्चैव कृपस्य हत्वा ; शिखण्डिवाहं स ततोऽभ्यरोहत् ॥ ०१२ ॥

कृपं तु दृष्ट्वा विरथं रथस्थो ; नैच्छच्छरैस्ताडयितुं शिखण्डी ।
तं द्रौणिरावार्य रथं कृपं स्म ; समुज्जह्रे पङ्कगतां यथा गाम् ॥ ०१३ ॥

हिरण्यवर्मा निशितैः पृषत्कै ;स्तवात्मजानामनिलात्मजो वै ।
अतापयत्सैन्यमतीव भीमः ; काले शुचौ मध्यगतो यथार्कः ॥ ०१४ ॥

# अध्याय ०५४

सञ्जय उवाच ॥

अथ त्विदानीं तुमुले विमर्दे ; द्विषद्भिरेको बहुभिः समावृतः ।
महाभये सारथिमित्युवाच ; भीमश्चमूं वारयन्धार्तराष्ट्रीम् ॥ ००१ ॥

त्वं सारथे याहि जवेन वाहै ;र्नयाम्येतान्धार्तराष्ट्रान्यमाय ॥ ००१ ॥

सञ्चोदितो भीमसेनेन चैवं ; स सारथिः पुत्रबलं त्वदीयम् ।
प्रायात्ततः सारथिरुग्रवेगो ; यतो भीमस्तद्बलं गन्तुमैच्छत् ॥ ००२ ॥

ततोऽपरे नागरथाश्वपत्तिभिः ; प्रत्युद्ययुः कुरवस्तं समन्तात् ।
भीमस्य वाहाग्र्यमुदारवेगं ; समन्ततो बाणगणैर्निजघ्नुः ॥ ००३ ॥

ततः शरानापततो महात्मा ; चिच्छेद बाणैस्तपनीयपुङ्खैः ।
ते वै निपेतुस्तपनीयपुङ्खा ; द्विधा त्रिधा भीमशरैर्निकृत्ताः ॥ ००४ ॥

ततो राजन्नागरथाश्वयूनां ; भीमाहतानां तव राजमध्ये ।
घोरो निनादः प्रबभौ नरेन्द्र ; वज्राहतानामिव पर्वतानाम् ॥ ००५ ॥

ते वध्यमानाश्च नरेन्द्रमुख्या ; निर्भिन्ना वै भीमसेनप्रवेकैः ।
भीमं समन्तात्समरेऽध्यरोह ;न्वृक्षं शकुन्ता इव पुष्पहेतोः ॥ ००६ ॥

ततोऽभिपातं तव सैन्यमध्ये ; प्रादुश्चक्रे वेगमिवात्तवेगः ।
यथान्तकाले क्षपयन्दिधक्षु ;र्भूतान्तकृत्काल इवात्तदण्डः ॥ ००७ ॥

तस्यातिवेगस्य रणेऽतिवेगं ; नाशक्नुवन्धारयितुं त्वदीयाः ।
व्यात्ताननस्यापततो यथैव ; कालस्य काले हरतः प्रजा वै ॥ ००८ ॥

ततो बलं भारत भारतानां ; प्रदह्यमानं समरे महात्मन् ।

भीतं दिशोऽकीर्यत भीमनुन्नं ; महानिलेनाभ्रगणो यथैव ॥ ००९ ॥

ततो धीमान्सारथिमब्रवीद्बली ; स भीमसेनः पुनरेव हृष्टः ।
सूताभिजानीहि परान्स्वकान्वा ; रथान्ध्वजांश्चापततः समेतान् ॥ ०१० ॥

युध्यन्नहं नाभिजानामि किं चि ;न्मा सैन्यं स्वं छादयिष्ये पृषत्कैः ॥ ०१० ॥

अरीन्विशोकाभिनिरीक्ष्य सर्वतो ; मनस्तु चिन्ता प्रदुनोति मे भृशम् ।
राजातुरो नागमद्यत्किरीटी ; बहूनि दुःखान्यभिजातोऽस्मि सूत ॥ ०११ ॥

एतद्दुःखं सारथे धर्मराजो ; यन्मां हित्वा यातवाञ्शत्रुमध्ये ।
नैनं जीवन्नापि जानाम्यजीव ;न्बीभत्सुं वा तन्ममाद्यातिदुःखम् ॥ ०१२ ॥

सोऽहं द्विषत्सैन्यमुदग्रकल्पं ; विनाशयिष्ये परमप्रतीतः ।
एतान्निहत्याजिमध्ये समेता ;न्प्रीतो भविष्यामि सह त्वयाद्य ॥ ०१३ ॥

सर्वांस्तूणीरान्मार्गणान्वान्ववेक्ष्य ; किं शिष्टं स्यात्सायकानां रथे मे ।
का वा जातिः किं प्रमाणं च तेषां ; ज्ञात्वा व्यक्तं तन्ममाचक्ष्व सूत ॥ ०१४ ॥

विशोक उवाच ॥

षण्मार्गणानामयुतानि वीर ; क्षुराश्च भल्लाश्च तथायुताख्याः ।
नाराचानां द्वे सहस्रे तु वीर ; त्रीण्येव च प्रदराणां च पार्थ ॥ ०१५ ॥

अस्त्यायुधं पाण्डवेयावशिष्टं ; न यद्वहेच्छकटं षड्गवीयम् ।
एतद्विद्वन्मुञ्च सहस्रशोऽपि ; गदासिबाहुद्रविणं च तेऽस्ति ॥ ०१६ ॥

भीम उवाच ॥

सूताद्येमं पश्य भीमप्रमुक्तैः ; संभिन्दद्भिः पार्थिवानाशुवेगैः ।
उग्रैर्बाणैराहवं घोररूपं ; नष्टादित्यं मृत्युलोकेन तुल्यम् ॥ ०१७ ॥

अद्यैव तद्विदितं पार्थिवानां ; भविष्यति आकुमारं च सूत ।
निमग्नो वा समरे भीमसेन ; एकः कुरून्वा समरे विजेता ॥ ०१८ ॥

सर्वे संख्ये कुरवो निष्पतन्तु ; मां वा लोकाः कीर्तयन्त्वाकुमारम् ।
सर्वानेकस्तानहं पातयिष्ये ; ते वा सर्वे भीमसेनं तुदन्तु ॥ ०१९ ॥

आशास्तारः कर्म चाप्युत्तमं वा ; तन्मे देवाः केवलं साधयन्तु ।
आयात्विहाद्यार्जुनः शत्रुघाती ; शक्रस्तूर्णं यज्ञ इवोपहूतः ॥ ०२० ॥

ईक्षस्वैतां भारतीं दीर्यमाणा ;मेते कस्माद्विद्रवन्ते नरेन्द्राः ।
व्यक्तं धीमान्सव्यसाची नराग्र्यः ; सैन्यं ह्येतच्छादयत्याशु बाणैः ॥ ०२१ ॥

पश्य ध्वजांश्च द्रवतो विशोक ; नागान्हयान्पत्तिसंघांश्च संख्ये ।
रथान्विशीर्णाञ्शरशक्तिताडिता ;न्पश्यस्वैतान्रथिनश्चैव सूत ॥ ०२२ ॥

आपूर्यते कौरवी चाप्यभीक्ष्णं ; सेना ह्यसौ सुभृशं हन्यमाना ।
धनञ्जयस्याशनितुल्यवेगै ;र्ग्रस्ता शरैर्बर्हिसुवर्णवाजैः ॥ ०२३ ॥

एते द्रवन्ति स्म रथाश्वनागाः ; पदातिसंघानवमर्दयन्तः ।
संमुह्यमानाः कौरवाः सर्व एव ; द्रवन्ति नागा इव दावभीताः ॥ ०२४ ॥

हाहाकृताश्चैव रणे विशोक ; मुञ्चन्ति नादान्विपुलान्गजेन्द्राः ॥ ०२४ ॥

विशोक उवाच ॥

सर्वे कामाः पाण्डव ते समृद्धाः ; कपिध्वजो दृश्यते हस्तिसैन्ये ।
नीलाद्धनाद्विद्युतमुच्चरन्तीं ; तथापश्यं विस्फुरद्वै धनुस्तत् ॥ ०२५ ॥

कपिर्ह्यसौ वीक्ष्यते सर्वतो वै ; ध्वजाग्रमारुह्य धनञ्जयस्य ।
दिवाकराभो मणिरेष दिव्यो ; विभ्राजते चैव किरीटसंस्थः ॥ ०२६ ॥

पार्श्वे भीमं पाण्डुराभ्रप्रकाशं ; पश्येमं त्वं देवदत्तं सुघोषम् ।
अभीशुहस्तस्य जनार्दनस्य ; विगाहमानस्य चमूं परेषाम्  ॥ ०२७  ॥

रविप्रभं वज्रनाभं क्षुरान्तं ; पार्श्वे स्थितं पश्य जनार्दनस्य ।
चक्रं यशो वर्धयत्केशवस्य ; सदार्चितं यदुभिः पश्य वीर  ॥ ०२८  ॥

भीम उवाच  ॥

ददामि ते ग्रामवरांश्चतुर्दश ; प्रियाख्याने सारथे सुप्रसन्नः ।
दसीशतं चापि रथांश्च विंशतिं ; यदर्जुनं वेदयसे विशोक  ॥ ०२९  ॥

---

# अध्याय ०५५

सञ्जय उवाच  ॥

श्रुत्वा च रथनिर्घोषं सिंहनादं च संयुगे ।
अर्जुनः प्राह गोविन्दं शीघ्रं चोदय वाजिनः  ॥ ००१  ॥

अर्जुनस्य वचः श्रुत्वा गोविन्दोऽर्जुनमब्रवीत् ।
एष गच्छामि सुक्षिप्रं यत्र भीमो व्यवस्थितः  ॥ ००२  ॥

आयान्तमश्वैर्हिमशङ्खवर्णैः ; सुवर्णमुक्तामणिजालनद्धैः ।
जम्भं जिघांसुं प्रगृहीतवज्रं ; जयाय देवेन्द्रमिवोग्रमन्युम्  ॥ ००३  ॥

रथाश्वमातङ्गपदातिसंघा ; बाणस्वनैर्नेमिखुरस्वनैश्च ।
संनादयन्तो वसुधां दिशश्च ; क्रुद्धा नृसिंहा जयमभ्युदीयुः  ॥ ००४  ॥

तेषां च पार्थस्य महत्तदासी ;द्देहासुपाप्मक्षपणं सुयुद्धम् ।
त्रैलोक्यहेतोरसुरैर्यथासी ;द्देवस्य विष्णोर्जयतां वरस्य ॥ ००५ ॥

तैरस्तमुच्चावचमायुधौघ ;मेकः प्रचिच्छेद किरीटमाली ।
क्षुरार्धचन्द्रैर्निशितैश्च बाणैः ; शिरांसि तेषां बहुधा च बाहून् ॥ ००६ ॥

छत्राणि वालव्यजनानि केतू ;नश्वान्रथान्पत्तिगणान्द्विपांश्च ।
ते पेतुरुर्व्यां बहुधा विरूपा ; वातप्रभग्नानि यथा वनानि ॥ ००७ ॥

सुवर्णजालाववतता महागजाः ; सवैजयन्तीध्वजयोधकल्पिताः ।
सुवर्णपुङ्खैरिषुभिः समाचिता ;श्चकाशिरे प्रज्वलिता यथाचलाः ॥ ००८ ॥

विदार्य नागांश्च रथांश्च वाजिनः ; शरोत्तमैर्वासववज्रसंनिभैः ।
द्रुतं ययौ कर्णजिघांसया तथा ; यथा मरुत्वान्बलभेदने पुरा ॥ ००९ ॥

ततः स पुरुषव्याघ्रः सूतसैन्यमरिंदम ।
प्रविवेश महाबाहुर्मकरः सागरं यथा ॥ ०१० ॥

तं दृष्ट्वा तावका राजन्रथपत्तिसमन्विताः ।
गजाश्वसादिबहुलाः पाण्डवं समुपाद्रवन् ॥ ०११ ॥

तत्राभिद्रवतां पार्थमारावः सुमहानभूत् ।
सागरस्येव मत्तस्य यथा स्यात्सलिलस्वनः ॥ ०१२ ॥

ते तु तं पुरुषव्याघ्रं व्याघ्रा इव महारथाः ।
अभ्यद्रवन्त सङ्ग्रामे त्यक्त्वा प्राणकृतं भयम् ॥ ०१३ ॥

तेषामापततां तत्र शरवर्षाणि मुञ्चताम् ।
अर्जुनो व्यधमत्सैन्यं महावातो घनानिव ॥ ०१४ ॥

तेऽर्जुनं सहिता भूत्वा रथवंशैः प्रहारिणः ।
अभियाय महेष्वासा विव्यधुर्निशितैः शरैः ॥ ०१५ ॥

ततोऽर्जुनः सहस्राणि रथवारणवाजिनाम् ।
प्रेषयामास विशिखैर्यमस्य सदनं प्रति ॥ ०१६ ॥

ते वध्यमानाः समरे पार्थचापच्युतैः शरैः ।
तत्र तत्र स्म लीयन्ते भये जाते महारथाः ॥ ०१७ ॥

तेषां चतुःशतान्वीरान्यतमानान्महारथान् ।
अर्जुनो निशितैर्बाणैरनयद्यमसादनम् ॥ ०१८ ॥

ते वध्यमानाः समरे नानालिङ्गैः शितैः शरैः ।
अर्जुनं समभित्यज्य दुद्रुवुर्वै दिशो भयात् ॥ ०१९ ॥

तेषां शब्दो महानासीद्द्रवतां वाहिनीमुखे ।
महौघस्येव भद्रं ते गिरिमासाद्य दीर्यतः ॥ ०२० ॥

तां तु सेनां भृशं विद्ध्वा द्रावयित्वार्जुनः शरैः ।
प्रायादभिमुखः पार्थः सूतानीकानि मारिष ॥ ०२१ ॥

तस्य शब्दो महानासीत्परानभिमुखस्य वै ।
गरुडस्येव पततः पन्नगार्थे यथा पुरा ॥ ०२२ ॥

तं तु शब्दमभिश्रुत्य भीमसेनो महाबलः ।
बभूव परमप्रीतः पार्थदर्शनलालसः ॥ ०२३ ॥

श्रुत्वैव पार्थमायान्तं भीमसेनः प्रतापवान् ।
त्यक्त्वा प्राणान्महाराज सेनां तव ममर्द ह ॥ ०२४ ॥

स वायुवेगप्रतिमो वायुवेगसमो जवे ।

वायुवद्व्यचरद्भीमो वायुपुत्रः प्रतापवान् ॥ ०२५ ॥

तेनार्द्यमाना राजेन्द्र सेना तव विशां पते ।
व्यभ्राम्यत महाराज भिन्ना नौरिव सागरे ॥ ०२६ ॥

तां तु सेनां तदा भीमो दर्शयन्पाणिलाघवम् ।
शरैरवचकर्तोग्रैः प्रेषयिष्यन्यमक्षयम् ॥ ०२७ ॥

तत्र भारत भीमस्य बलं दृष्ट्वातिमानुषम् ।
व्यत्रस्यन्त रणे योधाः कालस्येव युगक्षये ॥ ०२८ ॥

तथार्दितान्भीमबलान्भीमसेनेन भारत ।
दृष्ट्वा दुर्योधनो राजा इदं वचनमब्रवीत् ॥ ०२९ ॥

सैनिकान्स महेष्वासो योधांश्च भरतर्षभ ।
समादिशद्रणे सर्वान्हत भीममिति स्म ह ॥ ०३० ॥

तस्मिन्हते हतं मन्ये सर्वसैन्यमशेषतः ॥ ०३० ॥

प्रतिगृह्य च तामाज्ञां तव पुत्रस्य पार्थिवाः ।
भीमं प्रच्छादयामासुः शरवर्षैः समन्ततः ॥ ०३१ ॥

गजाश्च बहुला राजन्नराश्च जयगृद्धिनः ।
रथा हयाश्च राजेन्द्र परिवव्रुर्वृकोदरम् ॥ ०३२ ॥

स तैः परिवृतः शूरैः शूरो राजन्समन्ततः ।
शुशुभे भरतश्रेष्ठ नक्षत्रैरिव चन्द्रमाः ॥ ०३३ ॥

स रराज तथा संख्ये दर्शनीयो नरोत्तमः ।
निर्विशेषं महाराज यथा हि विजयस्तथा ॥ ०३४ ॥

तत्र ते पार्थिवाः सर्वे शरवृष्टीः समासृजन् ।
क्रोधरक्तेक्षणाः क्रूरा हन्तुकामा वृकोदरम् ॥ ०३५ ॥

स विदार्य महासेनां शरैः संनतपर्वभिः ।
निश्चक्राम रणाद्भीमो मत्स्यो जालादिवाम्भसि ॥ ०३६ ॥

हत्वा दश सहस्राणि गजानामनिवर्तिनाम् ।
नृणां शतसहस्रे द्वे द्वे शते चैव भारत ॥ ०३७ ॥

पञ्च चाश्वसहस्राणि रथानां शतमेव च ।
हत्वा प्रास्यन्दयद्भीमो नदीं शोणितकर्दमाम् ॥ ०३८ ॥

शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम् ।
नरमीनामश्वनक्रां केशशैवलशाद्वलाम् ॥ ०३९ ॥

संछिन्नभुजनागेन्द्रां बहुरत्नापहारिणीम् ।
ऊरुग्राहां मज्जपङ्कां शीर्षोपलसमाकुलाम् ॥ ०४० ॥

धनुष्काशां शरावापां गदापरिघकेतनाम् ।
योधव्रातवतीं संख्ये वहन्तीं यमसादनम् ॥ ०४१ ॥

क्षणेन पुरुषव्याघ्रः प्रावर्तयत निम्नगाम् ।
यथा वैतरणीमुग्रां दुस्तरामकृतात्मभिः ॥ ०४२ ॥

यतो यतः पाण्डवेयः प्रवृत्तो रथसत्तमः ।
ततस्ततोऽपातयत योधाञ्शतसहस्रशः ॥ ०४३ ॥

एवं दृष्ट्वा कृतं कर्म भीमसेनेन संयुगे ।
दुर्योधनो महाराज शकुनिं वाक्यमब्रवीत् ॥ ०४४ ॥

जय मातुल सङ्ग्रामे भीमसेनं महाबलम् ।

अस्मिञ्जिते जितं मन्ये पाण्डवेयं महाबलम्  ॥ ०४५  ॥

ततः प्रायान्महाराज सौबलेयः प्रतापवान् ।
रणाय महते युक्तो भ्रातृभिः परिवारितः  ॥ ०४६  ॥

स समासाद्य सङ्ग्रामे भीमं भीमपराक्रमम् ।
वारयामास तं वीरो वेलेव मकरालयम्  ॥ ०४७  ॥

स न्यवर्तत तं भीमो वार्यमाणः शितैः शरैः  ॥ ०४७  ॥

शकुनिस्तस्य राजेन्द्र वामे पार्श्वे स्तनान्तरे ।
प्रेषयामास नाराचान्रुक्मपुङ्खाञ्शिलाशितान्  ॥ ०४८  ॥

वर्म भित्त्वा तु सौवर्णं बाणास्तस्य महात्मनः ।
न्यमज्जन्त महाराज कङ्कबर्हिणवाससः  ॥ ०४९  ॥

सोऽतिविद्धो रणे भीमः शरं हेमविभूषितम् ।
प्रेषयामास सहसा सौबलं प्रति भारत  ॥ ०५०  ॥

तमायान्तं शरं घोरं शकुनिः शत्रुतापनः ।
चिच्छेद शतधा राजन्कृतहस्तो महाबलः  ॥ ०५१  ॥

तस्मिन्निपतिते भूमौ भीमः क्रुद्धो विशां पते ।
धनुश्चिच्छेद भल्लेन सौबलस्य हसन्निव  ॥ ०५२  ॥

तदपास्य धनुश्छिन्नं सौबलेयः प्रतापवान् ।
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश  ॥ ०५३  ॥

तैस्तस्य तु महाराज भल्लैः संनतपर्वभिः ।
चतुर्भिः सारथिं ह्यार्च्छद्भीमं पञ्चभिरेव च  ॥ ०५४  ॥

ध्वजमेकेन चिच्छेद छत्रं द्वाभ्यां विशां पते ।
चतुर्भिश्चतुरो वाहान्विव्याध सुबलात्मजः ॥ ०५५ ॥

ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ।
शक्तिं चिक्षेप समरे रुक्मदण्डामयस्मयीम् ॥ ०५६ ॥

सा भीमभुजनिर्मुक्ता नागजिह्वेव चञ्चला ।
निपपात रथे तूर्णं सौबलस्य महात्मनः ॥ ०५७ ॥

ततस्तामेव सङ्गृह्य शक्तिं कनकभूषणाम् ।
भीमसेनाय चिक्षेप क्रुद्धरूपो विशां पते ॥ ०५८ ॥

सा निर्भिद्य भुजं सव्यं पाण्डवस्य महात्मनः ।
पपात च ततो भूमौ यथा विद्युन्नभश्च्युता ॥ ०५९ ॥

अथोत्क्रुष्टं महाराज धार्तराष्ट्रैः समन्ततः ।
न तु तं ममृषे भीमः सिंहनादं तरस्विनाम् ॥ ०६० ॥

स सङ्गृह्य धनुः सज्यं त्वरमाणो महारथः ।
मुहूर्तादिव राजेन्द्र छादयामास सायकैः ॥ ०६१ ॥

सौबलस्य बलं संख्ये त्यक्त्वात्मानं महाबलः ॥ ०६१ ॥

तस्याश्वांश्चतुरो हत्वा सूतं चैव विशां पते ।
ध्वजं चिच्छेद भल्लेन त्वरमाणः पराक्रमी ॥ ०६२ ॥

हताश्वं रथमुत्सृज्य त्वरमाणो नरोत्तमः ।
तस्थौ विस्फारयंश्चापं क्रोधरक्तेक्षणः श्वसन् ॥ ०६३ ॥

शरैश्च बहुधा राजन्भीममार्च्छत्समन्ततः ॥ ०६३ ॥

प्रतिहत्य तु वेगेन भीमसेनः प्रतापवान् ।
धनुश्चिच्छेद सङ्क्रुद्धो विव्याध च शितैः शरैः ॥ ०६४ ॥

सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ।
निपपात ततो भूमौ किञ्चित्प्राणो नराधिप ॥ ०६५ ॥

ततस्तं विह्वलं ज्ञात्वा पुत्रस्तव विशां पते ।
अपोवाह रथेनाजौ भीमसेनस्य पश्यतः ॥ ०६६ ॥

रथस्थे तु नरव्याघ्रे धार्तराष्ट्राः पराङ्मुखाः ।
प्रदुद्रुवुर्दिशो भीता भीमाज्जाते महाभये ॥ ०६७ ॥

सौबले निर्जिते राजन्भीमसेनेन धन्विना ।
भयेन महता भग्नः पुत्रो दुर्योधनस्तव ॥ ०६८ ॥

अपायाज्जवनैरश्वैः सापेक्षो मातुलं प्रति ॥ ०६८ ॥

पराङ्मुखं तु राजानं दृष्ट्वा सैन्यानि भारत ।
विप्रजग्मुः समुत्सृज्य द्वैरथानि समन्ततः ॥ ०६९ ॥

तान्दृष्ट्वातिरथान्सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
जवेनाभ्यपतद्भीमः किरञ्शरशतान्बहून् ॥ ०७० ॥

ते वध्यमाना भीमेन धार्तराष्ट्राः पराङ्मुखाः ।
कर्णमासाद्य समरे स्थिता राजन्समन्ततः ॥ ०७१ ॥

स हि तेषां महावीर्यो द्वीपोऽभूत्सुमहाबलः ॥ ०७१ ॥

भिन्ननौका यथा राजन्द्वीपमासाद्य निर्वृताः ।
भवन्ति पुरुषव्याघ्र नाविकाः कालपर्यये ॥ ०७२ ॥

तथा कर्णं समासाद्य तावका भरतर्षभ ।
समाश्वस्ताः स्थिता राजन्संप्रहृष्टाः परस्परम् ॥ ०७३ ॥

समाजग्मुश्च युद्धाय मृत्युं कृत्वा निवर्तनम् ॥ ०७३ ॥

---

# अध्याय ०५६

धृतराष्ट्र उवाच ॥

ततो भग्नेषु सैन्येषु भीमसेनेन संयुगे ।
दुर्योधनोऽब्रवीत्किं नु सौबलो वापि सञ्जय ॥ ००१ ॥

कर्णो वा जयतां श्रेष्ठो योधा वा मामका युधि ।
कृपो वा कृतवर्मा च द्रौणिर्दुःशासनोऽपि वा ॥ ००२ ॥

अत्यद्भुतमिदं मन्ये पाण्डवेयस्य विक्रमम् ।
यथाप्रतिज्ञं योधानां राधेयः कृतवानपि ॥ ००३ ॥

कुरूणामपि सर्वेषां कर्णः शत्रुनिषूदनः ।
शर्म वर्म प्रतिष्ठा च जीविताशा च सञ्जय ॥ ००४ ॥

तत्प्रभग्नं बलं दृष्ट्वा कौन्तेयेनामितौजसा ।
राधेयानामधिरथः कर्णः किमकरोद्युधि ॥ ००५ ॥

पुत्रा वा मम दुर्धर्षा राजानो वा महारथाः ।
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि सञ्जय ॥ ००६ ॥

सञ्जय उवाच ॥

अपराह्णे महाराज सूतपुत्रः प्रतापवान् ।
जघान सोमकान्सर्वान्भीमसेनस्य पश्यतः ॥ ००७ ॥

भीमोऽप्यतिबलः सैन्यं धार्तराष्ट्रं व्यपोथयत् ॥ ००७ ॥

द्राव्यमाणं बलं दृष्ट्वा भीमसेनेन धीमता ।
यन्तारमब्रवीत्कर्णः पाञ्चालानेव मा वह ॥ ००८ ॥

मद्रराजस्ततः शल्यः श्वेतानश्वान्महाजवान् ।
प्राहिणोच्चेदिपाञ्चालान्करूषांश्च महाबलः ॥ ००९ ॥

प्रविश्य च स तां सेनां शल्यः परबलार्दनः ।
न्ययच्छत्तुरगान्हृष्टो यत्र यत्रैच्छदग्रणीः ॥ ०१० ॥

तं रथं मेघसङ्काशं वैयाघ्रपरिवारणम् ।
संदृश्य पाण्डुपाञ्चालास्त्रस्ता आसन्विशां पते ॥ ०११ ॥

ततो रथस्य निनदः प्रादुरासीन्महारणे ।
पर्जन्यसमनिर्घोषः पर्वतस्येव दीर्यतः ॥ ०१२ ॥

ततः शरशतैस्तीक्ष्णैः कर्णोऽप्याकर्णनिःसृतैः ।
जघान पाण्डवबलं शतशोऽथ सहस्रशः ॥ ०१३ ॥

तं तथा समरे कर्म कुर्वाणमतिमानुषम् ।
परिवव्रुर्महेष्वासाः पाण्डवानां महारथाः ॥ ०१४ ॥

तं शिखण्डी च भीमश्च धृष्टद्युम्नश्च पार्षतः ।
नकुलः सहदेवश्च द्रौपदेयाः ससात्यकाः ॥ ०१५ ॥

परिवव्रुर्जिघांसन्तो राधेयं शरवृष्टिभिः ॥ ०१५ ॥

सात्यकिस्तु ततः कर्णं विंशत्या निशितैः शरैः ।
अताडयद्रणे शूरो जत्रुदेशे नरोत्तमः ॥ ०१६ ॥

शिखण्डी पञ्चविंशत्या धृष्टद्युम्नश्च पञ्चभिः ।
द्रौपदेयाश्चतुःषष्ट्या सहदेवश्च सप्तभिः ॥ ०१७ ॥

नकुलश्च शतेनाजौ कर्णं विव्याध सायकैः ॥ ०१७ ॥

भीमसेनस्तु राधेयं नवत्या नतपर्वणाम् ।
विव्याध समरे क्रुद्धो जत्रुदेशे महाबलः ॥ ०१८ ॥

ततः प्रहस्याधिरथिर्विक्षिपन्धनुरुत्तमम् ।
मुमोच निशितान्बाणान्पीडयन्सुमहाबलः ॥ ०१९ ॥

तान्प्रत्यविध्यद्राधेयः पञ्चभिः पञ्चभिः शरैः ॥ ०१९ ॥

सात्यकेस्तु धनुश्छित्त्वा ध्वजं च पुरुषर्षभः ।
अथैनं नवभिर्बाणैराजघान स्तनान्तरे ॥ ०२० ॥

भीमसेनस्तु तं क्रुद्धो विव्याध त्रिंशता शरैः ।
सारथिं च त्रिभिर्बाणैराजघान परंतपः ॥ ०२१ ॥

विरथान्द्रौपदेयांश्च चकार पुरुषर्षभः ।
अक्ष्णोर्निमेषमात्रेण तदद्भुतमिवाभवत् ॥ ०२२ ॥

विमुखीकृत्य तान्सर्वाञ्शरैः संनतपर्वभिः ।
पाञ्चालानहनच्छूरश्चेदीनां च महारथान् ॥ ०२३ ॥

ते वध्यमानाः समरे चेदिमत्स्या विशां पते ।

कर्णमेकमभिद्रुत्य शरसंघैः समार्दयन् ॥ ०२४ ॥

ताञ्जघान शितैर्बाणैः सूतपुत्रो महारथः ॥ ०२४ ॥

एतदत्यद्भुतं कर्णे दृष्टवानस्मि भारत ।
यदेकः समरे शूरान्सूतपुत्रः प्रतापवान् ॥ ०२५ ॥

यतमानान्परं शक्त्यायोधयत्तांश्च धन्विनः ।
पाण्डवेयान्महाराज शरैर्वारितवान्रणे ॥ ०२६ ॥

तत्र भारत कर्णस्य लाघवेन महात्मनः ।
तुतुषुर्देवताः सर्वाः सिद्धाश्च परमर्षयः ॥ ०२७ ॥

अपूजयन्महेष्वासा धार्तराष्ट्रा नरोत्तमम् ।
कर्णं रथवरश्रेष्ठं श्रेष्ठं सर्वधनुष्मताम् ॥ ०२८ ॥

ततः कर्णो महाराज ददाह रिपुवाहिनीम् ।
कक्षमिद्धो यथा वह्निर्निदाघे ज्वलितो महान् ॥ ०२९ ॥

ते वध्यमानाः कर्णेन पाण्डवेयास्ततस्ततः ।
प्राद्रवन्त रणे भीताः कर्णं दृष्ट्वा महाबलम् ॥ ०३० ॥

तत्राक्रन्दो महानासीत्पाञ्चालानां महारणे ।
वध्यतां सायकैस्तीक्ष्णैः कर्णचापवरच्युतैः ॥ ०३१ ॥

तेन शब्देन वित्रस्ता पाण्डवानां महाचमूः ।
कर्णमेकं रणे योधं मेनिरे तत्र शात्रवाः ॥ ०३२ ॥

तत्राद्भुतं परं चक्रे राधेयः शत्रुकर्शनः ।
यदेकं पाण्डवाः सर्वे न शेकुरभिवीक्षितुम् ॥ ०३३ ॥

यथौघः पर्वतश्रेष्ठमासाद्याभिप्रदीर्यते ।
तथा तत्पाण्डवं सैन्यं कर्णमासाद्य दीर्यते ॥ ०३४ ॥

कर्णोऽपि समरे राजन्विधूमोऽग्निरिव ज्वलन् ।
दहंस्तस्थौ महाबाहुः पाण्डवानां महाचमूम् ॥ ०३५ ॥

शिरांसि च महाराज कर्णांश्चञ्चलकुण्डलान् ।
बाहूंश्च वीरो वीराणां चिच्छेद लघु चेषुभिः ॥ ०३६ ॥

हस्तिदन्तान्त्सरून्खड्गान्ध्वजाञ्शक्तीर्हयान्गजान् ।
रथांश्च विविधान्राजन्पताका व्यजनानि च ॥ ०३७ ॥

अक्षेषायुगयोक्त्राणि चक्राणि विविधानि च ।
चिच्छेद शतधा कर्णो योधव्रतमनुष्ठितः ॥ ०३८ ॥

तत्र भारत कर्णेन निहतैर्गजवाजिभिः ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ ०३९ ॥

विषमं च समं चैव हतैरश्वपदातिभिः ।
रथैश्च कुञ्जरैश्चैव न प्राज्ञायत किञ्चन ॥ ०४० ॥

नापि स्वे न परे योधाः प्राज्ञायन्त परस्परम् ।
घोरे शरान्धकारे तु कर्णास्त्रे च विजृम्भिते ॥ ०४१ ॥

राधेयचापनिर्मुक्तैः शरैः काञ्चनभूषितैः ।
संछादिता महाराज यतमाना महारथाः ॥ ०४२ ॥

ते पाण्डवेयाः समरे कर्णेन स्म पुनः पुनः ।
अभज्यन्त महाराज यतमाना महारथाः ॥ ०४३ ॥

मृगसंघान्यथा क्रुद्धः सिंहो द्रावयते वने ।

कर्णस्तु समरे योधांस्तत्र तत्र महायशाः ॥ ०४४ ॥

कालयामास तत्सैन्यं यथा पशुगणान्वृकः ॥ ०४४ ॥

दृष्ट्वा तु पाण्डवीं सेनां धार्तराष्ट्राः पराङ्मुखीम् ।
अभिजग्मुर्महेष्वासा रुवन्तो भैरवान्रवान् ॥ ०४५ ॥

दुर्योधनो हि राजेन्द्र मुदा परमया युतः ।
वादयामास संहृष्टो नानावाद्यानि सर्वशः ॥ ०४६ ॥

पाञ्चालापि महेष्वासा भग्ना भग्ना नरोत्तमाः ।
न्यवर्तन्त यथा शूरा मृत्युं कृत्वा निवर्तनम् ॥ ०४७ ॥

तान्निवृत्तान्रणे शूरान्राधेयः शत्रुतापनः ।
अनेकशो महाराज बभञ्ज पुरुषर्षभः ॥ ०४८ ॥

तत्र भारत कर्णेन पाञ्चाला विंशती रथाः ।
निहताः सादयः क्रोधाच्चेदयश्च परःशताः ॥ ०४९ ॥

कृत्वा शून्यान्रथोपस्थान्वाजिपृष्ठांश्च भारत ।
निर्मनुष्यान्गजस्कन्धान्पादातांश्चैव विद्रुतान् ॥ ०५० ॥

आदित्य इव मध्याह्ने दुर्निरीक्ष्यः परंतपः ।
कालान्तकवपुः क्रूरः सूतपुत्रश्चचार ह ॥ ०५१ ॥

एवमेतान्महाराज नरवाजिरथद्विपान् ।
हत्वा तस्थौ महेष्वासः कर्णोऽरिगणसूदनः ॥ ०५२ ॥

यथा भूतगणान्हत्वा कालस्तिष्ठेन्महाबलः ।
तथा स सोमकान्हत्वा तस्थावेको महारथः ॥ ०५३ ॥

तत्राद्भुतमपश्याम पाञ्चालानां पराक्रमम् ।
वध्यमानापि कर्णेन नाजह्रू रणमूर्धनि ॥ ०५४ ॥

राजा दुःशासनश्चैव कृपः शारद्वतस्तथा ।
अश्वत्थामा कृतवर्मा शकुनिश्चापि सौबलः ॥ ०५५ ॥

न्यहनन्पाण्डवीं सेनां शतशोऽथ सहस्रशः ॥ ०५५ ॥

कर्णपुत्रौ च राजेन्द्र भ्रातरौ सत्यविक्रमौ ।
अनाशयेतां बलिनः पाञ्चालान्वै ततस्ततः ॥ ०५६ ॥

तत्र युद्धं तदा ह्यासीत्क्रूरं विशसनं महत् ॥ ०५६ ॥

तथैव पाण्डवाः शूरा धृष्टद्युम्नशिखण्डिनौ ।
द्रौपदेयाश्च सङ्क्रुद्धा अभ्यघ्नंस्तावकं बलम् ॥ ०५७ ॥

एवमेष क्षयो वृत्तः पाण्डवानां ततस्ततः ।
तावकानामपि रणे भीमं प्राप्य महाबलम् ॥ ०५८ ॥

---

# अध्याय ०५७

सञ्जय उवाच ॥

अर्जुनस्तु महाराज कृत्वा सैन्यं पृथग्विधम् ।
सूतपुत्रं सुसंरब्धं दृष्ट्वा चैव महारणे ॥ ००१ ॥

शोणितोदां महीं कृत्वा मांसमज्जास्थिवाहिनीम् ।

वासुदेवमिदं वाक्यमब्रवीत्पुरुषर्षभ ॥ ००२ ॥

एष केतू रणे कृष्ण सूतपुत्रस्य दृश्यते ।
भीमसेनादयश्चैते योधयन्ति महारथान् ॥ ००३ ॥

एते द्रवन्ति पाञ्चालाः कर्णात्त्रस्ता जनार्दन ॥ ००३ ॥

एष दुर्योधनो राजा श्वेतच्छत्रेण भास्वता ।
कर्णेन भग्नान्पाञ्चालान्द्रावयन्बहु शोभते ॥ ००४ ॥

कृपश्च कृतवर्मा च द्रौणिश्चैव महाबलः ।
एते रक्षन्ति राजानं सूतपुत्रेण रक्षिताः ॥ ००५ ॥

अवध्यमानास्तेऽस्माभिर्घातयिष्यन्ति सोमकान् ॥ ००५ ॥

एष शल्यो रथोपस्थे रश्मिसञ्चारकोविदः ।
सूतपुत्ररथं कृष्ण वाहयन्बहु शोभते ॥ ००६ ॥

तत्र मे बुद्धिरुत्पन्ना वाहयात्र महारथम् ।
नाहत्वा समरे कर्णं निवर्तिष्ये कथञ्चन ॥ ००७ ॥

राधेयोऽप्यन्यथा पार्थान्सृञ्जयांश्च महारथान् ।
निःशेषान्समरे कुर्यात्पश्यतोर्नौ जनार्दन ॥ ००८ ॥

ततः प्रायाद्रथेनाशु केशवस्तव वाहिनीम् ।
कर्णं प्रति महेष्वासं द्वैरथे सव्यसाचिना ॥ ००९ ॥

प्रयातश्च महाबाहुः पाण्डवानुज्ञया हरिः ।
आश्वासयन्रथेनैव पाण्डुसैन्यानि सर्वशः ॥ ०१० ॥

रथघोषः स सङ्ग्रामे पाण्डवेयस्य संबभौ ।

वासवाशनितुल्यस्य महौघस्येव मारिष ॥ ०११ ॥

महता रथघोषेण पाण्डवः सत्यविक्रमः ।
अभ्ययादप्रमेयात्मा विजयस्तव वाहिनीम् ॥ ०१२ ॥

तमायान्तं समीक्ष्यैव श्वेताश्वं कृष्णसारथिम् ।
मद्रराजोऽब्रवीत्कर्णं केतुं दृष्ट्वा महात्मनः ॥ ०१३ ॥

अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः ।
निघ्नन्नमित्रान्समरे यं कर्ण परिपृच्छसि ॥ ०१४ ॥

एष तिष्ठति कौन्तेयः संस्पृशन्गाण्डिवं धनुः ।
तं हनिष्यसि चेदद्य तन्नः श्रेयो भविष्यति ॥ ०१५ ॥

एषा विदीर्यते सेना धार्तराष्ट्री समन्ततः ।
अर्जुनस्य भयात्तूर्णं निघ्नतः शात्रवान्बहून् ॥ ०१६ ॥

वर्जयन्सर्वसैन्यानि त्वरते हि धनञ्जयः ।
त्वदर्थमिति मन्येऽहं यथास्योदीर्यते वपुः ॥ ०१७ ॥

न ह्यवस्थाप्यते पार्थो युयुत्सुः केनचित्सह ।
त्वामृते क्रोधदीप्तो हि पीड्यमाने वृकोदरे ॥ ०१८ ॥

विरथं धर्मराजं च दृष्ट्वा सुदृढविक्षतम् ।
शिखण्डिनं सात्यकिं च धृष्टद्युम्नं च पार्षतम् ॥ ०१९ ॥

द्रौपदेयान्युधामन्युमुत्तमौजसमेव च ।
नकुलं सहदेवं च भ्रातरौ द्वौ समीक्ष्य च ॥ ०२० ॥

सहसैकरथः पार्थस्त्वामभ्येति परंतप ।
क्रोधरक्तेक्षणः क्रुद्धो जिघांसुः सर्वधन्विनाम् ॥ ०२१ ॥

त्वरितोऽभिपतत्यस्मांस्त्यक्त्वा सैन्यान्यसंशयम् ।
त्वं कर्ण प्रतियाह्येनं नास्त्यन्यो हि धनुर्धरः ॥ ०२२ ॥

न तं पश्यामि लोकेऽस्मिंस्त्वत्तोऽप्यन्यं धनुर्धरम् ।
अर्जुनं समरे क्रुद्धं यो वेलामिव धारयेत् ॥ ०२३ ॥

न चास्य रक्षां पश्यामि पृष्ठतो न च पार्श्वतः ।
एक एवाभियाति त्वां पश्य साफल्यमात्मनः ॥ ०२४ ॥

त्वं हि कृष्णौ रणे शक्तः संसाधयितुमाहवे ।
तवैष भारो राधेय प्रत्युद्याहि धनञ्जयम् ॥ ०२५ ॥

त्वं कृतो ह्येव भीष्मेण द्रोणद्रौणिकृपैरपि ।
सव्यसाचिप्रतिरथस्त्वं निवर्तय पाण्डवम् ॥ ०२६ ॥

लेलिहानं यथा सर्पं गर्जन्तमृषभं यथा ।
लयस्थितं यथा व्याघ्रं जहि कर्ण धनञ्जयम् ॥ ०२७ ॥

एते द्रवन्ति समरे धार्तराष्ट्रा महारथाः ।
अर्जुनस्य भयात्तूर्णं निरपेक्षा जनाधिपाः ॥ ०२८ ॥

द्रवतामथ तेषां तु युधि नान्योऽस्ति मानवः ।
भयहा यो भवेद्वीर त्वामृते सूतनन्दन ॥ ०२९ ॥

एते त्वां कुरवः सर्वे द्वीपमासाद्य संयुगे ।
विष्ठिताः पुरुषव्याघ्र त्वत्तः शरणकाङ्क्षिणः ॥ ०३० ॥

वैदेहाम्बष्ठकाम्बोजास्तथा नग्नजितस्त्वया ।
गान्धाराश्च यया धृत्या जिताः संख्ये सुदुर्जयाः ॥ ०३१ ॥

तां धृतिं कुरु राधेय ततः प्रत्येहि पाण्डवम् ।
वासुदेवं च वार्ष्णेयं प्रीयमाणं किरीटिना ॥ ०३२ ॥

कर्ण उवाच ॥

प्रकृतिस्थो हि मे शल्य इदानीं संमतस्तथा ।
प्रतिभासि महाबाहो विभीश्चैव धनञ्जयात् ॥ ०३३ ॥

पश्य बाह्वोर्बलं मेऽद्य शिक्षितस्य च पश्य मे ।
एकोऽद्य निहनिष्यामि पाण्डवानां महाचमूम् ॥ ०३४ ॥

कृष्णौ च पुरुषव्याघ्रौ तच्च सत्यं ब्रवीमि ते ।
नाहत्वा युधि तौ वीरावपयास्ये कथञ्चन ॥ ०३५ ॥

स्वप्स्ये वा निहतस्ताभ्यामसत्यो हि रणे जयः ।
कृतार्थो वा भविष्यामि हत्वा तावथ वा हतः ॥ ०३६ ॥

नैतादृशो जातु बभूव लोके ; रथोत्तमो यावदनुश्रुतं नः ।
तमीदृशं प्रतियोत्स्यामि पार्थं ; महाहवे पश्य च पौरुषं मे ॥ ०३७ ॥

रथे चरत्येष रथप्रवीरः ; शीघ्रैर्हयैः कौरवराजपुत्रः ।
स वाद्य मां नेष्यति कृच्छ्रमेत ;त्कर्णस्यान्तादेतदन्ताः स्थ सर्वे ॥ ०३८ ॥

अस्वेदिनौ राजपुत्रस्य हस्ता ;ववेपिनौ जातकिणौ बृहन्तौ ।
दृढायुधः कृतिमान्क्षिप्रहस्तो ; न पाण्डवेयेन समोऽस्ति योधः ॥ ०३९ ॥

गृह्णात्यनेकानपि कङ्कपत्रा ;नेकं यथा तान्क्षितिपान्प्रमथ्य ।
ते क्रोशमात्रं निपतन्त्यमोघाः ; कस्तेन योधोऽस्ति समः पृथिव्याम् ॥ ०४० ॥

अतोषयत्पाण्डवेयो हुताशं ; कृष्णाद्वितीयोऽतिरथस्तरस्वी ।

लेभे चक्रं यत्र कृष्णो महात्मा ; धनुर्गाण्डीवं पाण्डवः सव्यसाची ॥ ०४१ ॥

श्वेताश्वयुक्तं च सुघोषमग्र्यं ; रथं महाबाहुरदीनसत्त्वः ।
महेषुधी चाक्षयौ दिव्यरूपौ ; शस्त्राणि दिव्यानि च हव्यवाहात् ॥ ०४२ ॥

तथेन्द्रलोके निजघान दैत्या ;नसंख्येयान्कालकेयांश्च सर्वान् ।
लेभे शङ्खं देवदत्तं स्म तत्र ; को नाम तेनाभ्यधिकः पृथिव्याम् ॥ ०४३ ॥

महादेवं तोषयामास चैव ; साक्षात्सुयुद्धेन महानुभावः ।
लेभे ततः पाशुपतं सुघोरं ; त्रैलोक्यसंहारकरं महास्त्रम् ॥ ०४४ ॥

पृथक्पृथग्लोकपालाः समेता ; ददुर्ह्यस्त्राण्यप्रमेयाणि यस्य ।
यैस्ताञ्जघानाशु रणे नृसिंहा ;न्स कालखञ्जानसुरान्समेतान् ॥ ०४५ ॥

तथा विराटस्य पुरे समेता ;न्सर्वानस्मानेकरथेन जित्वा ।
जहार तद्गोधनमाजिमध्ये ; वस्त्राणि चादत्त महारथेभ्यः ॥ ०४६ ॥

तमीदृशं वीर्यगुणोपपन्नं ; कृष्णद्वितीयं वरये रणाय ।
अनन्तवीर्येण च केशवेन ; नारायणेनाप्रतिमेन गुप्तम् ॥ ०४७ ॥

वर्षायुतैर्यस्य गुणा न शक्या ; वक्तुं समेतैरपि सर्वलोकैः ।
महात्मनः शङ्खचक्रासिपाणे ;र्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ॥ ०४८ ॥

भयं मे वै जायते साध्वसं च ; दृष्ट्वा कृष्णावेकरथे समेतौ ॥ ०४८ ॥

उभौ हि शूरौ कृतिनौ दृढास्त्रौ ; महारथौ संहननोपपन्नौ ।
एतादृशौ फल्गुनवासुदेवौ ; कोऽन्यः प्रतीयान्मदृते नु शल्य ॥ ०४९ ॥

एतावहं युधि वा पातयिष्ये ; मां वा कृष्णौ निहनिष्यतोऽद्य ।
इति ब्रुवञ्शल्यममित्रहन्ता ; कर्णो रणे मेघ इवोन्ननाद ॥ ०५० ॥

अभ्येत्य पुत्रेण तवाभिनन्दितः ; समेत्य चोवाच कुरुप्रवीरान् ।
कृपं च भोजं च महाभुजावुभौ ; तथैव गान्धारनृपं सहानुजम्  ॥ ०५१  ॥

गुरोः सुतं चावरजं तथात्मनः ; पदातिनोऽथ द्विपसादिनोऽन्यान्  ॥ ०५१  ॥

निरुन्धताभिद्रवताच्युतार्जुनौ ; श्रमेण संयोजयताशु सर्वतः ।
यथा भवद्भिर्भृशविक्षतावुभौ ; सुखेन हन्यामहमद्य भूमिपाः  ॥ ०५२  ॥

तथेति चोक्त्वा त्वरिताः स्म तेऽर्जुनं ; जिघांसवो वीरतमाः समभ्ययुः ।
नदीनदान्भूरिजलो महार्णवो ; यथा तथा तान्समरेऽर्जुनोऽग्रसत्  ॥ ०५३  ॥

न संदधानो न तथा शरोत्तमा ;न्प्रमुञ्चमानो रिपुभिः प्रदृश्यते ।
धनञ्जयस्तस्य शरैश्च दारिता ; हताश्च पेतुर्नरवाजिकुञ्जराः  ॥ ०५४  ॥

शरार्चिषं गाण्डिवचारुमण्डलं ; युगान्तसूर्यप्रतिमानतेजसम् ।
न कौरवाः शेकुरुदीक्षितुं जयं ; यथा रविं व्याधितचक्षुषो जनाः  ॥ ०५५  ॥

तमभ्यधावद्विसृजञ्शरान्कृप ;स्तथैव भोजस्तव चात्मजः स्वयम् ।
जिघांसुभिस्तान्कुशलैः शरोत्तमा ;न्महाहवे सञ्चवितान्प्रयत्नतः  ॥ ०५६  ॥

शरैः प्रचिच्छेद च पाण्डवस्त्वर ;न्पराभिनद्वक्षसि च त्रिभिस्त्रिभिः  ॥ ०५६  ॥

स गाण्डिवाभ्यायतपूर्णमण्डल ;स्तपन्रिपूनर्जुनभास्करो बभौ ।
शरोग्ररश्मिः शुचिशुक्रमध्यगो ; यथैव सूर्यः परिवेषगस्तथा  ॥ ०५७  ॥

अथाग्र्यबाणैर्दशभिर्धनञ्जयं ; पराभिनद्द्रोणसुतोऽच्युतं त्रिभिः ।
चतुर्भिरश्वांश्चतुरः कपिं तथा ; शरैः स नाराचवरैरवाकिरत्  ॥ ०५८  ॥

तथा तु तत्तत्स्फुरदात्तकार्मुकं ; त्रिभिः शरैर्यन्तृशिरः क्षुरेण ।
हयांश्चतुर्भिश्चतुरस्त्रिभिर्ध्वजं ; धनञ्जयो द्रौणिरथान्न्यपातयत्  ॥ ०५९  ॥

स रोषपूर्णोऽशनिवज्रहाटकै ;रलङ्कृतं तक्षकभोगवर्चसम् ।
सुबन्धनं कार्मुकमन्यदाददे ; यथा महाहिप्रवरं गिरेस्तथा ॥ ०६० ॥

स्वमायुधं चोपविकीर्य भूतले ; धनुश्च कृत्वा सगुणं गुणाधिकः ।
समानयानावजितौ नरोत्तमौ ; शरोत्तमैर्द्रौणिरविध्यदन्तिकात् ॥ ०६१ ॥

कृपश्च भोजश्च तथात्मजश्च ते ; तमोनुदं वारिधरा इवापतन् ।
कृपस्य पार्थः सशरं शरासनं ; हयान्ध्वजं सारथिमेव पत्रिभिः ॥ ०६२ ॥

शरैः प्रचिच्छेद तवात्मजस्य ; ध्वजं धनुश्च प्रचकर्त नर्दतः ।
जघान चाश्वान्कृतवर्मणः शुभा ;न्ध्वजं च चिच्छेद ततः प्रतापवान् ॥ ०६३ ॥

सवाजिसूतेष्वसनान्सकेतना ;ञ्जघान नागाश्वरथांस्त्वरंश्च सः ।
ततः प्रकीर्णं सुमहद्बलं तव ; प्रदारितं सेतुरिवाम्भसा यथा ॥ ०६४ ॥

ततोऽर्जुनस्याशु रथेन केशव ;श्चकार शत्रूनपसव्यमातुरान् ॥ ०६४ ॥

ततः प्रयान्तं त्वरितं धनञ्जयं ; शतक्रतुं वृत्रनिजघ्नुषं यथा ।
समन्वधावन्पुनरुच्छ्रितैर्ध्वजै ; रथैः सुयुक्तैरपरे युयुत्सवः ॥ ०६५ ॥

अथाभिसृत्य प्रतिवार्य तानरी ;न्धनञ्जयस्याभि रथं महारथाः ।
शिखण्डिशैनेययमाः शितैः शरै ;र्विदारयन्तो व्यनदन्सुभैरवम् ॥ ०६६ ॥

ततोऽभिजघ्नुः कुपिताः परस्परं ; शरैस्तदाञ्जोगतिभिः सुतेजनैः ।
कुरुप्रवीराः सह सृञ्जयैर्यथा ;सुराः पुरा देववरैरयोधयन् ॥ ०६७ ॥

जयेप्सवः स्वर्गमनाय चोत्सुकाः ; पतन्ति नागाश्वरथाः परंतप ।
जगर्जुरुच्चैर्बलवच्च विव्यधुः ; शरैः सुमुक्तैरितरेतरं पृथक् ॥ ०६८ ॥

शरान्धकारे तु महात्मभिः कृते ; महामृधे योधवरैः परस्परम् ।

बभुर्दशाशा न दिवं च पार्थिव ; प्रभा च सूर्यस्य तमोवृताभवत् ॥ ०६९ ॥

---

# अध्याय ०५८

सञ्जय उवाच ॥

राजन्कुरूणां प्रवरैर्बलैर्भीममभिद्रुतम् ।
मज्जन्तमिव कौन्तेयमुज्जिहीर्षुर्धनञ्जयः ॥ ००१ ॥

विमृद्य सूतपुत्रस्य सेनां भारत सायकैः ।
प्राहिणोन्मृत्युलोकाय परवीरान्धनञ्जयः ॥ ००२ ॥

ततोऽस्याम्बरमावृत्य शरजालानि भागशः ।
अदृश्यन्त तथान्ये च निघ्नन्तस्तव वाहिनीम् ॥ ००३ ॥

स पक्षिसंघाचरितमाकाशं पूरयञ्शरैः ।
धनञ्जयो महाराज कुरूणामन्तकोऽभवत् ॥ ००४ ॥

ततो भल्लैः क्षुरप्रैश्च नाराचैर्निर्मलैरपि ।
गात्राणि प्राक्षिणोत्पार्थः शिरांसि च चकर्त ह ॥ ००५ ॥

छिन्नगात्रैर्विकवचैर्विशिरस्कैः समन्ततः ।
पतितैश्च पतद्भिश्च योधैरासीत्समावृतम् ॥ ००६ ॥

धनञ्जयशराभ्यस्तैः स्यन्दनाश्वनरद्विपैः ।
रणभूमिरभूद्राजन्महावैतरणी यथा ॥ ००७ ॥

ईषाचक्राक्षभङ्गैश्च व्यश्वैः साश्वैश्च युध्यताम् ।

ससूतैर्हतसूतैश्च रथैः स्तीर्णाभवन्मही ॥ ००८ ॥

सुवर्णवर्मसंनाहैर्योधैः कनकभूषणैः ।
आस्थिताः कृतवर्माणो भद्रा नित्यमदा द्विपाः ॥ ००९ ॥

क्रुद्धाः क्रुद्धैर्महामात्रैः प्रेषितार्जुनमभ्ययुः ॥ ००९ ॥

चतुःशताः शरवर्षैर्हताः पेतुः किरीटिना ।
पर्यस्तानीव शृङ्गाणि ससत्त्वानि महागिरेः ॥ ०१० ॥

धनञ्जयशराभ्यस्तैः स्तीर्णा भूर्वरवारणैः ।
अभिपेदेऽर्जुनरथो घनान्भिन्दन्निवांशुमान् ॥ ०११ ॥

हतैर्गजमनुष्याश्वैर्भग्नैश्च बहुधा रथैः ।
विशस्त्रपत्रकवचैर्युद्धशौण्डैर्गतासुभिः ॥ ०१२ ॥

अपविद्धायुधैर्मार्गः स्तीर्णोऽभूत्फल्गुनेन वै ॥ ०१२ ॥

व्यस्फूर्जयच्च गाण्डीवं सुमहद्भैरवस्वनम् ।
घोरो वज्रविनिष्पेषः स्तनयित्नोरिवाम्बरे ॥ ०१३ ॥

ततः प्रादीर्यत चमूर्धनञ्जयशराहता ।
महावातसमाविद्धा महानौरिव सागरे ॥ ०१४ ॥

नानारूपाः प्रहरणाः शरा गाण्डीवचोदिताः ।
अलातोल्काशनिप्रख्यास्तव सैन्यं विनिर्दहन् ॥ ०१५ ॥

महागिरौ वेणुवनं निशि प्रज्वलितं यथा ।
तथा तव महत्सैन्यं प्रास्फुरच्छरपीडितम् ॥ ०१६ ॥

संपिष्टदग्धविध्वस्तं तव सैन्यं किरीटिना ।

हतं प्रविहतं बाणैः सर्वतः प्रद्रुतं दिशः ॥ ०१७ ॥

महावने मृगगणा दावाग्निग्रसिता यथा ।
कुरवः पर्यवर्तन्त निर्दग्धाः सव्यसाचिना ॥ ०१८ ॥

उत्सृज्य हि महाबाहुं भीमसेनं तदा रणे ।
बलं कुरूणामुद्विग्नं सर्वमासीत्पराङ्मुखम् ॥ ०१९ ॥

ततः कुरुषु भग्नेषु बीभत्सुरपराजितः ।
भीमसेनं समासाद्य मुहूर्तं सोऽभ्यवर्तत ॥ ०२० ॥

समागम्य स भीमेन मन्त्रयित्वा च फल्गुनः ।
विशल्यमरुजं चास्मै कथयित्वा युधिष्ठिरम् ॥ ०२१ ॥

भीमसेनाभ्यनुज्ञातस्ततः प्रायाद्धनञ्जयः ।
नादयन्रथघोषेण पृथिवीं द्यां च भारत ॥ ०२२ ॥

ततः परिवृतो भीमैर्दशभिः शत्रुपुङ्गवैः ।
दुःशासनादवरजैस्तव पुत्रैर्धनञ्जयः ॥ ०२३ ॥

ते तमभ्यर्दयन्बाणैरुल्काभिरिव कुञ्जरम् ।
आततेष्वसनाः क्रूरा नृत्यन्त इव भारत ॥ ०२४ ॥

अपसव्यांस्तु तांश्चक्रे रथेन मधुसूदनः ।
ततस्ते प्राद्रवञ्शूराः पराङ्मुखरथेऽर्जुने ॥ ०२५ ॥

तेषामापततां केतून्रथांश्चापानि सायकान् ।
नाराचैरर्धचन्द्रैश्च क्षिप्रं पार्थो न्यपातयत् ॥ ०२६ ॥

अथान्यैर्दशभिर्भल्लैः शिरांस्येषां न्यपातयत् ।
रोषसंरक्तनेत्राणि संदष्टौष्ठानि भूतले ॥ ०२७ ॥

तानि वक्त्राणि विबभुर्व्योम्नि तारागणा इव ॥ ०२७ ॥

तांस्तु भल्लैर्महावेगैर्दशभिर्दश कौरवान् ।
रुक्माङ्गदान्रुक्मपुङ्खैर्विद्ध्वा प्रायादमित्रहा ॥ ०२८ ॥

---

# अध्याय ०५९

सञ्जय उवाच ॥

तं तु यान्तं महावेगैरश्वैः कपिवरध्वजम् ।
युद्धायाभ्यद्रवन्वीराः कुरूणां नवती रथाः ॥ ००१ ॥

परिवव्रुर्नरव्याघ्रा नरव्याघ्रं रणेऽर्जुनम् ॥ ००१ ॥

कृष्णः श्वेतान्महावेगानश्वान्कनकभूषणान् ।
मुक्ताजालप्रतिच्छन्नान्प्रैषीत्कर्णरथं प्रति ॥ ००२ ॥

ततः कर्णरथं यान्तमरीन्घ्नन्तं धनञ्जयम् ।
बाणवर्षैरभिघ्नन्तः संशप्तकरथा ययुः ॥ ००३ ॥

त्वरमाणांस्तु तान्सर्वान्ससूतेष्वसनध्वजान् ।
जघान नवतिं वीरानर्जुनो निशितैः शरैः ॥ ००४ ॥

तेऽपतन्त हता बाणैर्नानारूपैः किरीटिना ।
सविमाना यथा सिद्धाः स्वर्गात्पुण्यक्षये तथा ॥ ००५ ॥

ततः सरथनागाश्वाः कुरवः कुरुसत्तम ।

निर्भया भरतश्रेष्ठमभ्यवर्तन्त फल्गुनम् ॥ ००६ ॥

तदायस्तममुक्तास्त्रमुदीर्णवरवारणम् ।
पुत्राणां ते महत्सैन्यं समरौत्सीद्धनञ्जयः ॥ ००७ ॥

शक्त्यृष्टितोमरप्रासैर्गदानिस्त्रिंशसायकैः ।
प्राच्छादयन्महेष्वासाः कुरवः कुरुनन्दनम् ॥ ००८ ॥

तां कुरूणां प्रविततां शस्त्रवृष्टिं समुद्यताम् ।
व्यधमत्पाण्डवो बाणैस्तमः सूर्य इवांशुभिः ॥ ००९ ॥

ततो म्लेच्छाः स्थितैर्मत्तैस्त्रयोदशशतैर्गजैः ।
पार्श्वतोऽभ्यहनन्पार्थं तव पुत्रस्य शासनात् ॥ ०१० ॥

कर्णिनालीकनाराचैस्तोमरैः प्रासशक्तिभिः ।
कम्पनैर्भिण्डिपालैश्च रथस्थं पार्थमार्दयन् ॥ ०११ ॥

तामस्त्रवृष्टिं प्रहितां द्विपस्थैर्यवनैः स्मयन् ।
चिच्छेद निशितैर्भल्लैरर्धचन्द्रैश्च फल्गुनः ॥ ०१२ ॥

अथ तान्द्विरदान्सर्वान्नानालिङ्गैर्महाशरैः ।
सपताकान्सहारोहान्गिरीन्वज्रैरिवाभिनत् ॥ ०१३ ॥

ते हेमपुङ्खैरिषुभिराचिता हेममालिनः ।
हताः पेतुर्महानागाः साग्निज्वाला इवाद्रयः ॥ ०१४ ॥

ततो गाण्डीवनिर्घोषो महानासीद्विशां पते ।
स्तनतां कूजतां चैव मनुष्यगजवाजिनाम् ॥ ०१५ ॥

कुञ्जराश्च हता राजन्प्राद्रवंस्ते समन्ततः ।
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश ॥ ०१६ ॥

रथा हीना महाराज रथिभिर्वाजिभिस्तथा ।
गन्धर्वनगराकारा दृश्यन्ते स्म सहस्रशः ॥ ०१७ ॥

अश्वारोहा महाराज धावमानास्ततस्ततः ।
तत्र तत्रैव दृश्यन्ते पतिताः पार्थसायकैः ॥ ०१८ ॥

तस्मिन्क्षणे पाण्डवस्य बाह्वोर्बलमदृश्यत ।
यत्सादिनो वारणांश्च रथांश्चैकोऽजयद्युधि ॥ ०१९ ॥

ततस्त्र्यङ्गेण महता बलेन भरतर्षभ ।
दृष्ट्वा परिवृतं राजन्भीमसेनः किरीटिनम् ॥ ०२० ॥

हतावशेषानुत्सृज्य त्वदीयान्कतिचिद्रथान् ।
जवेनाभ्यद्रवद्राजन्धनञ्जयरथं प्रति ॥ ०२१ ॥

ततस्तत्प्राद्रवत्सैन्यं हतभूयिष्ठमातुरम् ।
दृष्ट्वा यदर्जुनं भीमो जगाम भ्रातरं प्रति ॥ ०२२ ॥

हतावशिष्टांस्तुरगानर्जुनेन महाजवान् ।
भीमो व्यधमदभ्रान्तो गदापाणिर्महाहवे ॥ ०२३ ॥

कालरात्रिमिवात्युग्रां नरनागाश्वभोजनाम् ।
प्राकाराट्टपुरद्वारदारणीमतिदारुणाम् ॥ ०२४ ॥

ततो गदां नृनागाश्वेष्वाशु भीमो व्यवासृजत् ।
सा जघान बहूनश्वानश्वारोहांश्च मारिष ॥ ०२५ ॥

कांस्यायसतनुत्रांस्तान्नरानश्वांश्च पाण्डवः ।
पोथयामास गदया सशब्दं तेऽपतन्हताः ॥ ०२६ ॥

हत्वा तु तद्गजानीकं भीमसेनो महाबलः ।
पुनः स्वरथमास्थाय पृष्ठतोऽर्जुनमन्वगात्  ॥ ०२७  ॥

हतं पराङ्मुखप्रायं निरुत्साहं परं बलम् ।
व्यालम्बत महाराज प्रायशः शस्त्रवेष्टितम्  ॥ ०२८  ॥

विलम्बमानं तत्सैन्यमप्रगल्भमवस्थितम् ।
दृष्ट्वा प्राच्छादयद्बाणैरर्जुनः प्राणतापनैः  ॥ ०२९  ॥

ततः कुरूणामभवदार्तनादो महामृधे ।
रथाश्वनागासुहरैर्वध्यतामर्जुनेषुभिः  ॥ ०३०  ॥

हाहाकृतं भृशं तस्थौ लीयमानं परस्परम् ।
अलातचक्रवत्सैन्यं तदाभ्रमत तावकम्  ॥ ०३१  ॥

आदीप्तं तव तत्सैन्यं शरैश्छिन्नतनुच्छदम् ।
आसीत्स्वशोणितक्लिन्नं फुल्लाशोकवनं यथा  ॥ ०३२  ॥

तद्दृष्ट्वा कुरवस्तत्र विक्रान्तं सव्यसाचिनः ।
निराशाः समपद्यन्त सर्वे कर्णस्य जीविते  ॥ ०३३  ॥

अविषह्यं तु पार्थस्य शरसंपातमाहवे ।
मत्वा न्यवर्तन्कुरवो जिता गाण्डीवधन्वना  ॥ ०३४  ॥

ते हित्वा समरे पार्थं वध्यमानाश्च सायकैः ।
प्रदुद्रुवुर्दिशो भीताश्चुक्रुशुश्चापि सूतजम्  ॥ ०३५  ॥

अभ्यद्रवत तान्पार्थः किरञ्शरशतान्बहून् ।
हर्षयन्पाण्डवान्योधान्भीमसेनपुरोगमान्  ॥ ०३६  ॥

पुत्रास्तु ते महाराज जग्मुः कर्णरथं प्रति ।

अगाधे मज्जतां तेषां द्वीपः कर्णोऽभवत्तदा ॥ ०३७ ॥

कुरवो हि महाराज निर्विषाः पन्नगा इव ।
कर्णमेवोपलीयन्त भयाद्गाण्डीवधन्वनः ॥ ०३८ ॥

यथा सर्वाणि भूतानि मृत्योर्भीतानि भारत ।
धर्ममेवोपलीयन्ते कर्मवन्ति हि यानि च ॥ ०३९ ॥

तथा कर्णं महेष्वासं पुत्रास्तव नराधिप ।
उपालीयन्त संत्रासात्पाण्डवस्य महात्मनः ॥ ०४० ॥

ताञ्शोणितपरिक्लिन्नान्विषमस्थाञ्शरातुरान् ।
मा भैष्टेत्यब्रवीत्कर्णो ह्यभितो मामितेति च ॥ ०४१ ॥

संभग्नं हि बलं दृष्ट्वा बलात्पार्थेन तावकम् ।
धनुर्विस्फारयन्कर्णस्तस्थौ शत्रुजिघांसया ॥ ०४२ ॥

पाञ्चालान्पुनराधावत्पश्यतः सव्यसाचिनः ॥ ०४२ ॥

ततः क्षणेन क्षितिपाः क्षतजप्रतिमेक्षणाः ।
कर्णं ववर्षुर्बाणौघैर्यथा मेघा महीधरम् ॥ ०४३ ॥

ततः शरसहस्राणि कर्णमुक्तानि मारिष ।
व्ययोजयन्त पाञ्चालान्प्राणैः प्राणभृतां वर ॥ ०४४ ॥

ततो रणो महानासीत्पाञ्चालानां विशां पते ।
वध्यतां सूतपुत्रेण मित्रार्थेऽमित्रघातिनाम् ॥ ०४५ ॥

# दुःशासनवधः

## अध्याय ०६०

सञ्जय उवाच ॥

ततः कर्णः कुरुषु प्रद्रुतेषु ; वरूथिना श्वेतहयेन राजन् ।
पाञ्चालपुत्रान्व्यधमत्सूतपुत्रो ; महेषुभिर्वात इवाभ्रसंघान् ॥ ००१ ॥

सूतं रथादञ्जलिकेन पात्य ; जघान चाश्वाञ्जनमेजयस्य ।
शतानीकं सुतसोमं च भल्लै ;रवाकिरद्धनुषी चाप्यकृन्तत् ॥ ००२ ॥

धृष्टद्युम्नं निर्बिभेदाथ षड्भि ;र्जघान चाश्वं दक्षिणं तस्य संख्ये ।
हत्वा चाश्वान्सात्यकेः सूतपुत्रः ; कैकेयपुत्रं न्यवधीद्विशोकम् ॥ ००३ ॥

तमभ्यधावन्निहते कुमारे ; कैकेयसेनापतिरुग्रधन्वा ।
शरैर्विभिन्नं भृशमुग्रवेगैः ; कर्णात्मजं सोऽभ्यहनत्सुषेणम् ॥ ००४ ॥

तस्यार्धचन्द्रैस्त्रिभिरुच्चकर्त ; प्रसह्य बाहू च शिरश्च कर्णः ।
स स्यन्दनाद्गामपतद्गतासुः ; परश्वधैः शाल इवावरुग्णः ॥ ००५ ॥

हताश्वमञ्जोगतिभिः सुषेणः ; शिनिप्रवीरं निशितैः पृषत्कैः ।
प्रच्छाद्य नृत्यन्निव सौतिपुत्रः ; शैनेयबाणाभिहतः पपात ॥ ००६ ॥

पुत्रे हते क्रोधपरीतचेताः ; कर्णः शिनीनामृषभं जिघांसुः ।
हतोऽसि शैनेय इति ब्रुवन्स ; व्यवासृजद्बाणममित्रसाहम् ॥ ००७ ॥

स तस्य चिच्छेद शरं शिखण्डी ; त्रिभिस्त्रिभिश्च प्रतुतोद कर्णम् ।
शिखण्डिनः कार्मुकं स ध्वजं च ; च्छित्त्वा शराभ्यामहनत्सुजातम् ॥ ००८ ॥

शिखण्डिनं षड्भिरविध्यदुग्रो ; दान्तो धार्ष्टद्युम्नशिरश्चकर्त ।

अथाभिनत्सुतसोमं शरेण ; स संशितेनाधिरथिर्महात्मा ॥ ००९ ॥

अथाक्रन्दे तुमुले वर्तमाने ; धार्ष्टद्युम्ने निहते तत्र कृष्णः ।
अपाञ्चाल्यं क्रियते याहि पार्थ ; कर्णं जहीत्यब्रवीद्राजसिंह ॥ ०१० ॥

ततः प्रहस्याशु नरप्रवीरो ; रथं रथेनाधिरथेर्जगाम ।
भये तेषां त्राणमिच्छन्सुबाहु ;रभ्याहतानां रथयूथपेन ॥ ०११ ॥

विस्फार्य गाण्डीवमथोग्रघोषं ; ज्यया समाहत्य तले भृशं च ।
बाणान्धकारं सहसैव कृत्वा ; जघान नागाश्वरथान्नरांश्च ॥ ०१२ ॥

तं भीमसेनोऽनु ययौ रथेन ; पृष्ठे रक्षन्पाण्डवमेकवीरम् ।
तौ राजपुत्रौ त्वरितौ रथाभ्यां ; कर्णाय यातावरिभिर्विमुक्तौ ॥ ०१३ ॥

अत्रान्तरे सुमहत्सूतपुत्र ;श्चक्रे युद्धं सोमकान्संप्रमृद्नन् ।
रथाश्वमातङ्गगणाञ्जघान ; प्रच्छादयामास दिशः शरैश्च ॥ ०१४ ॥

तमुत्तमौजा जनमेजयश्च ; क्रुद्धौ युधामन्युशिखण्डिनौ च ।
कर्णं विनेदुः सहिताः पृषत्कैः ; संमर्दमानाः सह पार्षतेन ॥ ०१५ ॥

ते पञ्च पाञ्चालरथाः सुरूपै ;र्वैकर्तनं कर्णमभिद्रवन्तः ।
तस्माद्रथाच्च्यावयितुं न शेकु ;र्धैर्यात्कृतात्मानमिवेन्द्रियाणि ॥ ०१६ ॥

तेषां धनूंषि ध्वजवाजिसूतां ;स्तूणं पताकाश्च निकृत्य बाणैः ।
तान्पञ्चभिः स त्वहनत्पृषत्कैः ; कर्णस्ततः सिंह इवोन्ननाद ॥ ०१७ ॥

तस्यास्यतस्तानभिनिघ्नतश्च ; ज्याबाणहस्तस्य धनुःस्वनेन ।
साद्रिद्रुमा स्यात्पृथिवी विशीर्णा ; इत्येव मत्वा जनता व्यषीदत् ॥ ०१८ ॥

स शक्रचापप्रतिमेन धन्वना ; भृशाततेनाधिरथिः शरान्सृजन् ।
बभौ रणे दीप्तमरीचिमण्डलो ; यथांशुमाली परिवेषवांस्तथा ॥ ०१९ ॥

शिखण्डिनं द्वादशभिः पराभिन ;च्छितैः शरैः षड्भिरथोत्तमौजसम् ।
त्रिभिर्युधामन्युमविध्यदाशुगै ;स्त्रिभिस्त्रिभिः सोमकपार्षतात्मजौ ॥ ०२० ॥

पराजिताः पञ्च महारथास्तु ते ; महाहवे सूतसुतेन मारिष ।
निरुद्यमास्तस्थुरमित्रमर्दना ; यथेन्द्रियार्थात्मवता पराजिताः ॥ ०२१ ॥

निमज्जतस्तानथ कर्णसागरे ; विपन्ननावो वणिजो यथार्णवे ।
उद्दध्रिरे नौभिरिवार्णवाद्रथैः ; सुकल्पितैर्द्रौपदिजाः स्वमातुलान् ॥ ०२२ ॥

ततः शिनीनामृषभः शितैः शरै ;र्निकृत्य कर्णप्रहितानिषून्बहून् ।
विदार्य कर्णं निशितैरयस्मयै ;स्तवात्मजं ज्येष्ठमविध्यदष्टभिः ॥ ०२३ ॥

कृपोऽथ भोजश्च तवात्मजस्तथा ; स्वयं च कर्णो निशितैरताडयत् ।
स तैश्चतुर्भिर्युयुधे यदूत्तमो ; दिगीश्वरैर्दैत्यपतिर्यथा तथा ॥ ०२४ ॥

समानतेनेष्वसनेन कूजता ; भृशाततेनामितबाणवर्षिणा ।
बभूव दुर्धर्षतरः स सात्यकिः ; शरन्नभोमध्यगतो यथा रविः ॥ ०२५ ॥

पुनः समासाद्य रथान्सुदंशिताः ; शिनिप्रवीरं जुगुपुः परंतपाः ।
समेत्य पाञ्चालरथा महारणे ; मरुद्गणाः शक्रमिवारिनिग्रहे ॥ ०२६ ॥

ततोऽभवद्युद्धमतीव दारुणं ; तवाहितानां तव सैनिकैः सह ।
रथाश्वमातङ्गविनाशनं तथा ; यथा सुराणामसुरैः पुराभवत् ॥ ०२७ ॥

रथद्विपा वाजिपदातयोऽपि वा ; भ्रमन्ति नानाविधशस्त्रवेष्टिताः ।
परस्परेणाभिहताश्च चस्खलु ;र्विनेदुरार्ता व्यसवोऽपतन्त च ॥ ०२८ ॥

तथा गते भीममभीस्तवात्मजः ; ससार राजावरजः किरञ्शरैः ।
तमभ्यधावत्त्वरितो वृकोदरो ; महारुरुं सिंह इवाभिपेतिवान् ॥ ०२९ ॥

ततस्तयोर्युद्धमतीतमानुषं ; प्रदीव्यतोः प्राणदुरोदरेऽभवत् ।
परस्परेणाभिनिविष्टरोषयो ;रुदग्रयोः शम्बरशक्रयोर्यथा ॥ ०३० ॥

शरैः शरीरान्तकरैः सुतेजनै ;र्निजघ्नतुस्ताावितरेतरं भृशम् ।
सकृत्प्रभिन्नाविव वाशितान्तरे ; महागजौ मन्मथसक्तचेतसौ ॥ ०३१ ॥

तवात्मजस्याथ वृकोदरस्त्वर ;न्धनुः क्षुराभ्यां ध्वजमेव चाच्छिनत् ।
ललाटमप्यस्य बिभेद पत्रिणा ; शिरश्च कायात्प्रजहार सारथेः ॥ ०३२ ॥

स राजपुत्रोऽन्यदवाप्य कार्मुकं ; वृकोदरं द्वादशभिः पराभिनत् ।
स्वयं नियच्छंस्तुरगानजिह्मगैः ; शरैश्च भीमं पुनरभ्यवीवृषत् ॥ ०३३ ॥

---

# अध्याय ०६१

सञ्जय उवाच ॥

तत्राकरोद्दुष्करं राजपुत्रो ; दुःशासनस्तुमुले युध्यमानः ।
चिच्छेद भीमस्य धनुः क्षुरेण ; षड्भिः शरैः सारथिमप्यविध्यत् ॥ ००१ ॥

ततोऽभिनद्बहुभिः क्षिप्रमेव ; वरेषुभिर्भीमसेनं महात्मा ।
स विक्षरन्नाग इव प्रभिन्नो ; गदामस्मै तुमुले प्राहिणोद्वै ॥ ००२ ॥

तयाहरद्दश धन्वन्तराणि ; दुःशासनं भीमसेनः प्रसह्य ।
तया हतः पतितो वेपमानो ; दुःशासनो गदया वेगवत्या ॥ ००३ ॥

हयाः ससूताश्च हता नरेन्द्र ; चूर्णीकृतश्चास्य रथः पतन्त्या ।
विध्वस्तवर्माभरणाम्बरस्र ;ग्विचेष्टमानो भृशवेदनार्तः ॥ ००४ ॥

ततः स्मृत्वा भीमसेनस्तरस्वी ; सापत्नकं यत्प्रयुक्तं सुतैस्ते ।
रथादवप्लुत्य गतः स भूमौ ; यत्नेन तस्मिन्प्रणिधाय चक्षुः ॥ ००५ ॥

असिं समुद्धृत्य शितं सुधारं ; कण्ठे समाक्रम्य च वेपमानम् ।
उत्कृत्य वक्षः पतितस्य भूमा ;वथापिबच्छोणितमस्य कोष्णम् ॥ ००६ ॥

आस्वाद्य चास्वाद्य च वीक्षमाणः ; क्रुद्धोऽतिवेलं प्रजगाद वाक्यम् ॥ ००६ ॥

स्तन्यस्य मातुर्मधुसर्पिषो वा ; माध्वीकपानस्य च सत्कृतस्य ।
दिव्यस्य वा तोयरसस्य पाना ;त्पयोदधिभ्यां मथिताच्च मुख्यात् ॥ ००७ ॥

सर्वेभ्य एवाभ्यधिको रसोऽयं ; मतो ममाद्याहितलोहितस्य ॥ ००७ ॥

एवं ब्रुवाणं पुनराद्रवन्त ;मास्वाद्य वल्गन्तमतिप्रहृष्टम् ।
ये भीमसेनं ददृशुस्तदानीं ; भयेन तेऽपि व्यथिता निपेतुः ॥ ००८ ॥

ये चापि तत्रापतिता मनुष्या ;स्तेषां करेभ्यः पतितं च शस्त्रम् ।
भयाच्च सञ्चुक्रुशुरुच्चकैस्ते ; निमीलिताक्षा ददृशुश्च तन्न ॥ ००९ ॥

ये तत्र भीमं ददृशुः समन्ता ;द्दौःशासनं तद्रुधिरं पिबन्तम् ।
सर्वे पलायन्त भयाभिपन्ना ; नायं मनुष्य इति भाषमाणाः ॥ ०१० ॥

शृण्वतां लोकवीराणामिदं वचनमब्रवीत् ।
एष ते रुधिरं कण्ठात्पिबामि पुरुषाधम ॥ ०११ ॥

ब्रूहीदानीं सुसंरब्धः पुनर्गौरिति गौरिति ॥ ०११ ॥

प्रमाणकोट्यां शयनं कालकूटस्य भोजनम् ।
दशनं चाहिभिः कष्टं दाहं च जतुवेश्मनि ॥ ०१२ ॥

द्यूतेन राज्यहरणमरण्ये वसतिश्च या ।
इष्वस्त्राणि च सङ्ग्रामेष्वसुखानि च वेश्मनि ॥ ०१३ ॥

दुःखान्येतानि जानीमो न सुखानि कदाचन ।
धृतराष्ट्रस्य दौरात्म्यात्सपुत्रस्य सदा वयम् ॥ ०१४ ॥

इत्युक्त्वा वचनं राजञ्जयं प्राप्य वृकोदरः ।
पुनराह महाराज स्मयंस्तौ केशवार्जुनौ ॥ ०१५ ॥

दुःशासने यद्रणे संश्रुतं मे ; तद्वै सर्वं कृतमद्येह वीरौ ।
अद्यैव दास्याम्यपरं द्वितीयं ; दुर्योधनं यज्ञपशुं विशस्य ॥ ०१६ ॥

शिरो मृदित्वा च पदा दुरात्मनः ; शान्तिं लप्स्ये कौरवाणां समक्षम् ॥ ०१६ ॥

एतावदुक्त्वा वचनं प्रहृष्टो ; ननाद चोच्चै रुधिरार्द्रगात्रः ।
ननर्त चैवातिबलो महात्मा ; वृत्रं निहत्येव सहस्रनेत्रः ॥ ०१७ ॥

---

# अध्याय ०६२

सञ्जय उवाच ॥

दुःशासने तु निहते पुत्रास्तव महारथाः ।
महाक्रोधविषा वीराः समरेष्वपलायिनः ॥ ००१ ॥

दश राजन्महावीर्या भीमं प्राच्छादयञ्शरैः ॥ ००१ ॥

कवची निषङ्गी पाशी दण्डधारो धनुर्धरः ।

अलोलुपः शलः संधो वातवेगसुवर्चसौ ॥ ००२ ॥

एते समेत्य सहिता भ्रातृव्यसनकर्शिताः ।
भीमसेनं महाबाहुं मार्गणैः समवारयन् ॥ ००३ ॥

स वार्यमाणो विशिखैः समन्तात्तैर्महारथैः ।
भीमः क्रोधाभिरक्ताक्षः क्रुद्धः काल इवाबभौ ॥ ००४ ॥

तांस्तु भल्लैर्महावेगैर्दशभिर्दशभिः शितैः ।
रुक्माङ्गदो रुक्मपुङ्खैः पार्थो निन्ये यमक्षयम् ॥ ००५ ॥

हतेषु तेषु वीरेषु प्रदुद्राव बलं तव ।
पश्यतः सूतपुत्रस्य पाण्डवस्य भयार्दितम् ॥ ००६ ॥

ततः कर्णो महाराज प्रविवेश महारणम् ।
दृष्ट्वा भीमस्य विक्रान्तमन्तकस्य प्रजास्विव ॥ ००७ ॥

तस्य त्वाकारभावज्ञः शल्यः समितिशोभनः ।
उवाच वचनं कर्णं प्राप्तकालमरिंदम ॥ ००८ ॥

मा व्यथां कुरु राधेय नैतत्त्वय्युपपद्यते ॥ ००८ ॥

एते द्रवन्ति राजानो भीमसेनभयार्दिताः ।
दुर्योधनश्च संमूढो भ्रातृव्यसनदुःखितः ॥ ००९ ॥

दुःशासनस्य रुधिरे पीयमाने महात्मना ।
व्यापन्नचेतसश्चैव शोकोपहतमन्यवः ॥ ०१० ॥

दुर्योधनमुपासन्ते परिवार्य समन्ततः ।
कृपप्रभृतयः कर्ण हतशेषाश्च सोदराः ॥ ०११ ॥

पाण्डवा लब्धलक्षाश्च धनञ्जयपुरोगमाः ।
त्वामेवाभिमुखाः शूरा युद्धाय समुपास्थिताः ॥ ०१२ ॥

स त्वं पुरुषशार्दूल पौरुषे महति स्थितः ।
क्षत्रधर्मं पुरस्कृत्य प्रत्युद्याहि धनञ्जयम् ॥ ०१३ ॥

भारो हि धार्तराष्ट्रेण त्वयि सर्वः समर्पितः ।
तमुद्वह महाबाहो यथाशक्ति यथाबलम् ॥ ०१४ ॥

जये स्याद्विपुला कीर्तिर्ध्रुवः स्वर्गः पराजये ॥ ०१४ ॥

वृषसेनश्च राधेय सङ्क्रुद्धस्तनयस्तव ।
त्वयि मोहसमापन्ने पाण्डवानभिधावति ॥ ०१५ ॥

एतच्छ्रुत्वा तु वचनं शल्यस्यामिततेजसः ।
हृदि मानुष्यकं भावं चक्रे युद्धाय सुस्थिरम् ॥ ०१६ ॥

ततः क्रुद्धो वृषसेनोऽभ्यधाव ;दातस्थिवांसं स्वरथं हतारिम् ।
वृकोदरं कालमिवात्तदण्डं ; गदाहस्तं पोथमानं त्वदीयान् ॥ ०१७ ॥

तमभ्यधावन्नकुलः प्रवीरो ; रोषादमित्रं प्रतुदन्पृषत्कैः ।
कर्णस्य पुत्रं समरे प्रहृष्टं ; जिष्णुर्जिघांसुर्मघवेव जम्भम् ॥ ०१८ ॥

ततो ध्वजं स्फाटिकचित्रकम्बुं ; चिच्छेद वीरो नकुलः क्षुरेण ।
कर्णात्मजस्येष्वसनं च चित्रं ; भल्लेन जाम्बूनदपट्टनद्धम् ॥ ०१९ ॥

अथान्यदादाय धनुः सुशीघ्रं ; कर्णात्मजः पाण्डवमभ्यविध्यत् ।
दिव्यैर्महास्त्रैर्नकुलं महास्त्रो ; दुःशासनस्यापचितिं यियासुः ॥ ०२० ॥

ततः क्रुद्धो नकुलस्तं महात्मा ; शरैर्महोल्काप्रतिमैरविध्यत् ।
दिव्यैरस्त्रैरभ्यविध्यच्च सोऽपि ; कर्णस्य पुत्रो नकुलं कृतास्त्रः ॥ ०२१ ॥

कर्णस्य पुत्रो नकुलस्य राज ;न्सर्वानश्वानक्षिणोदुत्तमास्त्रैः ।
वनायुजान्सुकुमारस्य शुभ्रा ;नलङ्कृताञ्जातरूपेण शीघ्रान् ॥ ०२२ ॥

ततो हताश्वादवरुह्य याना ;दादाय चर्म रुचिरं चाष्टचन्द्रम् ।
आकाशसङ्काशमसिं गृहीत्वा ; पोप्लूयमानः खगवच्चचार ॥ ०२३ ॥

ततोऽन्तरिक्षे नृवराश्वनागां ;श्चिच्छेद मार्गान्विचरन्विचित्रान् ।
ते प्रापतन्नसिना गां विशस्ता ; यथाश्वमेधे पशवः शमित्रा ॥ ०२४ ॥

द्विसाहस्रा विदिता युद्धशौण्डा ; नानादेश्याः सुभृताः सत्यसंधाः ।
एकेन शीघ्रं नकुलेन कृत्ताः ; सारेप्सुनेवोत्तमचन्दनास्ते ॥ ०२५ ॥

तमापतन्तं नकुलं सोऽभिपत्य ; समन्ततः सायकैरभ्यविध्यत् ।
स तुद्यमानो नकुलः पृषत्कै ;र्विव्याध वीरं स चुकोप विद्धः ॥ ०२६ ॥

तं कर्णपुत्रो विधमन्तमेकं ; नराश्वमातङ्गरथप्रवेकान् ।
क्रीडन्तमष्टादशभिः पृषत्कै ;र्विव्याध वीरं स चुकोप विद्धः ॥ ०२७ ॥

ततोऽभ्यधावत्समरे जिघांसुः ; कर्णात्मजं पाण्डुसुतो नृवीरः ।
तस्येषुभिर्व्यधमत्कर्णपुत्रो ; महारणे चर्म सहस्रतारम् ॥ ०२८ ॥

तस्यायसं निशितं तीक्ष्णधार ;मसिं विकोशं गुरुभारसाहम् ।
द्विषच्छरीरापहरं सुघोर ;माधुन्वतः सर्पमिवोग्ररूपम् ॥ ०२९ ॥

क्षिप्रं शरैः षड्भिरमित्रसाह ;श्चकर्त खड्गं निशितैः सुधारैः ।
पुनश्च पीतैर्निशितैः पृषत्कैः ; स्तनान्तरे गाढमथाभ्यविध्यत् ॥ ०३० ॥

स भीमसेनस्य रथं हताश्वो ; माद्रीसुतः कर्णसुताभितप्तः ।
आपुप्लुवे सिंह इवाचलाग्रं ; संप्रेक्षमाणस्य धनञ्जयस्य ॥ ०३१ ॥

नकुलमथ विदित्वा छिन्नबाणासनासिं ; विरथमरिशरार्तं कर्णपुत्रास्त्रभग्नम् ।
पवनधुतपताका ह्रादिनो वल्गिताश्वा ; वरपुरुषनियत्तास्ते रथाः शीघ्रमीयुः ॥
०३२ ॥

द्रुपदसुतवरिष्ठाः पञ्च शैनेयषष्ठा ; द्रुपददुहितृपुत्राः पञ्च चामित्रसाहाः ।
द्विरदरथनराश्वान्सूदयन्तस्त्वदीया ;न्भुजगपतिनिकाशैर्मार्गणैरात्तशस्त्राः ॥
०३३ ॥

अथ तव रथमुख्यास्तान्प्रतीयुस्त्वरन्तो ; हृदिकसुतकृपौ च द्रौणिदुर्योधनौ च ।
शकुनिशुकवृकाश्च क्राथदेवावृधौ च ; द्विरदजलदघोषैः स्यन्दनैः कार्मुकैश्च ॥
०३४ ॥

तव नरवरवर्यास्तान्दशैकं च वीरा ;न्प्रवरशरवराग्र्यैस्ताडयन्तोऽभ्यरुन्धन् ।
नवजलदसवर्णैर्हस्तिभिस्तानुदीयु ;र्गिरिशिखरनिकाशैर्भीमवेगैः कुणिन्दाः ॥
०३५ ॥

सुकल्पिता हैमवता मदोत्कटा ; रणाभिकामैः कृतिभिः समास्थिताः ।
सुवर्णजालावतता बभुर्गजा ;स्तथा यथा वै जलदाः सविद्युतः ॥ ०३६ ॥

कुणिन्दपुत्रो दशभिर्महायसैः ; कृपं ससूताश्वमपीडयद्भृशम् ।
ततः शरद्वत्सुतसायकैर्हतः ; सहैव नागेन पपात भूतले ॥ ०३७ ॥

कुणिन्दपुत्रावरजस्तु तोमरै ;र्दिवाकरांशुप्रतिमैरयस्मयैः ।
रथं च विक्षोभ्य ननाद नर्दत ;स्ततोऽस्य गान्धारपतिः शिरोऽहरत् ॥ ०३८ ॥

ततः कुणिन्देषु हतेषु तेष्वथ ; प्रहृष्टरूपास्तव ते महारथाः ।
भृशं प्रदध्मुर्लवणाम्बुसंभवा ;न्परांश्च बाणासनपाणयोऽभ्ययुः ॥ ०३९ ॥

अथाभवद्युद्धमतीव दारुणं ; पुनः कुरूणां सह पाण्डुसृञ्जयैः ।
शरासिशक्त्यृष्टिगदापरश्वधै ;र्नराश्वनागासुहरं भृशाकुलम् ॥ ०४० ॥

रथाश्वमातङ्गपदातिभिस्ततः ; परस्परं विप्रहतापतन्क्षितौ ।
यथा सविद्युत्स्तनिता बलाहकाः ; समास्थिता दिग्भ्य इवोग्रमारुतैः ॥ ०४१ ॥

ततः शतानीकहतान्महागजां ;स्तथा रथान्पत्तिगणांश्च तावकान् ।
जघान भोजश्च हयानथापत ;न्विशस्त्रकृत्ताः कृतवर्मणा द्विपाः ॥ ०४२ ॥

अथापरे द्रौणिशराहता द्विपा ;स्त्रयः ससर्वायुधयोधकेतवः ।
निपेतुरुर्व्यां व्यसवः प्रपातिता ;स्तथा यथा वज्रहता महाचलाः ॥ ०४३ ॥

कुणिन्दराजावरजादनन्तरः ; स्तनान्तरे पत्रिवरैरताडयत् ।
तवात्मजं तस्य तवात्मजः शरैः ; शितैः शरीरं बिभिदे द्विपं च तम् ॥ ०४४ ॥

स नागराजः सह राजसूनुना ; पपात रक्तं बहु सर्वतः क्षरन् ।
शचीशवज्रप्रहतोऽम्बुदागमे ; यथा जलं गैरिकपर्वतस्तथा ॥ ०४५ ॥

कुणिन्दपुत्रप्रहितोऽपरद्विपः ; शुकं ससूताश्वरथं व्यपोथयत् ।
ततोऽपतत्क्राथशराभिदारितः ; सहेश्वरो वज्रहतो यथा गिरिः ॥ ०४६ ॥

रथी द्विपस्थेन हतोऽपतच्छरैः ; क्राथाधिपः पर्वतजेन दुर्जयः ।
सवाजिसूतेष्वसनस्तथापत ;द्यथा महावातहतो महाद्रुमः ॥ ०४७ ॥

वृको द्विपस्थं गिरिराजवासिनं ; भृशं शरैर्द्वादशभिः पराभिनत् ।
ततो वृकं साश्वरथं महाजवं ; त्वरंश्चतुर्भिश्चरणे व्यपोथयत् ॥ ०४८ ॥

स नागराजः सनियन्तृकोऽपत ;त्पराहतो बभ्रुसुतेषुभिर्भृशम् ।
स चापि देवावृधसूनुरर्दितः ; पपात नुन्नः सहदेवसूनुना ॥ ०४९ ॥

विषाणपोत्रापरगात्रघातिना ; गजेन हन्तुं शकुनेः कुणिन्दजः ।
जगाम वेगेन भृशार्दयंश्च तं ; ततोऽस्य गान्धारपतिः शिरोऽहरत् ॥ ०५० ॥

ततः शतानीकहता महागजा ; हया रथाः पत्तिगणाश्च तावकाः ।
सुपर्णवातप्रहता यथा नगा ;स्तथा गता गामवशा विचूर्णिताः ॥ ०५१ ॥

ततोऽभ्यविध्यद्बहुभिः शितैः शरैः ; कुणिन्दपुत्रो नकुलात्मजं स्मयन् ।
ततोऽस्य कायान्निचकर्त नाकुलिः ; शिरः क्षुरेणाम्बुजसंनिभाननम् ॥ ०५२ ॥

ततः शतानीकमविध्यदाशुगै ;स्त्रिभिः शितैः कर्णसुतोऽर्जुनं त्रिभिः ।
त्रिभिश्च भीमं नकुलं च सप्तभि ;र्जनार्दनं द्वादशभिश्च सायकैः ॥ ०५३ ॥

तदस्य कर्मातिमनुष्यकर्मणः ; समीक्ष्य हृष्टाः कुरवोऽभ्यपूजयन् ।
पराक्रमज्ञास्तु धनञ्जयस्य ते ; हुतोऽयमग्नाविति तं तु मेनिरे ॥ ०५४ ॥

ततः किरीटी परवीरघाती ; हताश्वमालोक्य नरप्रवीरम् ।
तमभ्यधावद्वृषसेनमाहवे ; स सूतजस्य प्रमुखे स्थितं तदा ॥ ०५५ ॥

तमापतन्तं नरवीरमुग्रं ; महाहवे बाणसहस्रधारिणम् ।
अभ्यापतत्कर्णसुतो महारथो ; यथैव चेन्द्रं नमुचिः पुरातने ॥ ०५६ ॥

ततोऽद्भुतेनैकशतेन पार्थं ; शरैर्विद्ध्वा सूतपुत्रस्य पुत्रः ।
ननाद नादं सुमहानुभावो ; विद्ध्वेव शक्रं नमुचिः पुरा वै ॥ ०५७ ॥

पुनः स पार्थं वृषसेन उग्रै ;र्बाणैरविध्यद्भुजमूलमध्ये ।
तथैव कृष्णं नवभिः समार्दय ;त्पुनश्च पार्थं दशभिः शिताग्रैः ॥ ०५८ ॥

ततः किरीटी रणमूर्ध्नि कोपा ;त्कृत्वा त्रिशाखां भ्रुकुटिं ललाटे ।
मुमोच बाणान्विशिखान्महात्मा ; वधाय राजन्सूतपुत्रस्य संख्ये ॥ ०५९ ॥

विव्याध चैनं दशभिः पृषत्कै ;र्मर्मस्वसक्तं प्रसभं किरीटी ।
चिच्छेद चास्येष्वसनं भुजौ च ; क्षुरैश्चतुर्भिः शिर एव चोग्रैः ॥ ०६० ॥

स पार्थबाणाभिहतः पपात ; रथाद्विबाहुर्विशिरा धरायाम् ।
सुपुष्पितः पर्णधरोऽतिकायो ; वातेरितः शाल इवाद्रिश्रृङ्गात्  ॥ ०६१  ॥

तं प्रेक्ष्य बाणाभिहतं पतन्तं ; रथात्सुतं सूतजः क्षिप्रकारी ।
रथं रथेनाशु जगाम वेगा ;त्किरीटिनः पुत्रवधाभितप्तः  ॥ ०६२  ॥

---

# कर्णार्जुनयुद्धम्

## अध्याय ०६३

सञ्जय उवाच  ॥

वृषसेनं हतं दृष्ट्वा शोकामर्षसमन्वितः ।
मुक्त्वा शोकोद्भवं वारि नेत्राभ्यां सहसा वृषः  ॥ ००१  ॥

रथेन कर्णस्तेजस्वी जगामाभिमुखो रिपून् ।
युद्धायामर्षताम्राक्षः समाहूय धनञ्जयम्  ॥ ००२  ॥

तौ रथौ सूर्यसङ्काशौ वैयाघ्रपरिवारणौ ।
समेतौ ददृशुस्तत्र द्वाविवार्कौ समागतौ  ॥ ००३  ॥

श्वेताश्वौ पुरुषादित्यावास्थितावरिमर्दनौ ।
शुशुभाते महात्मानौ चन्द्रादित्यौ यथा दिवि  ॥ ००४  ॥

तौ दृष्ट्वा विस्मयं जग्मुः सर्वभूतानि मारिष ।
त्रैलोक्यविजये यत्ताविन्द्रवैरोचनाविव  ॥ ००५  ॥

रथज्यातलनिर्ह्रादैर्बाणशङ्खरवैरपि ।
तौ रथावभिधावन्तौ समालोक्य महीक्षिताम्  ॥ ००६  ॥

ध्वजौ च दृष्ट्वा संसक्तौ विस्मयः समपद्यत ।
हस्तिकक्ष्यां च कर्णस्य वानरं च किरीटिनः  ॥ ००७  ॥

तौ रथौ संप्रसक्तौ च दृष्ट्वा भारत पार्थिवाः ।
सिंहनादरवांश्चक्रुः साधुवादांश्च पुष्कलान्  ॥ ००८  ॥

श्रुत्वा तु द्वैरथं ताभ्यां तत्र योधाः समन्ततः ।
चक्रुर्बाहुवलं चैव तथा चेलवलं महत्  ॥ ००९  ॥

आजग्मुः कुरवस्तत्र वादित्रानुगतास्तदा ।
कर्णं प्रहर्षयन्तश्च शङ्खान्दध्मुश्च पुष्कलान्  ॥ ०१०  ॥

तथैव पाण्डवाः सर्वे हर्षयन्तो धनञ्जयम् ।
तूर्यशङ्खनिनादेन दिशः सर्वा व्यनादयन्  ॥ ०११  ॥

क्ष्वेडितास्फोटितोत्क्रुष्टैस्तुमुलं सर्वतोऽभवत् ।
बाहुघोषाश्च वीराणां कर्णार्जुनसमागमे  ॥ ०१२  ॥

तौ दृष्ट्वा पुरुषव्याघ्रौ रथस्थौ रथिनां वरौ ।
प्रगृहीतमहाचापौ शरशक्तिगदायुधौ  ॥ ०१३  ॥

वर्मिणौ बद्धनिस्त्रिंशौ श्वेताश्वौ शङ्खशोभिनौ ।
तूणीरवरसंपन्नौ द्वावपि स्म सुदर्शनौ  ॥ ०१४  ॥

रक्तचन्दनदिग्धाङ्गौ समदौ वृषभाविव ।
आशीविषसमप्रख्यौ यमकालान्तकोपमौ  ॥ ०१५  ॥

इन्द्रवृत्राविव क्रुद्धौ सूर्याचन्द्रमसप्रभौ ।

महाग्रहाविव क्रूरौ युगान्ते समुपस्थितौ ॥ ०१६ ॥

देवगर्भौ देवसमौ देवतुल्यौ च रूपतः ।
समेतौ पुरुषव्याघ्रौ प्रेक्ष्य कर्णधनञ्जयौ ॥ ०१७ ॥

उभौ वरायुधधरावुभौ रणकृतश्रमौ ।
उभौ च बाहुशब्देन नादयन्तौ नभस्तलम् ॥ ०१८ ॥

उभौ विश्रुतकर्माणौ पौरुषेण बलेन च ।
उभौ च सदृशौ युद्धे शम्बरामरराजयोः ॥ ०१९ ॥

कार्तवीर्यसमौ युद्धे तथा दाशरथेः समौ ।
विष्णुवीर्यसमौ वीर्ये तथा भवसमौ युधि ॥ ०२० ॥

उभौ श्वेतहयौ राजन्रथप्रवरवाहिनौ ।
सारथी प्रवरौ चैव तयोरास्तां महाबलौ ॥ ०२१ ॥

तौ तु दृष्ट्वा महाराज राजमानौ महारथौ ।
सिद्धचारणसंघानां विस्मयः समपद्यत ॥ ०२२ ॥

धार्तराष्ट्रास्ततः कर्णं सबला भरतर्षभ ।
परिवव्रुर्महात्मानं क्षिप्रमाहवशोभिनम् ॥ ०२३ ॥

तथैव पाण्डवा हृष्टा धृष्टद्युम्नपुरोगमाः ।
परिवव्रुर्महात्मानं पार्थमप्रतिमं युधि ॥ ०२४ ॥

तावकानां रणे कर्णो ग्लह आसीद्विशां पते ।
तथैव पाण्डवेयानां ग्लहः पार्थोऽभवद्युधि ॥ ०२५ ॥

त एव सभ्यास्तत्रासन्प्रेक्षकाश्चाभवन्स्म ते ।
तत्रैषां ग्लहमानानां ध्रुवौ जयपराजयौ ॥ ०२६ ॥

ताभ्यां द्यूतं समायत्तं विजयायेतराय वा ।
अस्माकं पण्डवानां च स्थितानां रणमूर्धनि ॥ ०२७ ॥

तौ तु स्थितौ महाराज समरे युद्धशालिनौ ।
अन्योन्यं प्रतिसंरब्धावन्योन्यस्य जयैषिणौ ॥ ०२८ ॥

तावुभौ प्रजिहीर्षेतामिन्द्रवृत्राविवाभितः ।
भीमरूपधरावास्तां महाधूमाविव ग्रहौ ॥ ०२९ ॥

ततोऽन्तरिक्षे साक्षेपा विवादा भरतर्षभ ।
मिथो भेदाश्च भूतानामासन्कर्णार्जुनान्तरे ॥ ०३० ॥

व्याश्रयन्त दिशो भिन्नाः सर्वलोकाश्च मारिष ॥ ०३० ॥

देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
प्रतिपक्षग्रहं चक्रुः कर्णार्जुनसमागमे ॥ ०३१ ॥

द्यौरासीत्कर्णतो व्यग्रा सनक्षत्रा विशां पते ।
भूमिर्विशाला पार्थस्य माता पुत्रस्य भारत ॥ ०३२ ॥

सरितः सागराश्चैव गिरयश्च नरोत्तम ।
वृक्षाश्चौषधयस्तत्र व्याश्रयन्त किरीटिनम् ॥ ०३३ ॥

असुरा यातुधानाश्च गुह्यकाश्च परंतप ।
कर्णतः समपद्यन्त खेचराणि वयांसि च ॥ ०३४ ॥

रत्नानि निधयः सर्वे वेदाश्चाख्यानपञ्चमाः ।
सोपवेदोपनिषदः सरहस्याः ससङ्ग्रहाः ॥ ०३५ ॥

वासुकिश्चित्रसेनश्च तक्षकश्चोपतक्षकः ।

पर्वताश्च तथा सर्वे काद्रवेयाश्च सान्वयाः ॥ ०३६ ॥

विषवन्तो महारोषा नागाश्चार्जुनतोऽभवन् ॥ ०३६ ॥

ऐरावताः सौरभेया वैशालेयाश्च भोगिनः ।
एतेऽभवन्नर्जुनतः क्षुद्रसर्पास्तु कर्णतः ॥ ०३७ ॥

ईहामृगा व्याडमृगा मङ्गल्याश्च मृगद्विजाः ।
पार्थस्य विजयं राजन्सर्वे एवाभिसंश्रिताः ॥ ०३८ ॥

वसवो मरुतः साध्या रुद्रा विश्वेऽश्विनौ तथा ।
अग्निरिन्द्रश्च सोमश्च पवनश्च दिशो दश ॥ ०३९ ॥

धनञ्जयमुपाजग्मुरादित्याः कर्णतोऽभवन् ॥ ०३९ ॥

देवास्तु पितृभिः सार्धं सगणार्जुनतोऽभवन् ।
यमो वैश्रवणश्चैव वरुणश्च यतोऽर्जुनः ॥ ०४० ॥

देवब्रह्मनृपर्षीणां गणाः पाण्डवतोऽभवन् ।
तुम्बुरुप्रमुखा राजन्गन्धर्वाश्च यतोऽर्जुनः ॥ ०४१ ॥

प्रावेयाः सह मौनेयैर्गन्धर्वाप्सरसां गणाः ।
ईहामृगव्याडमृगैर्द्विपाश्च रथपत्तिभिः ॥ ०४२ ॥

उह्यमानास्तथा मेघैर्वायुना च मनीषिणः ।
दिदृक्षवः समाजग्मुः कर्णार्जुनसमागमम् ॥ ०४३ ॥

देवदानवगन्धर्वा नागा यक्षाः पतत्रिणः ।
महर्षयो वेदविदः पितरश्च स्वधाभुजः ॥ ०४४ ॥

तपो विद्यास्तथौषध्यो नानारूपाम्बरत्विषः ।

अन्तरिक्षे महाराज विनदन्तोऽवतस्थिरे  ॥ ०४५  ॥

ब्रह्मा ब्रह्मर्षिभिः सार्धं प्रजापतिभिरेव च ।
भवेनावस्थितो यानं दिव्यं तं देशमभ्ययात्  ॥ ०४६  ॥

दृष्ट्वा प्रजापतिं देवाः स्वयंभुवमुपागमन् ।
समोऽस्तु देव विजय एतयोर्नरसिंहयोः  ॥ ०४७  ॥

तदुपश्रुत्य मघवा प्रणिपत्य पितामहम् ।
कर्णार्जुनविनाशेन मा नश्यत्वखिलं जगत्  ॥ ०४८  ॥

स्वयंभो ब्रूहि तद्वाक्यं समोऽस्तु विजयोऽनयोः ।
तत्तथास्तु नमस्तेऽस्तु प्रसीद भगवन्मम  ॥ ०४९  ॥

ब्रह्मेशानावथो वाक्यमूचतुस्त्रिदशेश्वरम् ।
विजयो ध्रुव एवास्तु विजयस्य महात्मनः  ॥ ०५०  ॥

मनस्वी बलवाञ्शूरः कृतास्त्रश्च तपोधनः ।
बिभर्ति च महातेजा धनुर्वेदमशेषतः  ॥ ०५१  ॥

अतिक्रमेच्च माहात्म्याद्दिष्टमेतस्य पर्ययात् ।
अतिक्रान्ते च लोकानामभावो नियतो भवेत्  ॥ ०५२  ॥

न विद्यते व्यवस्थानं कृष्णयोः क्रुद्धयोः क्वचित् ।
स्रष्टारौ ह्यसतश्चोभौ सतश्च पुरुषर्षभौ  ॥ ०५३  ॥

नरनारायणावेतौ पुराणावृषिसत्तमौ ।
अनियत्तौ नियन्तारावभीतौ स्म परंतपौ  ॥ ०५४  ॥

कर्णो लोकानयं मुख्यान्प्राप्नोतु पुरुषर्षभः ।
वीरो वैकर्तनः शूरो विजयस्त्वस्तु कृष्णयोः  ॥ ०५५  ॥

वसूनां च सलोकत्वं मरुतां वा समाप्नुयात् ।
सहितो द्रोणभीष्माभ्यां नाकलोके महीयताम्  ॥ ०५६  ॥

इत्युक्तो देवदेवाभ्यां सहस्राक्षोऽब्रवीद्वचः ।
आमन्त्र्य सर्वभूतानि ब्रह्मेशानानुशासनात्  ॥ ०५७  ॥

श्रुतं भवद्भिर्यत्प्रोक्तं भगवद्भ्यां जगद्धितम् ।
तत्तथा नान्यथा तद्धि तिष्ठध्वं गतमन्यवः  ॥ ०५८  ॥

इति श्रुत्वेन्द्रवचनं सर्वभूतानि मारिष ।
विस्मितान्यभवन्राजन्पूजयां चक्रिरे च तत्  ॥ ०५९  ॥

व्यसृजंश्च सुगन्धीनि नानारूपाणि खात्तथा ।
पुष्पवर्षाणि विबुधा देवतूर्याण्यवादयन्  ॥ ०६०  ॥

दिदृक्षवश्चाप्रतिमं द्वैरथं नरसिंहयोः ।
देवदानवगन्धर्वाः सर्व एवावतस्थिरे  ॥ ०६१  ॥

रथौ च तौ श्वेतहयौ युक्तकेतू महास्वनौ  ॥ ०६१  ॥

समागता लोकवीराः शङ्खान्दध्मुः पृथक्पृथक् ।
वासुदेवार्जुनौ वीरौ कर्णशल्यौ च भारत  ॥ ०६२  ॥

तद्भीरुसंत्रासकरं युद्धं समभवत्तदा ।
अन्योन्यस्पर्धिनोर्वीर्ये शक्रशम्बरयोरिव  ॥ ०६३  ॥

तयोर्ध्वजौ वीतमालौ शुशुभाते रथस्थितौ ।
पृथग्रूपौ समार्छन्तौ क्रोधं युद्धे परस्परम्  ॥ ०६४  ॥

कर्णस्याशीविषनिभा रत्नसारवती दृढा ।

पुरंदरधनुःप्रख्या हस्तिकक्ष्या व्यराजत ॥ ०६५ ॥

कपिश्रेष्ठस्तु पार्थस्य व्यादितास्यो भयङ्करः ।
भीषयन्नेव दंष्ट्राभिर्दुर्निरीक्ष्यो रविर्यथा ॥ ०६६ ॥

युद्धाभिलाषुको भूत्वा ध्वजो गाण्डीवधन्वनः ।
कर्णध्वजमुपातिष्ठत्सोऽवदीदभिनर्दयन् ॥ ०६७ ॥

उत्पत्य च महावेगः कक्ष्यामभ्यहनत्कपिः ।
नखैश्च दशनैश्चैव गरुडः पन्नगं यथा ॥ ०६८ ॥

सुकिङ्किणीकाभरणा कालपाशोपमायसी ।
अभ्यद्रवत्सुसङ्क्रुद्धा नागकक्ष्या महाकपिम् ॥ ०६९ ॥

उभयोरुत्तमे युद्धे द्वैरथे द्यूत आहृते ।
प्रकुर्वाते ध्वजौ युद्धं प्रत्यहेषन्हयान्हयाः ॥ ०७० ॥

अविध्यत्पुण्डरीकाक्षः शल्यं नयनसायकैः ।
स चापि पुण्डरीकाक्षं तथैवाभिसमैक्षत ॥ ०७१ ॥

तत्राजयद्वासुदेवः शल्यं नयनसायकैः ।
कर्णं चाप्यजयद्दृष्ट्या कुन्तीपुत्रो धनञ्जयः ॥ ०७२ ॥

अथाब्रवीत्सूतपुत्रः शल्यमाभाष्य सस्मितम् ।
यदि पार्थो रणे हन्यादद्य मामिह कर्हिचित् ॥ ०७३ ॥

किमुत्तरं तदा ते स्यात्सखे सत्यं ब्रवीहि मे ॥ ०७३ ॥

शल्य उवाच ॥

यदि कर्णं रणे हन्यादद्य त्वां श्वेतवाहनः ।

उभावेकरथेनाहं हन्यां माधवपाण्डवौ ॥ ०७४ ॥

सञ्जय उवाच ॥

एवमेव तु गोविंदमर्जुनः प्रत्यभाषत ।
तं प्रहस्याब्रवीत्कृष्णः पार्थं परमिदं वचः ॥ ०७५ ॥

पतेद्दिवाकरः स्थानाच्छीर्येतानेकधा क्षितिः ।
शैत्यमग्निरियान्न त्वा कर्णो हन्याद्धनञ्जयम् ॥ ०७६ ॥

यदि त्वेवं कथञ्चित्स्याल्लोकपर्यसनं यथा ।
हन्यां कर्णं तथा शल्यं बाहुभ्यामेव संयुगे ॥ ०७७ ॥

इति कृष्णवचः श्रुत्वा प्रहसन्कपिकेतनः ।
अर्जुनः प्रत्युवाचेदं कृष्णमक्लिष्टकारिणम् ॥ ०७८ ॥

ममाप्येतावपर्याप्तौ कर्णशल्यौ जनार्दन ॥ ०७८ ॥

सपताकाध्वजं कर्णं सशल्यरथवाजिनम् ।
सच्छत्रकवचं चैव सशक्तिशरकार्मुकम् ॥ ०७९ ॥

द्रष्टास्यद्य शरैः कर्णं रणे कृत्तमनेकधा ।
अद्यैनं सरथं साश्वं सशक्तिकवचायुधम् ॥ ०८० ॥

न हि मे शाम्यते वैरं कृष्णां यत्प्राहसत्पुरा ॥ ०८० ॥

अद्य द्रष्टासि गोविन्द कर्णमुन्मथितं मया ।
वारणेनेव मत्तेन पुष्पितं जगतीरुहम् ॥ ०८१ ॥

अद्य ता मधुरा वाचः श्रोतासि मधुसूदन ।
अद्याभिमन्युजननीमनृणः सान्त्वयिष्यसि ॥ ०८२ ॥

कुन्तीं पितृष्वसारं च संप्रहृष्टो जनार्दन ॥ ०८२ ॥

अद्य बाष्पमुखीं कृष्णां सान्त्वयिष्यसि माधव ।
वाग्भिश्चामृतकल्पाभिर्धर्मराजं युधिष्ठिरम् ॥ ०८३ ॥

---

# अध्याय ०६४

सञ्जय उवाच ॥

तद्देवनागासुरसिद्धसंघै ;र्गन्धर्वयक्षाप्सरसां च संघैः ।
ब्रह्मर्षिराजर्षिसुपर्णजुष्टं ; बभौ वियद्विस्मयनीयरूपम् ॥ ००१ ॥

नानद्यमानं निनदैर्मनोज्ञै ;र्वादित्रगीतस्तुतिभिश्च नृत्तैः ।
सर्वेऽन्तरिक्षे ददृशुर्मनुष्याः ; खस्थांश्च तान्विस्मयनीयरूपान् ॥ ००२ ॥

ततः प्रहृष्टाः कुरुपाण्डुयोधा ; वादित्रपत्रायुधसिंहनादैः ।
निनादयन्तो वसुधां दिशश्च ; स्वनेन सर्वे द्विषतो निजघ्नुः ॥ ००३ ॥

नानाश्वमातङ्गरथायुताकुलं ; वरासिशक्त्यृष्टिनिपातदुःसहम् ।
अभीरुजुष्टं हतदेहसङ्कुलं ; रणाजिरं लोहितरक्तमाबभौ ॥ ००४ ॥

तथा प्रवृत्तेऽस्त्रभृतां पराभवे ; धनञ्जयश्चाधिरथिश्च सायकैः ।
दिशश्च सैन्यं च शितैरजिह्मगैः ; परस्परं प्रोर्णुवतुः स्म दंशितौ ॥ ००५ ॥

ततस्त्वदीयाश्च परे च सायकैः ; कृतेऽन्धकारे विविदुर्न किञ्चन ।
भयात्तु तावेव रथौ समाश्रयं ;स्तमोनुदौ खे प्रसृता इवांशवः ॥ ००६ ॥

ततोऽस्त्रमस्त्रेण परस्परस्य तौ ; विधूय वाताविव पूर्वपश्चिमौ ।
घनान्धकारे वितते तमोनुदौ ; यथोदितौ तद्वदतीव रेजतुः ॥ ००७ ॥

न चाभिमन्तव्यमिति प्रचोदिताः ; परे त्वदीयाश्च तदावतस्थिरे ।
महारथौ तौ परिवार्य सर्वतः ; सुरासुरा वासवशम्बराविव ॥ ००८ ॥

मृदङ्गभेरीपणवानकस्वनै ;र्निनादिते भारत शङ्खनिस्वनैः ।
ससिंहनादौ बभतुर्नरोत्तमौ ; शशाङ्कसूर्याविव मेघसंप्लवे ॥ ००९ ॥

महाधनुर्मण्डलमध्यगावुभौ ; सुवर्चसौ बाणसहस्त्ररश्मिनौ ।
दिधक्षमाणौ सचराचरं जग ;द्युगास्तसूर्याविव दुःसहौ रणे ॥ ०१० ॥

उभावजेयावहितान्तकावुभौ ; जिघांसतुस्तौ कृतिनौ परस्परम् ।
महाहवे वीरवरौ समीयतु ;र्यथेन्द्रजम्भाविव कर्णपाण्डवौ ॥ ०११ ॥

ततो महास्त्राणि महाधनुर्धरौ ; विमुञ्चमानाविषुभिर्भयानकैः ।
नराश्वनागानमितौ निजघ्नतुः ; परस्परं जघ्नतुरुत्तमेषुभिः ॥ ०१२ ॥

ततो विसस्त्रुः पुनरर्दिताः शरै ;र्नरोत्तमाभ्यां कुरुपाण्डवाश्रयाः ।
सनागपत्त्यश्वरथा दिशो गता ;स्तथा यथा सिंहभयाद्वनौकसः ॥ ०१३ ॥

ततस्तु दुर्योधनभोजसौबलाः ; कृपश्च शारद्वतसूनुना सह ।
महारथाः पञ्च धनञ्जयाच्युतौ ; शरैः शरीरान्तकरैरताडयन् ॥ ०१४ ॥

धनूंषि तेषामिषुधीन्हयान्ध्वजा ;न्रथांश्च सूतांश्च धनञ्जयः शरैः ।
समं च चिच्छेद पराभिनच्च ता ;ञ्शरोत्तमैर्द्वादशभिश्च सूतजम् ॥ ०१५ ॥

अथाभ्यधावंस्त्वरिताः शतं रथाः ; शतं च नागार्जुनमाततायिनः ।
शकास्तुखारा यवनाश्च सादिनः ; सहैव काम्बोजवरैर्जिघांसवः ॥ ०१६ ॥

वरायुधान्पाणिगतान्करैः सह ; क्षुरैर्न्यकृन्तंस्त्वरिताः शिरांसि च ।
हयांश्च नागांश्च रथांश्च युध्यतां ; धनञ्जयः शत्रुगणं तमक्षिणोत् ॥ ०१७ ॥

ततोऽन्तरिक्षे सुरतूर्यनिस्वनाः ; ससाधुवादा हृषितैः समीरिताः ।
निपेतुरप्युत्तमपुष्पवृष्टयः ; सुरूपगन्धाः पवनेरिताः शिवाः ॥ ०१८ ॥

तदद्भुतं देवमनुष्यसाक्षिकं ; समीक्ष्य भूतानि विसिष्मियुर्नृप ।
तवात्मजः सूतसुतश्च न व्यथां ; न विस्मयं जग्मतुरेकनिश्चयौ ॥ ०१९ ॥

अथाब्रवीद्द्रोणसुतस्तवात्मजं ; करं करेण प्रतिपीड्य सान्त्वयन् ।
प्रसीद दुर्योधन शाम्य पाण्डवै ;रलं विरोधेन धिगस्तु विग्रहम् ॥ ०२० ॥

हतो गुरुर्ब्रह्मसमो महास्त्रवि ;त्तथैव भीष्मप्रमुखा नरर्षभाः ।
अहं त्ववध्यो मम चापि मातुलः ; प्रशाधि राज्यं सह पाण्डवैश्चिरम् ॥ ०२१ ॥

धनञ्जयः स्थास्यति वारितो मया ; जनार्दनो नैव विरोधमिच्छति ।
युधिष्ठिरो भूतहिते सदा रतो ; वृकोदरस्तद्वशगस्तथा यमौ ॥ ०२२ ॥

त्वया च पार्थैश्च परस्परेण ; प्रजाः शिवं प्राप्नुयुरिच्छति त्वयि ।
व्रजन्तु शेषाः स्वपुराणि पार्थिवा ; निवृत्तवैराश्च भवन्तु सैनिकाः ॥ ०२३ ॥

न चेद्वचः श्रोष्यसि मे नराधिप ; ध्रुवं प्रतप्तासि हतोऽरिभिर्युधि ।
इदं च दृष्टं जगता सह त्वया ; कृतं यदेकेन किरीटमालिना ॥ ०२४ ॥

यथा न कुर्याद्बलभिन्न चान्तको ; न च प्रचेता भगवान्न यक्षराट् ॥ ०२४ ॥

अतोऽपि भूयांश्च गुणैर्धनञ्जयः ; स चाभिपत्स्यत्यखिलं वचो मम ।
तवानुयात्रां च तथा करिष्यति ; प्रसीद राजञ्जगतः शमाय वै ॥ ०२५ ॥

ममापि मानः परमः सदा त्वयि ; ब्रवीम्यतस्त्वां परमाच्च सौहृदात् ।
निवारयिष्यामि हि कर्णमप्यहं ; यदा भवान्सप्रणयो भविष्यति ॥ ०२६ ॥

वदन्ति मित्रं सहजं विचक्षणा ;स्तथैव साम्ना च धनेन चार्जितम् ।
प्रतापतश्चोपनतं चतुर्विधं ; तदस्ति सर्वं त्वयि पाण्डवेषु च ॥ ०२७ ॥

निसर्गतस्ते तव वीर बान्धवाः ; पुनश्च साम्ना च समाप्नुहि स्थिरम् ।
त्वयि प्रसन्ने यदि मित्रतामियु ;र्ध्रुवं नरेन्द्रेन्द्र तथा त्वमाचर ॥ ०२८ ॥

स एवमुक्तः सुहृदा वचो हितं ; विचिन्त्य निःश्वस्य च दुर्मनाब्रवीत् ।
यथा भवानाह सखे तथैव त ;न्ममापि च ज्ञापयतो वचः शृणु ॥ ०२९ ॥

निहत्य दुःशासनमुक्तवान्बहु ; प्रसह्य शार्दूलवदेष दुर्मतिः ।
वृकोदरस्तद्धृदये मम स्थितं ; न तत्परोक्षं भवतः कुतः शमः ॥ ०३० ॥

न चापि कर्णं गुरुपुत्र संस्तवा ;दुपारमेत्यर्हसि वक्तुमच्युत ।
श्रमेण युक्तो महताद्य फल्गुन ;स्तमेष कर्णः प्रसभं हनिष्यति ॥ ०३१ ॥

तमेवमुक्त्वाभ्यनुनीय चासकृ ;त्तवात्मजः स्वाननुशास्ति सैनिकान् ।
समाघ्नताभिद्रवताहितानिमा ;न्सबाणशब्दान्किमु जोषमास्यते ॥ ०३२ ॥

---

# अध्याय ०६५

सञ्जय उवाच ॥

तौ शङ्खभेरीनिनदे समृद्धे ; समीयतुः श्वेतहयौ नराग्र्यौ ।
वैकर्तनः सूतपुत्रोऽर्जुनश्च ; दुर्मन्त्रिते तव पुत्रस्य राजन् ॥ ००१ ॥

यथा गजौ हैमवतौ प्रभिन्नौ ; प्रगृह्य दन्ताविव वाशितार्थे ।
तथा समाजग्मतुरुग्रवेगौ ; धनञ्जयश्चाधिरथिश्च वीरौ ॥ ००२ ॥

बलाहकेनेव यथा बलाहको ; यदृच्छया वा गिरिणा गिरिर्यथा ।
तथा धनुर्ज्यातलनेमिनिस्वनौ ; समीयतुस्ताविषुवर्षवर्षिणौ ॥ ००३ ॥

प्रवृद्धशृङ्गद्रुमवीरुदोषधी ; प्रवृद्धनानाविधपर्वतौकसौ ।
यथाचलौ वा गलितौ महाबलौ ; तथा महास्त्रैरितरेतरं घ्नतः ॥ ००४ ॥

स संनिपातस्तु तयोर्महानभू ;त्सुरेशवैरोचनयोर्यथा पुरा ।
शरैर्विभुग्नाङ्गनियन्तृवाहनः ; सुदुःसहोऽन्यैः पटुशोणितोदकः ॥ ००५ ॥

प्रभूतपद्मोत्पलमत्स्यकच्छपौ ; महाह्रदौ पक्षिगणानुनादितौ ।
सुसंनिकृष्टावनिलोद्धतौ यथा ; तथा रथौ तौ ध्वजिनौ समीयतुः ॥ ००६ ॥

उभौ महेन्द्रस्य समानविक्रमा ;वुभौ महेन्द्रप्रतिमौ महारथौ ।
महेन्द्रवज्रप्रतिमैश्च सायकै ;र्महेन्द्रवृत्राविव संप्रजह्रतुः ॥ ००७ ॥

सनागपत्त्यश्वरथे उभे बले ; विचित्रवर्णाभरणाम्बरस्रजे ।
चकम्पतुश्चोन्नमतः स्म विस्मया ;द्वियद्गताश्चार्जुनकर्णसंयुगे ॥ ००८ ॥

भुजाः सवज्राङ्गुलयः समुच्छ्रिताः ; ससिंहनादा हृषितैर्दिदृक्षुभिः ।
यदार्जुनं मत्तमिव द्विपो द्विपं ; समभ्ययादाधिरथिर्जिघांसया ॥ ००९ ॥

अभ्यक्रोशन्सोमकास्तत्र पार्थं ; त्वरस्व याह्यर्जुन विध्य कर्णम् ।
छिन्ध्यस्य मूर्धानमलं चिरेण ; श्रद्धां च राज्याद्धृतराष्ट्रसूनोः ॥ ०१० ॥

तथास्माकं बहवस्तत्र योधाः ; कर्णं तदा याहि याहीत्यवोचन् ।
जह्यर्जुनं कर्ण ततः सचीराः ; पुनर्वनं यान्तु चिराय पार्थाः ॥ ०११ ॥

ततः कर्णः प्रथमं तत्र पार्थं ; महेषुभिर्दशभिः पर्यविध्यत् ।
तमर्जुनः प्रत्यविध्यच्छिताग्रैः ; कक्षान्तरे दशभिरतीव क्रुद्धः ॥ ०१२ ॥

परस्परं तौ विशिखैः सुतीक्ष्णै ;स्ततक्षतुः सूतपुत्रोऽर्जुनश्च ।
परस्परस्यान्तरेप्सू विमर्दे ; सुभीममभ्याययतुः प्रहृष्टौ ॥ ०१३ ॥

अमृष्यमाणश्च महाविमर्दे ; तत्राक्रुध्यद्भीमसेनो महात्मा ।
अथाब्रवीत्पाणिना पाणिमाघ्न ;न्संदष्टौष्ठो नृत्यति वादयन्निव ॥ ०१४ ॥

कथं नु त्वां सूतपुत्रः किरीटि ;न्महेषुभिर्दशभिरविध्यदग्रे ॥ ०१४ ॥

यया धृत्या सर्वभूतान्यजैषी ;र्ग्रासं ददद्वह्नये खाण्डवे त्वम् ।
तया धृत्या सूतपुत्रं जहि त्व ;महं वैनं गदया पोथयिष्ये ॥ ०१५ ॥

अथाब्रवीद्वासुदेवोऽपि पार्थं ; दृष्ट्वा रथेषून्प्रतिहन्यमानान् ।
अमीमृदत्सर्वथा तेऽद्य कर्णो ; ह्यस्त्रैरस्त्राणि किमिदं किरीटिन् ॥ ०१६ ॥

स वीर किं मुह्यसि नावधीयसे ; नदन्त्येते कुरवः संप्रहृष्टाः ।
कर्णं पुरस्कृत्य विदुर्हि सर्वे ; त्वदस्त्रमस्त्रैर्विनिपात्यमानम् ॥ ०१७ ॥

यया धृत्या निहतं तामसास्त्रं ; युगे युगे राक्षसाश्चापि घोराः ।
दम्भोद्भवाश्चासुराश्चाहवेषु ; तया धृत्या त्वं जहि सूतपुत्रम् ॥ ०१८ ॥

अनेन वास्य क्षुरनेमिनाद्य ; संछिन्द्धि मूर्धानमरेः प्रसह्य ।
मया निसृष्टेन सुदर्शनेन ; वज्रेण शक्रो नमुचेरिवारेः ॥ ०१९ ॥

किरातरूपी भगवान्यया च ; त्वया महत्या परितोषितोऽभूत् ।
तां त्वं धृतिं वीर पुनर्गृहीत्वा ; सहानुबन्धं जहि सूतपुत्रम् ॥ ०२० ॥

ततो महीं सागरमेखलां त्वं ; सपत्तनां ग्रामवतीं समृद्धाम् ।
प्रयच्छ राज्ञे निहतारिसंघां ; यशश्च पार्थातुलमाप्नुहि त्वम् ॥ ०२१ ॥

सञ्चोदितो भीमजनार्दनाभ्यां ; स्मृत्वा तदात्मानमवेक्ष्य सत्त्वम् ।
महात्मनश्चागमने विदित्वा ; प्रयोजनं केशवमित्युवाच ॥ ०२२ ॥

प्रादुष्करोम्येष महास्त्रमुग्रं ; शिवाय लोकस्य वधाय सौतेः ।
तन्मेऽनुजानातु भवान्सुराश्च ; ब्रह्मा भवो ब्रह्मविदश्च सर्वे ॥ ०२३ ॥

इत्यूचिवान्ब्राह्ममसह्यमस्त्रं ; प्रादुश्चक्रे मनसा संविधेयम् ।
ततो दिशश्च प्रदिशश्च सर्वाः ; समावृणोत्सायकैर्भूरितेजाः ॥ ०२४ ॥

ससर्ज बाणान्भरतर्षभोऽपि ; शतंशतानेकवदाशुवेगान् ॥ ०२४ ॥

वैकर्तनेनापि तथाजिमध्ये ; सहस्रशो बाणगणा विसृष्टाः ।
ते घोषिणः पाण्डवमभ्युपेयुः ; पर्जन्यमुक्ता इव वारिधाराः ॥ ०२५ ॥

स भीमसेनं च जनार्दनं च ; किरीटिनं चाप्यमनुष्यकर्मा ।
त्रिभिस्त्रिभिर्भीमबलो निहत्य ; ननाद घोरं महता स्वरेण ॥ ०२६ ॥

स कर्णबाणाभिहतः किरीटी ; भीमं तथा प्रेक्ष्य जनार्दनं च ।
अमृष्यमाणः पुनरेव पार्थः ; शरान्दशाष्टौ च समुद्बबर्ह ॥ ०२७ ॥

सुषेणमेकेन शरेण विद्ध्वा ; शल्यं चतुर्भिस्त्रिभिरेव कर्णम् ।
ततः सुमुक्तैर्दशभिर्जघान ; सभापतिं काञ्चनवर्मनद्धम् ॥ ०२८ ॥

स राजपुत्रो विशिरा विबाहु ;र्विवाजिसूतो विधनुर्विकेतुः ।
ततो रथाग्रादपतत्प्रभग्नः ; परश्वधैः शाल इवाभिकृत्तः ॥ ०२९ ॥

पुनश्च कर्णं त्रिभिरष्टभिश्च ; द्वाभ्यां चतुर्भिर्दशभिश्च विद्ध्वा ।
चतुःशतान्द्विरदान्सायुधीया ;न्हत्वा रथानष्टशतं जघान ॥ ०३० ॥

सहस्रमश्वांश्च पुनश्च सादी ;नष्टौ सहस्राणि च पत्तिवीरान् ॥ ०३० ॥

दृष्ट्वाजिमुख्यावथ युध्यमानौ ; दिदृक्षवः शूरवरावरिघ्नौ ।
कर्णं च पार्थं च नियम्य वाहा ;न्खस्था महीस्थाश्च जनावतस्थुः ॥ ०३१ ॥

ततो धनुर्ज्या सहसातिकृष्टा ; सुघोषमाच्छिद्यत पाण्डवस्य ।
तस्मिन्क्षणे सूतपुत्रस्तु पार्थं ; समाचिनोत्क्षुद्रकाणां शतेन ॥ ०३२ ॥

निर्मुक्तसर्पप्रतिमैश्च तीक्ष्णै ;स्तैलप्रधौतैः खगपत्रवाजैः ।
षष्ट्या नाराचैर्वासुदेवं बिभेद ; तदन्तरं सोमकाः प्राद्रवन्त ॥ ०३३ ॥

ततो धनुर्ज्यामवधम्य शीघ्रं ; शरानस्तानाधिरथेर्विधम्य ।
सुसंरब्धः कर्णशरक्षताङ्गो ; रणे पार्थः सोमकान्प्रत्यगृह्णात् ॥ ०३४ ॥

न पक्षिणः संपतन्त्यन्तरिक्षे ; क्षेपीयसास्त्रेण कृतेऽन्धकारे ॥ ०३४ ॥

शल्यं च पार्थो दशभिः पृषत्कै ;र्भृशं तनुत्रे प्रहसन्नविध्यत् ।
ततः कर्णं द्वादशभिः सुमुक्तै ;र्विद्धा पुनः सप्तभिरभ्यविध्यत् ॥ ०३५ ॥

स पार्थबाणासनवेगनुन्नै ;र्दृढाहतः पत्रिभिरुग्रवेगैः ।
विभिन्नगात्रः क्षतजोक्षिताङ्गः ; कर्णो बभौ रुद्र इवाततेषुः ॥ ०३६ ॥

ततस्त्रिभिश्च त्रिदशाधिपोपमं ; शरैर्बिभेदाधिरथिर्धनञ्जयम् ।
शरांस्तु पञ्च ज्वलितानिवोरगा ;न्प्रवीरयामास जिघांसुरच्युते ॥ ०३७ ॥

ते वर्म भित्त्वा पुरुषोत्तमस्य ; सुवर्णचित्रं न्यपतन्सुमुक्ताः ।
वेगेन गामाविविशुः सुवेगाः ; स्नात्वा च कर्णाभिमुखाः प्रतीयुः ॥ ०३८ ॥

तान्पञ्चभल्लैस्त्वरितैः सुमुक्तै ;स्त्रिधा त्रिधैकैकमथोच्चकर्त ।
धनञ्जयस्ते न्यपतन्पृथिव्यां ; महाहयस्तक्षकपुत्रपक्षाः ॥ ०३९ ॥

ततः प्रजज्वाल किरीटमाली ; क्रोधेन कक्षं प्रदहन्निवाग्निः ।
स कर्णमाकर्णविकृष्टसृष्टैः ; शरैः शरीरान्तकरैर्ज्वलद्भिः ॥ ०४० ॥

मर्मस्वविध्यत्स चचाल दुःखा ;द्धैर्यात्तु तस्थावतिमात्रधैर्यः ॥ ०४० ॥

ततः शरौघैः प्रदिशो दिशश्च ; रविप्रभा कर्णरथश्च राजन् ।
अदृश्य आसीत्कुपिते धनञ्जये ; तुषारनीहारवृतं यथा नभः ॥ ०४१ ॥

स चक्ररक्षानथ पादरक्षा ;न्पुरःसरान्पृष्ठगोपांश्च सर्वान् ।
दुर्योधनेनानुमतानरिघ्ना ;न्समुच्चितान्सुरथान्सारभूतान् ॥ ०४२ ॥

द्विसाहस्रान्समरे सव्यसाची ; कुरुप्रवीरानृषभः कुरूणाम् ।
क्षणेन सर्वान्सरथाश्वसूता ;न्निनाय राजन्क्षयमेकवीरः ॥ ०४३ ॥

अथापलायन्त विहाय कर्णं ; तवात्मजाः कुरवश्चावशिष्टाः ।
हतानवाकीर्य शरक्षतांश्च ; लालप्यमानांस्तनयान्पितॄंश्च ॥ ०४४ ॥

स सर्वतः प्रेक्ष्य दिशो विशून्या ; भयावदीर्णैः कुरुभिर्विहीनः ।
न विव्यथे भारत तत्र कर्णः ; प्रतीपमेवार्जुनमभ्यधावत् ॥ ०४५ ॥

---

# अध्याय ०६६

सञ्जय उवाच ॥

ततोऽपयाताः शरपातमात्र ;मवस्थिताः कुरवो भिन्नसेनाः ।
विद्युत्प्रकाशं ददृशुः समन्ता ;द्धनञ्जयास्त्रं समुदीर्यमाणम् ॥ ००१ ॥

तदर्जुनास्त्रं ग्रसते स्म वीरा ;न्वियत्तथाकाशमनन्तघोषम् ।
क्रुद्धेन पार्थेन तदाशु सृष्टं ; वधाय कर्णस्य महाविमर्दे ॥ ००२ ॥

रामादुपात्तेन महामहिम्ना ; आथर्वणेनारिविनाशनेन ।

तदर्जुनास्त्रं व्यधमद्दहन्तं ; पार्थं च बाणैर्निशितैर्निजघ्ने ॥ ००३ ॥

ततो विमर्दः सुमहान्बभूव ; तस्यार्जुनस्याधिरथेश्च राजन् ।
अन्योन्यमासादयतोः पृषत्कै ;र्विषाणघातैर्द्विपयोरिवोग्रैः ॥ ००४ ॥

ततो रिपुघ्नं समधत्त कर्णः ; सुसंशितं सर्पमुखं ज्वलन्तम् ।
रौद्रं शरं संयति सुप्रधौतं ; पार्थार्थमत्यर्थचिराय गुप्तम् ॥ ००५ ॥

सदार्चितं चन्दनचूर्णशायिनं ; सुवर्णनालीशयनं महाविषम् ।
प्रदीप्तमैरावतवंशसंभवं ; शिरो जिहीर्षुर्युधि फल्गुनस्य ॥ ००६ ॥

तमब्रवीन्मद्रराजो महात्मा ; वैकर्तनं प्रेक्ष्य हि संहितेषुम् ।
न कर्ण ग्रीवामिषुरेष प्राप्स्यते ; संलक्ष्य संधत्स्व शरं शिरोघ्नम् ॥ ००७ ॥

अथाब्रवीत्क्रोधसंरक्तनेत्रः ; कर्णः शल्यं संधितेषुः प्रसह्य ।
न संधत्ते द्विः शरं शल्य कर्णो ; न मादृशाः शाठ्ययुक्ता भवन्ति ॥ ००८ ॥

तथैवमुक्त्वा विससर्ज तं शरं ; बलाहकं वर्षघनाभिपूजितम् ।
हतोऽसि वै फल्गुन इत्यवोच ;त्ततस्त्वरन्नूर्जितमुत्ससर्ज ॥ ००९ ॥

संधीयमानं भुजगं दृष्ट्वा कर्णेन माधवः ।
आक्रम्य स्यन्दनं पद्भ्यां बलेन बलिनां वरः ॥ ०१० ॥

अवगाढे रथे भूमौ जानुभ्यामगमन्हयाः ।
ततः शरः सोऽभ्यहनत्किरीटं तस्य धीमतः ॥ ०११ ॥

अथार्जुनस्योत्तमगात्रभूषणं ; धरावियद्द्योसलिलेषु विश्रुतम् ।
बलास्त्रसर्गोत्तमयत्नमन्युभिः ; शरेण मूर्ध्नः स जहार सूतजः ॥ ०१२ ॥

दिवाकरेन्दुज्वलनग्रहत्विषं ; सुवर्णमुक्तामणिजालभूषितम् ।
पुरंदरार्थं तपसा प्रयत्नतः ; स्वयं कृतं यद्भुवनस्य सूनुना ॥ ०१३ ॥

महार्हरूपं द्विषतां भयङ्करं ; विभाति चात्यर्थसुखं सुगन्धि तत् ।
निजघ्नुषे देवरिपून्सुरेश्वरः ; स्वयं ददौ यत्सुमनाः किरीटिने ॥ ०१४ ॥

हराम्बुपाखण्डलवित्तगोप्तृभिः ; पिनाकपाशाशनिसायकोत्तमैः ।
सुरोत्तमैरप्यविषह्यमर्दितुं ; प्रसह्य नागेन जहार यद्वृषः ॥ ०१५ ॥

तदुत्तमेषून्मथितं विषाग्निना ; प्रदीप्तमर्चिष्मदभिक्षिति प्रियम् ।
पपात पार्थस्य किरीटमुत्तमं ; दिवाकरोऽस्तादिव पर्वताज्ज्वलन् ॥ ०१६ ॥

ततः किरीटं बहुरत्नमण्डितं ; जहार नागोऽर्जुनमूर्धतो बलात् ।
गिरेः सुजाताङ्कुरपुष्पितद्रुमं ; महेन्द्रवज्रः शिखरं यथोत्तमम् ॥ ०१७ ॥

मही वियद्द्यौः सलिलानि वायुना ; यथा विभिन्नानि विभान्ति भारत ।
तथैव शब्दो भुवनेष्वभूत्तदा ; जना व्यवस्यन्व्यथिताश्च चस्खलुः ॥ ०१८ ॥

ततः समुद्ग्रथ्य सितेन वाससा ; स्वमूर्धजानव्यथितः स्थितोऽर्जुनः ।
विभाति संपूर्णमरीचिभास्वता ; शिरोगतेनोदयपर्वतो यथा ॥ ०१९ ॥

बलाहकः कर्णभुजेरितस्ततो ; हुताशनार्कप्रतिमद्युतिर्महान् ।
महोरगः कृतवैरोऽर्जुनेन ; किरीटमासाद्य समुत्पपात ॥ ०२० ॥

तमब्रवीद्विद्धि कृतागसं मे ; कृष्णाद्य मातुर्वधजातवैरम् ।
ततः कृष्णः पार्थमुवाच संख्ये ; महोरगं कृतवैरं जहि त्वम् ॥ ०२१ ॥

स एवमुक्तो मधुसूदनेन ; गाण्डीवधन्वा रिपुषूग्रधन्वा ।
उवाच को न्वेष ममाद्य नागः ; स्वयं य आगाद्गरुडस्य वक्त्रम् ॥ ०२२ ॥

कृष्ण उवाच ॥

योऽसौ त्वया खाण्डवे चित्रभानुं ; संतर्पयानेन धनुर्धरेण ।

वियद्गतो बाणनिकृत्तदेहो ; ह्यनेकरूपो निहतास्य माता ॥ ०२३ ॥

ततस्तु जिष्णुः परिहृत्य शेषां ;श्चिच्छेद षड्भिर्निशितैः सुधारैः ।
नागं वियत्तिर्यगिवोत्पतन्तं ; स छिन्नगात्रो निपपात भूमौ ॥ ०२४ ॥

तस्मिन्मुहूर्ते दशभिः पृषत्कैः ; शिलाशितैर्बर्हिणवाजितैश्च ।
विव्याध कर्णः पुरुषप्रवीरं ; धनञ्जयं तिर्यगवेक्षमाणम् ॥ ०२५ ॥

ततोऽर्जुनो द्वादशभिर्विमुक्तै ;राकर्णमुक्तैर्निशितैः समर्प्य ।
नाराचमाशीविषतुल्यवेग ;माकर्णपूर्णायतमुत्ससर्ज ॥ ०२६ ॥

स चित्रवर्मेषुवरो विदार्य ; प्राणान्निरस्यन्निव साधु मुक्तः ।
कर्णस्य पीत्वा रुधिरं विवेश ; वसुंधरां शोणितवाजदिग्धः ॥ ०२७ ॥

ततो वृषो बाणनिपातकोपितो ; महोरगो दण्डविघट्टितो यथा ।
तथाशुकारी व्यसृजच्छरोत्तमा ;न्महाविषः सर्प इवोत्तमं विषम् ॥ ०२८ ॥

जनार्दनं द्वादशभिः पराभिन ;न्नवैर्नवत्या च शरैस्तथार्जुनम् ।
शरेण घोरेण पुनश्च पाण्डवं ; विभिद्य कर्णोऽभ्यनदज्जहास च ॥ ०२९ ॥

तमस्य हर्षं ममृषे न पाण्डवो ; बिभेद मर्माणि ततोऽस्य मर्मवित् ।
परं शरैः पत्रिभिरिन्द्रविक्रम ;स्तथा यथेन्द्रो बलमोजसाहनत् ॥ ०३० ॥

ततः शराणां नवतीर्नवार्जुनः ; ससर्ज कर्णेऽन्तकदण्डसंनिभाः ।
शरैर्भृशायस्ततनुः प्रविव्यथे ; तथा यथा वज्रविदारितोऽचलः ॥ ०३१ ॥

मणिप्रवेकोत्तमवज्रहाटकै ;रलङ्कृतं चास्य वराङ्गभूषणम् ।
प्रविद्धमुर्व्यां निपपात पत्रिभि ;र्धनञ्जयेनोत्तमकुण्डलेऽपि च ॥ ०३२ ॥

महाधनं शिल्पिवरैः प्रयत्नतः ; कृतं यदस्योत्तमवर्म भास्वरम् ।
सुदीर्घकालेन तदस्य पाण्डवः ; क्षणेन बाणैर्बहुधा व्यशातयत् ॥ ०३३ ॥

स तं विवर्माणमथोत्तमेषुभिः ; शरैश्चतुर्भिः कुपितः पराभिनत् ।
स विव्यथेऽत्यर्थमरिप्रहारितो ; यथातुरः पित्तकफानिलव्रणैः ॥ ०३४ ॥

महाधनुर्मण्डलनिःसृतैः शितैः ; क्रियाप्रयत्नप्रहितैर्बलेन च ।
ततक्ष कर्णं बहुभिः शरोत्तमै ;र्बिभेद मर्मस्वपि चार्जुनस्त्वरन् ॥ ०३५ ॥

दृढाहतः पत्रिभिरुग्रवेगैः ; पार्थेन कर्णो विविधैः शिताग्रैः ।
बभौ गिरिर्गैरिकधातुरक्तः ; क्षरन्प्रपातैरिव रक्तमम्भः ॥ ०३६ ॥

साश्वं तु कर्णं सरथं किरीटी ; समाचिनोद्भारत वत्सदन्तैः ।
प्रच्छादयामास दिशश्च बाणैः ; सर्वप्रयत्नात्तपनीयपुङ्खैः ॥ ०३७ ॥

स वत्सदन्तैः पृथुपीनवक्षाः ; समाचितः स्माधिरथिर्विभाति ।
सुपुष्पिताशोकपलाशशाल्मलि ;र्यथाचलः स्पन्दनचन्दनायुतः ॥ ०३८ ॥

शरैः शरीरे बहुधा समर्पितै ;र्विभाति कर्णः समरे विशां पते ।
महीरुहैराचितसानुकन्दरो ; यथा महेन्द्रः शुभकर्णिकारवान् ॥ ०३९ ॥

स बाणसंघान्धनुषा व्यवासृज ;न्विभाति कर्णः शरजालरश्मिवान् ।
सलोहितो रक्तगभस्तिमण्डलो ; दिवाकरोऽस्ताभिमुखो यथा तथा ॥ ०४० ॥

बाह्वन्तरादाधिरथेर्विमुक्ता ;न्बाणान्महाहीनिव दीप्यमानान् ।
व्यध्वंसयन्नर्जुनबाहुमुक्ताः ; शराः समासाद्य दिशः शिताग्राः ॥ ०४१ ॥

ततश्चक्रमपतत्तस्य भूमौ ; स विह्वलः समरे सूतपुत्रः ।
घूर्णे रथे ब्राह्मणस्याभिशापा ;द्रामादुपात्तेऽप्रतिभाति चास्त्रे ॥ ०४२ ॥

अमृष्यमाणो व्यसनानि तानि ; हस्तौ विधुन्वन्स विगर्हमाणः ।
धर्मप्रधानानभिपाति धर्म ; इत्यब्रुवन्धर्मविदः सदैव ॥ ०४३ ॥

ममापि निम्नोऽद्य न पाति भक्ता ;न्मन्ये न नित्यं परिपाति धर्मः ॥ ०४३ ॥

एवं ब्रुवन्प्रस्खलिताश्वसूतो ; विचाल्यमानोऽर्जुनशस्त्रपातैः ।
मर्माभिघाताच्चलितः क्रियासु ; पुनः पुनर्धर्ममगर्हदाजौ ॥ ०४४ ॥

ततः शरैर्भीमतरैरविध्यत्त्रिभिराहवे ।
हस्ते कर्णस्तदा पार्थमभ्यविध्यच्च सप्तभिः ॥ ०४५ ॥

ततोऽर्जुनः सप्तदश तिग्मतेजानजिह्मगान् ।
इन्द्राशनिसमान्घोरानसृजत्पावकोपमान् ॥ ०४६ ॥

निर्भिद्य ते भीमवेगा न्यपतन्पृथिवीतले ।
कम्पितात्मा तथा कर्णः शक्त्या चेष्टामदर्शयत् ॥ ०४७ ॥

बलेनाथ स संस्तभ्य ब्रह्मास्त्रं समुदैरयत् ।
ऐन्द्रास्त्रमर्जुनश्चापि तद्दृष्ट्वाभिन्यमन्त्रयत् ॥ ०४८ ॥

गाण्डीवं ज्यां च बाणांश्च अनुमन्त्र्य धनञ्जयः ।
असृजच्छरवर्षाणि वर्षाणीव पुरंदरः ॥ ०४९ ॥

ततस्तेजोमया बाणा रथात्पार्थस्य निःसृताः ।
प्रादुरासन्महावीर्याः कर्णस्य रथमन्तिकात् ॥ ०५० ॥

तान्कर्णस्त्वग्रतोऽभ्यस्तान्मोघांश्चक्रे महारथः ।
ततोऽब्रवीद्वृष्णिवीरस्तस्मिन्नस्त्रे विनाशिते ॥ ०५१ ॥

विसृजास्त्रं परं पार्थ राधेयो ग्रसते शरान् ।
ब्रह्मास्त्रमर्जुनश्चापि संमन्त्र्याथ प्रयोजयत् ॥ ०५२ ॥

छादयित्वा ततो बाणैः कर्णं प्रभ्राम्य चार्जुनः ।
तस्य कर्णः शरैः क्रुद्धश्चिच्छेद ज्यां सुतेजनैः ॥ ०५३ ॥

ततो ज्यामवधायान्यामनुमृज्य च पाण्डवः ।
शरैरवाकिरत्कर्णं दीप्यमानैः सहस्रशः ॥ ०५४ ॥

तस्य ज्याच्छेदनं कर्णो ज्यावधानं च संयुगे ।
नान्वबुध्यत शीघ्रत्वात्तदद्भुतमिवाभवत् ॥ ०५५ ॥

अस्त्रैरस्त्राणि राधेयः प्रत्यहन्सव्यसाचिनः ।
चक्रे चाभ्यधिकं पार्थात्स्ववीर्यं प्रतिदर्शयन् ॥ ०५६ ॥

ततः कृष्णोऽर्जुनं दृष्ट्वा कर्णास्त्रेणाभिपीडितम् ।
अभ्यस्येत्यब्रवीत्पार्थमातिष्ठास्त्रमनुत्तमम् ॥ ०५७ ॥

ततोऽन्यमग्निसदृशं शरं सर्पविषोपमम् ।
अश्मसारमयं दिव्यमनुमन्त्र्य धनञ्जयः ॥ ०५८ ॥

रौद्रमस्त्रं समादाय क्षेप्तुकामः किरीटवान् ।
ततोऽग्रसन्मही चक्रं राधेयस्य महामृधे ॥ ०५९ ॥

ग्रस्तचक्रस्तु राधेयः कोपादश्रूण्यवर्तयत् ।
सोऽब्रवीदर्जुनं चापि मुहूर्तं क्षम पाण्डव ॥ ०६० ॥

मध्ये चक्रमवग्रस्तं दृष्ट्वा दैवादिदं मम ।
पार्थ कापुरुषाचीर्णमभिसंधिं विवर्जय ॥ ०६१ ॥

प्रकीर्णकेशे विमुखे ब्राह्मणे च कृताञ्जलौ ।
शरणागते न्यस्तशस्त्रे तथा व्यसनगेऽर्जुन ॥ ०६२ ॥

अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा ।
न शूराः प्रहरन्त्याजौ न राज्ञे पार्थिवास्तथा ॥ ०६३ ॥

त्वं च शूरोऽसि कौन्तेय तस्मात्क्षम मुहूर्तकम्  ॥ ०६३  ॥

यावच्चक्रमिदं भूमेरुद्धरामि धनञ्जय ।
न मां रथस्थो भूमिष्ठमसज्जं हन्तुमर्हसि  ॥ ०६४  ॥

न वासुदेवात्त्वत्तो वा पाण्डवेय बिभेम्यहम्  ॥ ०६४  ॥

त्वं हि क्षत्रियदायादो महाकुलविवर्धनः ।
स्मृत्वा धर्मोपदेशं त्वं मुहूर्तं क्षम पाण्डव  ॥ ०६५  ॥

---

# कर्णवधः

## अध्याय ०६७

सञ्जय उवाच  ॥

अथाब्रवीद्वासुदेवो रथस्थो ; राधेय दिष्ट्या स्मरसीह धर्मम् ।
प्रायेण नीचा व्यसनेषु मग्ना ; निन्दन्ति दैवं कुकृतं न तत्तत्  ॥ ००१  ॥

यद्द्रौपदीमेकवस्त्रां सभाया ;मानाय्य त्वं चैव सुयोधनश्च ।
दुःशासनः शकुनिः सौबलश्च ; न ते कर्ण प्रत्यभात्तत्र धर्मः  ॥ ००२  ॥

यदा सभायां कौन्तेयमनक्षज्ञं युधिष्ठिरम् ।
अक्षज्ञः शकुनिर्जेता तदा धर्मः क्व ते गतः  ॥ ००३  ॥

यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम् ।
सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः  ॥ ००४  ॥

राज्यलुब्धः पुनः कर्ण समाह्वयसि पाण्डवम् ।
गान्धारराजमाश्रित्य क्व ते धर्मस्तदा गतः ॥ ००५ ॥

एवमुक्ते तु राधेये वासुदेवेन पाण्डवम् ।
मन्युरभ्याविशत्तीव्रः स्मृत्वा तत्तद्धनञ्जयम् ॥ ००६ ॥

तस्य क्रोधेन सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्चिषः ।
प्रादुरासन्महाराज तदद्भुतमिवाभवत् ॥ ००७ ॥

तं समीक्ष्य ततः कर्णो ब्रह्मास्त्रेण धनञ्जयम् ।
अभ्यवर्षत्पुनर्यत्नमकरोद्रथसर्जने ॥ ००८ ॥

तदस्त्रमस्त्रेणावार्य प्रजहारास्य पाण्डवः ॥ ००८ ॥

ततोऽन्यदस्त्रं कौन्तेयो दयितं जातवेदसः ।
मुमोच कर्णमुद्दिश्य तत्प्रजज्वाल वै भृशम् ॥ ००९ ॥

वारुणेन ततः कर्णः शमयामास पावकम् ।
जीमूतैश्च दिशः सर्वाश्चक्रे तिमिरदुर्दिनाः ॥ ०१० ॥

पाण्डवेयस्त्वसंभ्रान्तो वायव्यास्त्रेण वीर्यवान् ।
अपोवाह तदाभ्राणि राधेयस्य प्रपश्यतः ॥ ०११ ॥

तं हस्तिकक्ष्याप्रवरं च बाणैः ; सुवर्णमुक्तामणिवज्रमृष्टम् ।
कालप्रयत्नोत्तमशिल्पियत्नैः ; कृतं सुरूपं वितमस्कमुच्चैः ॥ ०१२ ॥

ऊर्जस्करं तव सैन्यस्य नित्य ;ममित्रवित्रासनमीड्यरूपम् ।
विख्यातमादित्यसमस्य लोके ; त्विषा समं पावकभानुचन्द्रैः ॥ ०१३ ॥

ततः क्षुरेणाधिरथेः किरीटी ; सुवर्णपुङ्खेन शितेन यत्तः ।

श्रिया ज्वलन्तं ध्वजमुन्ममाथ ; महारथस्याधिरथेर्महात्मा ॥ ०१४ ॥

यशश्च धर्मश्च जयश्च मारिष ; प्रियाणि सर्वाणि च तेन केतुना ।
तदा कुरूणां हृदयानि चापत ;न्बभूव हाहेति च निस्वनो महान् ॥ ०१५ ॥

अथ त्वरन्कर्णवधाय पाण्डवो ; महेन्द्रवज्रानलदण्डसंनिभम् ।
आदत्त पार्थोऽञ्जलिकं निषङ्गा ;त्सहस्ररश्मेरिव रश्मिमुत्तमम् ॥ ०१६ ॥

मर्मच्छिदं शोणितमांसदिग्धं ; वैश्वानरार्कप्रतिमं महार्हम् ।
नराश्वनागासुहरं त्र्यरत्निं ; षड्वाजमञ्जोगतिमुग्रवेगम् ॥ ०१७ ॥

सहस्रनेत्राशनितुल्यतेजसं ; समानक्रव्यादमिवातिदुःसहम् ।
पिनाकनारायणचक्रसंनिभं ; भयङ्करं प्राणभृतां विनाशनम् ॥ ०१८ ॥

युक्त्वा महास्त्रेण परेण मन्त्रवि ;द्विकृष्य गाण्डीवमुवाच सस्वनम् ।
अयं महास्त्रोऽप्रतिमो धृतः शरः ; शरीरभिच्चासुहरश्च दुर्हृदः ॥ ०१९ ॥

तपोऽस्ति तप्तं गुरवश्च तोषिता ; मया यदिष्टं सुहृदां तथा श्रुतम् ।
अनेन सत्येन निहन्त्वयं शरः ; सुदंशितः कर्णमरिं ममाजितः ॥ ०२० ॥

इत्यूचिवांस्तं स मुमोच बाणं ; धनञ्जयः कर्णवधाय घोरम् ।
कृत्यामथर्वाङ्गिरसीमिवोग्रां ; दीप्तामसह्यां युधि मृत्युनापि ॥ ०२१ ॥

ब्रुवन्किरीटी तमतिप्रहृष्टो ; अयं शरो मे विजयावहोऽस्तु ।
जिघांसुरर्केन्दुसमप्रभावः ; कर्णं समाप्तिं नयतां यमाय ॥ ०२२ ॥

तेनेषुवर्येण किरीटमाली ; प्रहृष्टरूपो विजयावहेन ।
जिघांसुरर्केन्दुसमप्रभेण ; चक्रे विषक्तं रिपुमाततायी ॥ ०२३ ॥

तदुद्यतादित्यसमानवर्चसं ; शरन्नभोमध्यगभास्करोपमम् ।
वराङ्गमुर्व्यामपतच्चमूपते ;र्दिवाकरोऽस्तादिव रक्तमण्डलः ॥ ०२४ ॥

तदस्य देही सततं सुखोदितं ; स्वरूपमत्यर्थमुदारकर्मणः ।
परेण कृच्छ्रेण शरीरमत्यज ;द्गृहं महर्द्धीव ससङ्गमीश्वरः ॥ ०२५ ॥

शरैर्विभुग्नं व्यसु तद्विवर्मणः ; पपात कर्णस्य शरीरमुच्छ्रितम् ।
स्रवद्व्रणं गैरिकतोयविस्रवं ; गिरेर्यथा वज्रहतं शिरस्तथा ॥ ०२६ ॥

देहात्तु कर्णस्य निपातितस्य ; तेजो दीप्तं खं विगाह्याचिरेण ।
तदद्भुतं सर्वमनुष्ययोधाः ; पश्यन्ति राजन्निहते स्म कर्णे ॥ ०२७ ॥

तं सोमकाः प्रेक्ष्य हतं शयानं ; प्रीता नादं सह सैन्यैरकुर्वन् ।
तूर्याणि चाजघ्नुरतीव हृष्टा ; वासांसि चैवादुधुवुर्भुजांश्च ॥ ०२८ ॥

बलान्विताश्चाप्यपरे ह्यनृत्य ;न्नन्योन्यमाश्लिष्य नदन्त ऊचुः ॥ ०२८ ॥

दृष्ट्वा तु कर्णं भुवि निष्टनन्तं ; हतं रथात्सायकेनावभिन्नम् ।
महानिलेनाग्निमिवापविद्धं ; यज्ञावसाने शयने निशान्ते ॥ ०२९ ॥

शरैराचितसर्वाङ्गः शोणितौघपरिप्लुतः ।
विभाति देहः कर्णस्य स्वरश्मिभिरिवांशुमान् ॥ ०३० ॥

प्रताप्य सेनामामित्रीं दीप्तैः शरगभस्तिभिः ।
बलिनार्जुनकालेन नीतोऽस्तं कर्णभास्करः ॥ ०३१ ॥

अस्तं गच्छन्यथादित्यः प्रभामादाय गच्छति ।
एवं जीवितमादाय कर्णस्येषुर्जगाम ह ॥ ०३२ ॥

अपराह्णे पराह्णस्य सूतपुत्रस्य मारिष ।
छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ॥ ०३३ ॥

उपर्युपरि सैन्यानां तस्य शत्रोस्तदञ्जसा ।

शिरः कर्णस्य सोत्सेधमिषुः सोऽपाहरद्द्रुतम्  ॥ ०३४  ॥

सञ्जय उवाच  ॥

कर्णं तु शूरं पतितं पृथिव्यां ; शराचितं शोणितदिग्धगात्रम् ।
दृष्ट्वा शयानं भुवि मद्रराज ;श्छिन्नध्वजेनापययौ रथेन  ॥ ०३५  ॥

कर्णे हते कुरवः प्राद्रवन्त ; भयार्दिता गाढविद्धाश्च संख्ये ।
अवेक्षमाणा मुहुरर्जुनस्य ; ध्वजं महान्तं वपुषा ज्वलन्तम्  ॥ ०३६  ॥

सहस्रनेत्रप्रतिमानकर्मणः ; सहस्रपत्रप्रतिमाननं शुभम् ।
सहस्ररश्मिर्दिनसङ्क्षये यथा ; तथापतत्तस्य शिरो वसुंधराम्  ॥ ०३७  ॥

---

# रणभूमिवर्णनम्

## अध्याय ०६८

सञ्जय उवाच  ॥

शल्यस्तु कर्णार्जुनयोर्विमर्दे ; बलानि दृष्ट्वा मृदितानि बाणैः ।
दुर्योधनं यान्तमवेक्षमाणो ; संदर्शयद्भारत युद्धभूमिम्  ॥ ००१  ॥

निपातितस्यन्दनवाजिनागं ; दृष्ट्वा बलं तद्धतसूतपुत्रम् ।
दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो ; मुहुर्मुहुर्न्यश्वसदार्तरूपः  ॥ ००२  ॥

कर्णं तु शूरं पतितं पृथिव्यां ; शराचितं शोणितदिग्धगात्रम् ।
यदृच्छया सूर्यमिवावनिस्थं ; दिदृक्षवः संपरिवार्य तस्थुः  ॥ ००३  ॥

प्रहृष्टवित्रस्तविषण्णविस्मृता ;स्तथापरे शोकगता इवाभवन् ।
परे त्वदीयाश्च परस्परेण ; यथा यथैषां प्रकृतिस्तथाभवन् ॥ ००४ ॥

प्रविद्धवर्माभरणाम्बरायुधं ; धनञ्जयेनाभिहतं हतौजसम् ।
निशम्य कर्णं कुरवः प्रदुद्रुवु ;र्हतर्षभा गाव इवाकुलाकुलाः ॥ ००५ ॥

कृत्वा विमर्दं भृशमर्जुनेन ; कर्णं हतं केसरिणेव नागम् ।
दृष्ट्वा शयानं भुवि मद्रराजो ; भीतोऽपसर्पत्सरथः सुशीघ्रम् ॥ ००६ ॥

मद्राधिपश्चापि विमूढचेता ;स्तूर्णं रथेनापहृतध्वजेन ।
दुर्योधनस्यान्तिकमेत्य शीघ्रं ; संभाष्य दुःखार्तमुवाच वाक्यम् ॥ ००७ ॥

विशीर्णनागाश्वरथप्रवीरं ; बलं त्वदियं यमराष्ट्रकल्पम् ।
अन्योन्यमासाद्य हतं महद्भि ;र्नराश्वनागैर्गिरिकूटकल्पैः ॥ ००८ ॥

नैतादृशं भारत युद्धमासी ;द्यथाद्य कर्णार्जुनयोर्बभूव ।
ग्रस्तौ हि कर्णेन समेत्य कृष्णा ;वन्ये च सर्वे तव शत्रवो ये ॥ ००९ ॥

दैवं तु यत्तत्स्ववशं प्रवृत्तं ; तत्पाण्डवान्पाति हिनस्ति चास्मान् ।
तवार्थसिद्ध्यर्थकरा हि सर्वे ; प्रसह्य वीरा निहता द्विषद्भिः ॥ ०१० ॥

कुबेरवैवस्वतवासवानां ; तुल्यप्रभावाम्बुपतेश्च वीराः ।
वीर्येण शौर्येण बलेन चैव ; तैस्तैश्च युक्ता विपुलैर्गुणौघैः ॥ ०११ ॥

अवध्यकल्पा निहता नरेन्द्रा ;स्तवार्थकामा युधि पाण्डवेयैः ।
तन्मा शुचो भारत दिष्टमेत ;त्पर्यायसिद्धिर्न सदास्ति सिद्धिः ॥ ०१२ ॥

एतद्वचो मद्रपतेर्निशम्य ; स्वं चापनीतं मनसा निरीक्ष्य ।
दुर्योधनो दीनमना विसञ्ज्ञः ; पुनः पुनर्न्यश्वसदार्तरूपः ॥ ०१३ ॥

तं ध्यानमूकं कृपणं भृशार्त ;मार्तायनिर्दीनमुवाच वाक्यम् ।
पश्येदमुग्रं नरवाजिनागै ;रायोधनं वीरहतैः प्रपन्नम् ॥ ०१४ ॥

महीधराभैः पतितैर्महागजैः ; सकृत्प्रविद्धैः शरविद्धमर्मभिः ।
तैर्विह्वलद्भिश्च गतासुभिश्च ; प्रध्वस्तयन्त्रायुधवर्मयोधैः ॥ ०१५ ॥

वज्रापविद्धैरिव चाचलेन्द्रै ;र्विभिन्नपाषाणमृगद्रुमौषधैः ।
प्रविद्धघण्टाङ्कुशतोमरध्वजैः ; सहेममालै रुधिरौघसंप्लुतैः ॥ ०१६ ॥

शरावभिन्नैः पतितैश्च वाजिभिः ; श्वसद्भिरन्यैः क्षतजं वमद्भिः ।
दीनैः स्तनद्भिः परिवृत्तनेत्रै ;र्महीं दशद्भिः कृपणं नदद्भिः ॥ ०१७ ॥

तथापविद्धैर्गजवाजियोधै ;र्मन्दासुभिश्चैव गतासुभिश्च ।
नराश्वनागैश्च रथैश्च मर्दितै ;र्मही महावैतरणीव दुर्दशा ॥ ०१८ ॥

गजैर्निकृत्तापरहस्तगात्रै ;रुद्वेपमानैः पतितैः पृथिव्याम् ।
यशस्विभिर्नागरथाश्वयोधिभिः ; पदातिभिश्चाभिमुखैर्हतैः परैः ॥ ०१९ ॥

विशीर्णवर्माभरणाम्बरायुधै ;र्वृता निशान्तैरिव पावकैर्मही ॥ ०१९ ॥

शरप्रहाराभिहतैर्महाबलै ;रवेक्ष्यमाणैः पतितैः सहस्रशः ।
प्रनष्टसञ्ज्ञैः पुनरुच्छ्वसद्भि ;र्मही बभूवानुगतैरिवाग्निभिः ॥ ०२० ॥

दिवश्च्युतैर्भूरतिदीप्तिमद्भि ;र्नक्तं ग्रहैर्द्यौरमलेव दीप्तैः ॥ ०२० ॥

शरास्तु कर्णार्जुनबाहुमुक्ता ; विदार्य नागाश्वमनुष्यदेहान् ।
प्राणान्निरस्याशु महीमतीयु ;र्महोरगा वासमिवाभितोऽस्त्रैः ॥ ०२१ ॥

हतैर्मनुष्याश्वगजैश्च संख्ये ; शरावभिन्नैश्च रथैर्बभूव ।
धनञ्जयस्याधिरथेश्च मार्गे ; गजैरगम्या वसुधातिदुर्गा ॥ ०२२ ॥

रथैर्वरेषून्मथितैश्च योधैः ; संस्यूतसूताश्ववरायुधध्वजैः ।
विशीर्णशस्त्रैर्विनिकृत्तबन्धुरैः ;र्निकृत्तचक्राक्षयुगत्रिवेणुभिः ॥ ०२३ ॥

विमुक्तयन्त्रैर्निहतैरयस्मयैः ;र्हतानुषङ्गैर्विनिषङ्गबन्धुरैः ।
प्रभग्ननीडैर्मणिहेममण्डितैः ; स्तृता मही द्यौरिव शारदैर्घनैः ॥ ०२४ ॥

विकृष्यमणैर्जवनैरलङ्कृतैः ;र्हतेश्वरैराजिरथैः सुकल्पितैः ।
मनुष्यमातङ्गरथाश्वराशिभिः ;र्द्रुतं व्रजन्तो बहुधा विचूर्णिताः ॥ ०२५ ॥

सहेमपट्टाः परिघाः परश्वधाः ; कडङ्गरायोमुसलानि पट्टिशाः ।
पेतुश्च खड्गा विमला विकोशा ; गदाश्च जाम्बूनदपट्टबद्धाः ॥ ०२६ ॥

चापानि रुक्माङ्गदभूषणानि ; शराश्च कार्तस्वरचित्रपुङ्खाः ।
ऋष्ट्यश्च पीता विमला विकोशाः ; प्रासाः सखड्गाः कनकावभासाः ॥ ०२७ ॥

छत्राणि वालव्यजनानि शङ्खाः ; स्रजश्च पुष्पोत्तमहेमचित्राः ।
कुथाः पताकाम्बरवेष्टिताश्च ; किरीटमाला मुकुटाश्च शुभ्राः ॥ ०२८ ॥

प्रकीर्णका विप्रकीर्णाः कुथाश्च ; प्रधानमुक्तातरलाश्च हाराः ।
आपीडकेयूरवराङ्गदानि ; ग्रैवेयनिष्काः ससुवर्णसूत्राः ॥ ०२९ ॥

मण्युत्तमा वज्रसुवर्णमुक्ता ; रत्नानि चोच्चावचमङ्गलानि ।
गात्राणि चात्यन्तसुखोचितानि ; शिरांसि चेन्दुप्रतिमाननानि ॥ ०३० ॥

देहांश्च भोगांश्च परिच्छदांश्च ; त्यक्त्वा मनोज्ञानि सुखानि चापि ।
स्वधर्मनिष्ठां महतीमवाप्य ; व्याप्तांश्च लोकान्यशसा समीयुः ॥ ०३१ ॥

इत्येवमुक्त्वा विरराम शल्यो ; दुर्योधनः शोकपरीतचेताः ।
हा कर्ण हा कर्ण इति ब्रुवाण ; आर्तो विसञ्ज्ञो भृशमश्रुनेत्रः ॥ ०३२ ॥

तं द्रोणपुत्रप्रमुखा नरेन्द्राः ; सर्वे समाश्वास्य सह प्रयान्ति ।

निरीक्षमाणा मुहुरर्जुनस्य ; ध्वजं महान्तं यशसा ज्वलन्तम्  ॥ ०३३  ॥

नराश्वमातङ्गशरीरजेन ; रक्तेन सिक्ता रुधिरेण भूमिः ।
रक्ताम्बरस्त्रक्तपनीययोगा ;न्नारी प्रकाशा इव सर्वगम्या  ॥ ०३४  ॥

प्रच्छन्नरूपा रुधिरेण राज ;न्रौद्रे मुहूर्तेऽतिविराजमानाः ।
नैवावतस्थुः कुरवः समीक्ष्य ; प्रव्राजिता देवलोकाश्च सर्वे  ॥ ०३५  ॥

वधेन कर्णस्य सुदुःखितास्ते ; हा कर्ण हा कर्ण इति ब्रुवाणाः ।
द्रुतं प्रयाताः शिबिराणि राज ;न्दिवाकरं रक्तमवेक्षमाणाः  ॥ ०३६  ॥

गाण्डीवमुक्तैस्तु सुवर्णपुङ्खैः ; शितैः शरैः शोणितदिग्धवाजैः ।
शरैश्चिताङ्गो भुवि भाति कर्णो ; हतोऽपि सन्सूर्य इवांशुमाली  ॥ ०३७  ॥

कर्णस्य देहं रुधिरावसिक्तं ; भक्तानुकम्पी भगवान्विवस्वान् ।
स्पृष्ट्वा करैर्लोहितरक्तरूपः ; सिष्णासुरभ्येति परं समुद्रम्  ॥ ०३८  ॥

इतीव सञ्चिन्त्य सुरर्षिसंघाः ; संप्रस्थिता यान्ति यथानिकेतम् ।
सञ्चिन्तयित्वा च जना विसस्रु ;र्यथासुखं खं च महीतलं च  ॥ ०३९  ॥

तदद्भुतं प्राणभृतां भयङ्करं ; निशम्य युद्धं कुरुवीरमुख्ययोः ।
धनञ्जयस्याधिरथेश्च विस्मिताः ; प्रशंसमानाः प्रययुस्तदा जनाः  ॥ ०४०  ॥

शरैः सङ्कृत्तवर्माणं वीरं विशसने हतम् ।
गतासुमपि राधेयं नैव लक्ष्मीर्व्यमुञ्चत  ॥ ०४१  ॥

नानाभरणवान्राजन्मृष्टजाम्बूनदाङ्गदः ।
हतो वैकर्तनः शेते पादपोऽङ्कुरवानिव  ॥ ०४२  ॥

कनकोत्तमसङ्काशः प्रदीप्त इव पावकः ।
सपुत्रः पुरुषव्याघ्रः संशान्तः पार्थतेजसा  ॥ ०४३  ॥

प्रताप्य पाण्डवान्राजन्पाञ्चालांश्चास्त्रतेजसा ॥ ०४३ ॥

ददानीत्येव योऽवोचन्न नास्तीत्यर्थितोऽर्थिभिः ।
सद्भिः सदा सत्पुरुषः स हतो द्वैरथे वृषः ॥ ०४४ ॥

यस्य ब्राह्मणसात्सर्वमात्मार्थं न महात्मनः ।
नादेयं ब्राह्मणेष्वासीद्यस्य स्वमपि जीवितम् ॥ ०४५ ॥

सदा नृणां प्रियो दाता प्रियदानो दिवं गतः ।
आदाय तव पुत्राणां जयाशां शर्म वर्म च ॥ ०४६ ॥

हते स्म कर्णे सरितो न स्रवन्ति ; जगाम चास्तं कलुषो दिवाकरः ।
ग्रहश्च तिर्यग्ज्वलितार्कवर्णो ; यमस्य पुत्रोऽभ्युदियाय राजन् ॥ ०४७ ॥

नभः पफालाथ ननाद चोर्वी ; ववुश्च वाताः परुषातिवेलम् ।
दिशः सधूमाश्च भृशं प्रजज्वलु ;र्महार्णवाश्चुक्षुभिरे च सस्वनाः ॥ ०४८ ॥

सकाननाः साद्रिचयाश्चकम्पुः ; प्रविव्यथुर्भूतगणाश्च मारिष ।
बृहस्पती रोहिणीं संप्रपीड्य ; बभूव चन्द्रार्कसमानवर्णः ॥ ०४९ ॥

हते कर्णे न दिशो विप्रजज्ञु ;स्तमोवृता द्यौर्विचचाल भूमिः ।
पपात चोल्का ज्वलनप्रकाशा ; निशाचराश्चाप्यभवन्प्रहृष्टाः ॥ ०५० ॥

शशिप्रकाशाननमर्जुनो यदा ; क्षुरेण कर्णस्य शिरो न्यपातयत् ।
अथान्तरिक्षे दिवि चेह चासकृ ;द्बभूव हाहेति जनस्य निस्वनः ॥ ०५१ ॥

स देवगन्धर्वमनुष्यपूजितं ; निहत्य कर्णं रिपुमाहवेऽर्जुनः ।
रराज पार्थः परमेण तेजसा ; वृत्रं निहत्येव सहस्रलोचनः ॥ ०५२ ॥

ततो रथेनाम्बुदवृन्दनादिना ; शरन्नभोमध्यगभास्करत्विषा ।

पताकिना भीमनिनादकेतुना ; हिमेन्दुशङ्खस्फटिकावभासिना ॥ ०५३ ॥

सुवर्णमुक्तामणिवज्रविद्रुमै ;रलङ्कृतेनाप्रतिमानरंहसा ॥ ०५३ ॥

नरोत्तमौ पाण्डवकेशिमर्दना ;वुदाहितावग्निदिवाकरोपमौ ।
रणाजिरे वीतभयौ विरेजतुः ; समानयानाविव विष्णुवासवौ ॥ ०५४ ॥

ततो धनुर्ज्यातलनेमिनिस्वनैः ; प्रसह्य कृत्वा च रिपून्हतप्रभान् ।
संसाधयित्वैव कुरूञ्शरौघैः ; कपिध्वजः पक्षिवरध्वजश्च ॥ ०५५ ॥

प्रसह्य शङ्खौ धमतुः सुघोषौ ; मनांस्यरीणामवसादयन्तौ ॥ ०५५ ॥

सुवर्णजालावततौ महास्वनौ ; हिमावदातौ परिगृह्य पाणिभिः ।
चुचुम्बतुः शङ्खवरौ नृणां वरौ ; वराननाभ्यां युगपच्च दध्मतुः ॥ ०५६ ॥

पाञ्चजन्यस्य निर्घोषो देवदत्तस्य चोभयोः ।
पृथिवीमन्तरिक्षं च द्यामपश्चाप्यपूरयत् ॥ ०५७ ॥

तौ शङ्खशब्देन निनादयन्तौ ; वनानि शैलान्सरितो दिशश्च ।
वित्रासयन्तौ तव पुत्रसेनां ; युधिष्ठिरं नन्दयतः स्म वीरौ ॥ ०५८ ॥

ततः प्रयाताः कुरवो जवेन ; श्रुत्वैव शङ्खस्वनमीर्यमाणम् ।
विहाय मद्राधिपतिं पतिं च ; दुर्योधनं भारत भारतानाम् ॥ ०५९ ॥

महाहवे तं बहु शोभमानं ; धनञ्जयं भूतगणाः समेताः ।
तदान्वमोदन्त जनार्दनं च ; प्रभाकरावभ्युदितौ यथैव ॥ ०६० ॥

समाचितौ कर्णशरैः परंतपा ;वुभौ व्यभातां समरेऽच्युतार्जुनौ ।
तमो निहत्याभ्युदितौ यथामलौ ; शशाङ्कसूर्याविव रश्मिमालिनौ ॥ ०६१ ॥

विहाय तान्बाणगणानथागतौ ; सुहृद्वृतावप्रतिमानविक्रमौ ।

सुखं प्रविष्टौ शिबिरं स्वमीश्वरौ ; सदस्यहूताविव वासवाच्युतौ ॥ ०६२ ॥

सदेवगन्धर्वमनुष्यचारणै ;र्महर्षिभिर्यक्षमहोरगैरपि ।
जयाभिवृध्या परयाभिपूजितौ ; निहत्य कर्णं परमाहवे तदा ॥ ०६३ ॥

---

# युधिष्ठिरानन्दः

## अध्याय ०६९

सञ्जय उवाच ॥

तथा निपातिते कर्णे तव सैन्ये च विद्रुते ।
आश्लिष्य पार्थं दाशार्हो हर्षाद्वचनमब्रवीत् ॥ ००१ ॥

हतो बलभिदा वृत्रस्त्वया कर्णो धनञ्जय ।
वधं वै कर्णवृत्राभ्यां कथयिष्यन्ति मानवाः ॥ ००२ ॥

वज्रिणा निहतो वृत्रः संयुगे भूरितेजसा ।
त्वया तु निहतः कर्णो धनुषा निशितैः शरैः ॥ ००३ ॥

तमिमं विक्रमं लोके प्रथितं ते यशोवहम् ।
निवेदयावः कौन्तेय धर्मराजाय धीमते ॥ ००४ ॥

वधं कर्णस्य सङ्ग्रामे दीर्घकालचिकीर्षितम् ।
निवेद्य धर्मराजस्य त्वमानृण्यं गमिष्यसि ॥ ००५ ॥

तथेत्युक्ते केशवस्तु पार्थेन यदुपुङ्गवः ।

पर्यवर्तयदव्यग्रो रथं रथवरस्य तम्  ॥ ००६  ॥

धृष्टद्युम्नं युधामन्युं माद्रीपुत्रौ वृकोदरम् ।
युयुधानं च गोविन्द इदं वचनमब्रवीत्  ॥ ००७  ॥

परानभिमुखा यत्तास्तिष्ठध्वं भद्रमस्तु वः ।
यावदावेद्यते राज्ञे हतः कर्णोऽर्जुनेन वै  ॥ ००८  ॥

स तैः शूरैरनुज्ञातो ययौ राजनिवेशनम् ।
पार्थमादाय गोविन्दो ददर्श च युधिष्ठिरम्  ॥ ००९  ॥

शयानं राजशार्दूलं काञ्चने शयनोत्तमे ।
अगृह्णीतां च चरणौ मुदितौ पार्थिवस्य तौ  ॥ ०१०  ॥

तयोः प्रहर्षमालक्ष्य प्रहारांश्चातिमानुषान् ।
राधेयं निहतं मत्वा समुत्तस्थौ युधिष्ठिरः  ॥ ०११  ॥

ततोऽस्मै तद्यथावृत्तं वासुदेवः प्रियंवदः ।
कथयामास कर्णस्य निधनं यदुनन्दनः  ॥ ०१२  ॥

ईषदुत्स्मयमानस्तु कृष्णो राजानमब्रवीत् ।
युधिष्ठिरं हतामित्रं कृताञ्जलिरथाच्युतः  ॥ ०१३  ॥

दिष्ट्या गाण्डीवधन्वा च पाण्डवश्च वृकोदरः ।
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ  ॥ ०१४  ॥

मुक्ता वीरक्षयादस्मात्सङ्ग्रामाल्लोमहर्षणात् ।
क्षिप्रमुत्तरकालानि कुरु कार्याणि पार्थिव  ॥ ०१५  ॥

हतो वैकर्तनः क्रूरः सूतपुत्रो महाबलः ।
दिष्ट्या जयसि राजेन्द्र दिष्ट्या वर्धसि पाण्डव  ॥ ०१६  ॥

यः स द्यूतजितां कृष्णां प्राहसत्पुरुषाधमः ।
तस्याद्य सूतपुत्रस्य भूमिः पिबति शोणितम्  ॥ ०१७  ॥

शेतेऽसौ शरदीर्णाङ्गः शत्रुस्ते कुरुपुङ्गव ।
तं पश्य पुरुषव्याघ्र विभिन्नं बहुधा शरैः  ॥ ०१८  ॥

युधिष्ठिरस्तु दाशार्हं प्रहृष्टः प्रत्यपूजयत् ।
दिष्ट्या दिष्ट्येति राजेन्द्र प्रीत्या चेदमुवाच ह  ॥ ०१९  ॥

नैतच्चित्रं महाबाहो त्वयि देवकिनन्दन ।
त्वया सारथिना पार्थो यत्कुर्यादद्य पौरुषम्  ॥ ०२०  ॥

प्रगृह्य च कुरुश्रेष्ठः साङ्गदं दक्षिणं भुजम् ।
उवाच धर्मभृत्पार्थ उभौ तौ केशवार्जुनौ  ॥ ०२१  ॥

नरनारायणौ देवौ कथितौ नारदेन ह ।
धर्मसंस्थापने युक्तौ पुराणौ पुरुषोत्तमौ  ॥ ०२२  ॥

असकृच्चापि मेधावी कृष्णद्वैपायनो मम ।
कथामेतां महाबाहो दिव्यामकथयत्प्रभुः  ॥ ०२३  ॥

तव कृष्ण प्रभावेण गाण्डीवेन धनञ्जयः ।
जयत्यभिमुखाञ्शत्रून्न चासीद्विमुखः क्वचित्  ॥ ०२४  ॥

जयश्चैव ध्रुवोऽस्माकं न त्वस्माकं पराजयः ।
यदा त्वं युधि पार्थस्य सारथ्यमुपजग्मिवान्  ॥ ०२५  ॥

एवमुक्त्वा महाराज तं रथं हेमभूषितम् ।
दन्तवर्णैर्हयैर्युक्तं कालवालैर्महारथः  ॥ ०२६  ॥

आस्थाय पुरुषव्याघ्रः स्वबलेनाभिसंवृतः ।
कृष्णार्जुनाभ्यां वीराभ्यामनुमन्य ततः प्रियम्  ॥ ०२७  ॥

आगतो बहुवृत्तान्तं द्रष्टुमायोधनं तदा ।
आभाषमाणस्तौ वीरावुभौ माधवफल्गुनौ  ॥ ०२८  ॥

स ददर्श रणे कर्णं शयानं पुरुषर्षभम् ।
गाण्डीवमुक्तैर्विशिखैः सर्वतः शकलीकृतम्  ॥ ०२९  ॥

सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ।
प्रशशंस नरव्याघ्रावुभौ माधवपाण्डवौ  ॥ ०३०  ॥

अद्य राजास्मि गोविन्द पृथिव्यां भ्रातृभिः सह ।
त्वया नाथेन वीरेण विदुषा परिपालितः  ॥ ०३१  ॥

हतं दृष्ट्वा नरव्याघ्रं राधेयमभिमानिनम् ।
निराशोऽद्य दुरात्मासौ धार्तराष्ट्रो भविष्यति  ॥ ०३२  ॥

जीविताच्चापि राज्याच्च हते कर्णे महारथे  ॥ ०३२  ॥

त्वत्प्रसादाद्वयं चैव कृतार्थाः पुरुषर्षभ ।
त्वं च गाण्डीवधन्वा च विजयी यदुनन्दन  ॥ ०३३  ॥

दिष्ट्या जयसि गोविन्द दिष्ट्या कर्णो निपातितः  ॥ ०३३  ॥

एवं स बहुशो हृष्टः प्रशशंस जनार्दनम् ।
अर्जुनं चापि राजेन्द्र धर्मराजो युधिष्ठिरः  ॥ ०३४  ॥

ततो भीमप्रभृतिभिः सर्वैश्च भ्रातृभिर्वृतम् ।
वर्धयन्ति स्म राजानं हर्षयुक्ता महारथाः  ॥ ०३५  ॥

नकुलः सहदेवश्च पाण्डवश्च वृकोदरः ।
सात्यकिश्च महाराज वृष्णीनां प्रवरो रथः ॥ ०३६ ॥

धृष्टद्युम्नः शिखण्डी च पाण्डुपाञ्चालसृञ्जयाः ।
पूजयन्ति स्म कौन्तेयं निहते सूतनन्दने ॥ ०३७ ॥

ते वर्धयित्वा नृपतिं पाण्डुपुत्रं युधिष्ठिरम् ।
जितकाशिनो लब्धलक्षा युद्धशौण्डाः प्रहारिणः ॥ ०३८ ॥

स्तुवन्तः स्तवयुक्ताभिर्वाग्भिः कृष्णौ परंतपौ ।
जग्मुः स्वशिबिरायैव मुदा युक्ता महारथाः ॥ ०३९ ॥

एवमेष क्षयो वृत्तः सुमहा.ण्ल्लोमहर्षणः ।
तव दुर्मन्त्रिते राजन्नतीतं किं नु शोचसि ॥ ०४० ॥

वैशंपायन उवाच ॥

श्रुत्वा तदप्रियं राजन्धृतराष्ट्रो महीपतिः ।
पपात भूमौ निश्चेष्टः कौरव्यः परमार्तिवान् ॥ ०४१ ॥

तथा सत्यव्रता देवी गान्धारी धर्मदर्शिनी ॥ ०४१ ॥

तं प्रत्यगृह्णाद्विदुरो नृपतिं सञ्जयस्तथा ।
पर्याश्वासयतश्चैवं तावुभावेव भूमिपम् ॥ ०४२ ॥

तथैवोत्थापयामासुर्गान्धारीं राजयोषितः ।
ताभ्यामाश्वासितो राजा तूष्णीमासीद्विचेतनः ॥ ०४३ ॥